# BUDDHIST TEXTS

OF THE

## NORTHERN AND SOUTHERN SCHOOLS

PUBLISHED BY THE

## BUDDHIST TEXT SOCIETY OF INDIA.




# माध्यमिका वृत्तिः ।

# MADHYAMIKÁ VRITTI

BY

ACHARYA CHANDRA KIRTTI.

FOR THE FIRST TIME EDITED BY

*Rai* ÇARAT CHANDRA DAS, *Bahadur*, C.I.E.

AND

*Pandit* ÇARAT CHANDRA ÇASTRI.

FASC. IV.

1897.



CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS.

*Publishers:—Messrs. Kegan Paul, Trench, Trübner & Co., Luzac & Co., London.*

*Continental Agents:—Messrs. Otto Harrassowitz, M. Spirgatis, Leipzig.*

86-2, JAUN BAZAR STREET, CALCUTTA.

# MÁDHYAMIKÁ VṚITTI.

# माध्यमिका वृत्तिः।

ॐ नमः श्रीवज्रसत्त्वाय।

ॐ नमो रत्नत्रयाय।

...थावासविधूतवासः सम्बुद्धधीसागरलब्धजन्मा।
...यस्य गभीरभावं यथानुबुद्धं कृपया जगाद॥१॥

...मतेन्धांसि परप्रवादिमतेन्धनम्।
...यापि लोकस्य नाशयानि तमांसि च॥२॥

... सज्ज्ञानवचःशरौघाः भिन्दन्ति निःशेषभवारिसेनाम्।
... पुराज्यश्रियमाद्दधाना विनेयलोकस्य सदेवकस्य॥३॥

...नाय प्रणिपत्य मूर्ध्ना तत्कारिकाणां विवृतिं करिष्ये।
...सत्प्रक्रियवाक्यनद्धां तर्कानिलाव्याकुलितामसन्नाम्॥४॥

...नापि परतो न द्वाभ्यामित्यादि वक्ष्यमाणं शास्त्रम्, तस्य कानि सम्बन्धा-
...ति प्रश्ने मध्यमकावतारविहितविधिना अद्वयज्ञानालङ्कृतं महाकरुणोपाय-
...तोत्पादं तथागतज्ञानोत्पत्तिहेतुमादिं कृत्वा यावदाचार्य्यनागार्जुनस्य
...प्रज्ञापारमितानीतेः करुणया परावबोधार्थं शास्त्रप्रणयनमित्येष तावत्
...ः।

...ास्ति यः ...रिपूनशेषान् सन्त्रायते दुर्गतितो भवाच्च।
...शमनात् त्राणगुणाच्च शास्त्रमेतत् द्वयञ्चान्यमतेषु नास्ति॥५॥

...ो वक्ष्यमाणसकलशास्त्राभिधेयार्थं प्रयोजनमुपदर्शयन् तदविपरीतसम्प्र...
...यमुद्भाव्य तत्स्वभावाव्यतिरेकवर्त्तिने परमगुरवे तथागताय शास्त्रप्रणय...
... कर्त्तुकाम आह।

अनिरोधमनुत्पादमनुच्छेदमशाश्वतं।
अनेकार्थमनानार्थमनागममनिर्गमं॥
यः प्रतीत्य समुत्पादमित्यादि।



तदत्रानिरोधाद्यष्टविशेषणविशिष्टः प्रतीत्यसमुत्पादः शास्तुरभिधेयार्थः । सर्व्वप्रपञ्चोप शमशिवलक्षणं निर्व्वाणं शास्त्रस्य प्रयोजनं निर्द्दिष्टम् । तं वन्दे वदताम्बरमित्यनेन प्रणामः इत्येष तावत् श्लोकद्वयस्य समुदायार्थः । अवयवार्थस्तु विभज्यते ।

तत्र निरुद्धिर्निरोधः क्षणभङ्गोनिरोध इत्युच्यते ।

उत्पादनमुत्पादः आत्मभावोन्मज्जनं उच्छित्तिरुच्छेदः प्रबन्धविच्छित्तिरित्यर्थः । शाश्वतं नित्यः सर्व्वकालस्थायुरित्यर्थः । एकश्चासावर्थश्चेति एकार्थः अभिन्नार्थः न पृथगित्यर्थः । नानार्थो भिन्नार्थः पृथगित्यर्थः । आगतिरागमः विप्रकृष्टदेशावस्थितानां सन्निकृष्टदेशागमनं । निर्गतिर्निर्गमः सन्निकृष्टदेशावस्थितानां विप्रकृष्टदेशगमनं ।

एतिर्गत्यर्थः प्रतिः प्राप्त्यर्थः । उपसर्गवशेन धात्वर्थविपरिणामात् –

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।
गङ्गासलिलमाधुर्य्यं सागरेण यथांहसेति ॥

प्रतीत्यशब्दोऽत्र ल्यबन्तः* प्राप्तावपेक्षायां वर्त्तते ।

समुत्पूर्व्वः पदिः प्रादुर्भावार्थइति समुत्पादशब्दः [illegible] । ततश्च हेतुप्रत्यया- पेक्षाभावानामुत्पादः प्रतीत्यसमुत्पादार्थः ।

अपरे तु ब्रुवते इतिर्गतिर्गमनं विनाशः, इतौ [illegible] वीप्सार्थः । इत्येवं तद्धितान्तं इत्यशब्दं व्युत्पाद्य प्रति प्रति इत्यानां वि[illegible] प्रतीत्यसमुत्पाद इति वर्णयन्ति ।

तेषां [illegible]त्यसमुत्पादं बोधिभिक्षवो देशयिष्यामि । यः प्रतीत्यसमुत्पादं पश्यति स धर्म्मं पश्यति इत्येवमादौ विषये वीप्सार्थस्य सम्भवात् ।

इह तु चक्षुः प्रतीत्य रूपाणि चोत्पद्यन्ते चक्षुर्व्विज्ञानमित्येवमादौ विषये साक्षादङ्गीकृतार्थविशेषे चक्षुः प्रतीत्येति प्रतीत्यशब्दः एकचक्षुरिन्द्रियहेतुकायामप्येकविज्ञानोत्पत्ताव- भीष्टायां कुतो वीप्सार्थता । प्राप्त्यर्थस्त्वनङ्गीकृतार्थविशेषेऽपि प्रतीत्यशब्दे सम्भवति प्राप्य- सम्भवः प्रतीत्यसमुत्पादः इति अङ्गीकृतार्थविषयेऽपि सम्भवति । चक्षुः प्रतीत्य चक्षुः प्राप्य चक्षुः प्रेक्ष्येति व्याख्यानात् । तद्धितान्ते च शब्दे चक्षुः प्रतीत्य रूपाणि चोत्पद्यन्ते चक्षु- र्व्विज्ञानमित्यत्र प्रतीत्यशब्दस्याव्ययत्वाभावात् समासासद्भावाच्च विभक्तिश्रुतौ सत्यां चक्षुः प्रतीत्य विज्ञानं रूपाणि चेति निपातः स्यात् । न चैतदेवमित्यव्ययस्य ल्यबन्तस्य व्युत्पत्ति- रभ्युपेया । यद्वा- वीप्सार्थत्वात् प्रत्युपसर्गस्य एतेः प्राप्त्यर्थत्वात् समुत्पादशब्दस्य च सम्भ- वार्थत्वात् तांस्तान् प्रत्ययान् प्रतीत्य समुत्पादः प्राप्यसम्भव इत्येके ।

प्रति प्रति विनाशिनामुत्पादः प्रतीत्यसमुत्पाद इत्यन्ये । इति परव्याख्यानमनूद्य दूषयति ।

तस्य परोक्तानुवादाकौशलमेव तावत् सम्भाव्यते किं कारणं? यो हि प्राप्त्यर्थं प्रतीत्यशब्दं व्याचष्टे नासौ प्रतिं वीप्सार्थं व्याचष्टे किं तर्हि प्रतिं प्राप्त्यर्थं एतिञ्च गत्यर्थं समुदितं प्राप्त्यर्थं

* Original "इत्यबन्तः" ।

प्रतीत्यशब्दं प्राप्ताविव वर्णयन्ति । तेनेदानीं प्राप्य सम्भवः प्रतीत्यसमुत्पाद इत्येवं ... न प्रतीत्यसमुत्पादशब्देन यदि निर्विशेषसम्भविपदार्थपरामर्शो विवक्षितः तदा ... प्रत्ययसामग्रीं प्राप्य सम्भवः प्रतीत्यसमुत्पाद इति वीप्सासम्बन्धः क्रियते । ... विशेषपरामर्शस्तदा चक्षुः प्राप्य रूपाणि चेति न वीप्सायाः सम्बन्ध इति । एवं ... कौशलमाचार्य्यस्य । एतद्वा युक्तं किम्वायुक्तमेतत् । चक्षुः प्रतीत्य रूपाणि ... चक्षुर्विज्ञानमित्यत्राह । याथार्थ्याभिसम्भवादितिवेति, यदुक्तं दूषणम् । तदपि ... । किं कारणं कथं नु च तत्प्राप्तिसम्भव इति युक्त्यनुपादानेन प्रतिज्ञामात्र-... अयमभिप्रायः स्यात् अरूपित्वात् विज्ञानस्य चक्षुषा प्राप्तिर्नास्ति रूपिणामेव च ... आदित्यादावपि न युक्तं । प्राप्तफलोऽयं भिक्षुरित्यत्रापि प्राप्त्यभ्युपगमात् । प्राप्यशब्दस्य ... पित्वात् प्राप्त्यर्थस्यैवाचार्य्यनागार्जुनेन प्रतीत्यशब्दस्य तत्तत्प्राप्य यद्यदुत्पन्नं तत्तत्-... त्यभ्युपगमात् दूषणमप्युपपद्यते इत्यपरे ।

... स्वमतं व्यवस्थापितं किन्तर्हि अस्मिन् सतीदं भवति अस्योत्पादादिदमुत्पद्यते । ... यतोऽर्थः प्रतीत्य ... पादार्थ इति तदपि नोपपद्यते । प्रतीत्यसमुत्पादशब्दयोः ... विशेषानभिधानात् । ... समुत्पादस्य च विवक्षितत्वात् ।

... रूढिशब्दं प्रतीत्यसमुत्पादशब्दमभ्युपेत्यारण्यमिति तिलकादिवदेवमुच्यते तदपि ... । यथार्थानुगतस्यैव प्रतीत्यसमुत्पादस्य आचार्य्येण तत्तत्प्राप्य यदुत्पन्नं नोत्पन्नं तत्-... यत्राभ्युपगमात् ।

... न् सतीदं भवति ह्रस्वे दीर्घं यथा सतीति व्याख्यायमानेन ... देवाभ्युपगतं ... स्वं प्रतीत्य ह्रस्वं प्राप्य ह्रस्वमपेक्ष्य दीर्घो भवति । ततश्च यदेव दूष्यते तदेवा-... न युज्यते । इत्यलं प्रसङ्गेन ।

... प्रत्ययापेक्षं भावानामुत्पादं परिदीपयता भगवता अहेत्वेकहेतुविषमहेतुसम्भूतत्वं ... कृतत्वं च भावानां निषिद्धं भवति । तन्निषेधात् संवृतानां पदार्थानां यथावस्थितं ... समुद्भावितं भवति स एवेदानीं संवृतः प्रतीत्यसमुत्पादः स्वभावेनानुत्पन्नत्वात् । ... तया नास्मिन्निरोधो वर्त्तते इत्यनिरोधादिभिरष्टाभिर्विशेषणैः विशिष्यते । यथाच ... न सन्ति प्रतीत्यसमुत्पादस्य तथा सकलशास्त्रेण प्रतिपादयिष्यते । अनन्त-... त्वेऽपि प्रतीत्यसमुत्पादस्य अष्टानामेवोपादानमेषां प्राधान्येन विवादाङ्गभूतत्वात् । ... प्रतीत्यसमुत्पाददर्शने सत्याचार्य्याणामभिधेयादिलक्षणस्य प्रपञ्चस्य सर्व्वथोप-... प्रपञ्चानामुपशमोऽस्मिन्निति स एव प्रतीत्यसमुत्पादः प्रपञ्चोपशमः इत्युच्यते । ... तस्मिन्नप्रवृत्तौ ज्ञानज्ञेयव्यवहारनिवृत्तौ जातिजरामरणादिनिरवशेषोपद्रव-... शिवः । यथाभिहितविशेषणस्य प्रतीत्यसमुत्पादे देशनाक्रियया ईप्सिततम-... निर्देशः ।

अनिरोधमनुत्पादमनुच्छेदमशाश्वतं ।
अनेकार्थमनानार्थमनागममनिर्गमम् ॥

यः प्रतीत्यसमुत्पादं प्रपञ्चोपशमं शिवम् ।
देशयामास सम्बुद्धस्तं वन्दे वदताम्बरम् इति ॥

यथोपवर्णितप्रतीत्यसमुत्पादावगमाच्च तथागतस्यैवैकस्याविपरीतार्थवादित्वं पश्यन् सर्व्व-परप्रवादांश्च बालप्रलापानिवावेत्यातीवप्रसादानुगत आचार्य्यो भूयो भगवन्तम्विशेषयति । वदताम्वरमिति । अत्र च निरोधस्य पूर्व्वं प्रतिषेध उत्पादनिरोधयोः पौर्व्वापर्य्याव्यवस्थायाः सिद्धभावं द्योतयितुम्वक्ष्यति हि पूर्व्वं जातिर्यदिभवेज्जरामरणम् । निर्जरामरणा जाति-र्भवेत् जायेत वा मृत इति । तस्मान्नायन्नियमो यत् पूर्व्वमुत्पादेन भवितव्यं पश्चान्नि-रोधेनेति । इदानीमनिरोधादिविशिष्टप्रतीत्यसमुत्पादप्रतिपिपादयिषया उत्पादप्रतिषेधेन निरोधादिप्रतिषेधे सौकर्य्यम्मन्यमान आचार्य्यः प्रथममेवोत्पादप्रतिषेधमारभते । उत्पादो हि परैः परिकल्प्यमानः स्वतो वा परिकल्प्येत परत उभयतोऽहेतुतो वा परिकल्प्येत । सर्व्वथा च नोपपद्यत इति निश्चित्याह । न स्वतो नापि परतो न द्वाभ्यां नाप्यहेतुतः उत्पन्ना जातु विद्यन्ते भावा क्वचन केचन । तत्र जात्विति कदाचिदित्यर्थः । क्वचनशब्द आधारवचनः । क्वचिच्छब्दपर्य्यायः । ततश्चैवं सम्बन्धः । नैव स्वत उत्पन्ना जातु विद्यन्ते भावाः क्वचन केचन । एवम्प्रतिज्ञात्रयमपि योज्यम् । ननु नैव स्वत उत्पन्ना इत्यवधार्य्यमाणे परत उत्पन्ना इत्यनिष्ट-म्प्राप्नोति न प्राप्नोति प्रसज्यप्रतिषेधस्य विवक्षितत्वात् । परतोप्युत्पादस्य प्रतिषेत्स्यमानत्वात् । यया चोपपत्त्या स्वत उत्पादो न सम्भवति सा तस्माद्धि तस्य भवने न गुणोऽस्ति कश्चिज्जातस्य जन्म पुनरेव च नैव युक्तमित्यादिना मध्यमकावतारादिद्वारेणावसेया । आचार्य्यबुद्ध-पालितस्त्वाह । न स्वत उत्पद्यन्ते भावास्तदुत्पादवैयर्थ्यात् । अतिप्रसङ्गदोषाच्च नहि स्वात्मनो विद्यमानानां पदार्थानां पुनरुत्पादे प्रयोजनमस्ति । अथ सन्नपि जायेत न कदाचिन्न जायते इति । अत्रैके दूषणमाहुस्तदयुक्तं हेतुदृष्टान्तानभिधानात् । परोक्तदोषापरिहारात् प्रसङ्गवाक्यत्वाच्चाप्रकृतार्थविपर्य्ययेण विपरीतसाध्यतद्धर्म्मव्यक्तेः परस्मादुत्पन्ना भावा जन्मसाफ-ल्यात् । जन्मनिरोधाच्च कृतान्तनिरोधः स्यादिति । सर्व्वमेतद्दूषणमयुज्यमानमेव वयम्पश्यामः कथङ्कृत्वा तत्र यत्तावदुक्तं हेतुदृष्टान्तानभिधानादिति तदयुक्तम् । किं कारणम् । यस्मात् परतः स्वत उत्पत्तिमभ्युपगच्छन् विद्यमानस्य पुनरुत्पाद [illegible] । न चाप्यनिष्टिति । तस्मान्निरुपपत्तिकएव तद्वादः स्वाभ्युपगमविरुद्धश्चेति किमियमिति चोदिते परो नाभ्यु-पैति । यतो हेतुदृष्टान्तोपादानसाफल्यं स्यात् । अथ स्वाभ्युपगमविरुद्धचोदनयापि परो न निवर्त्तते तदापि निर्लज्जतया हेतुदृष्टान्ताभ्यामपि नैव निवर्त्तेत । न चोन्मत्तकेन सहास्मा-कम्विवाद इति । सर्व्वथा प्रियानुमानतामेवात्मन आचार्य्यः प्रकटयति अस्तु नाप्यनुमान प्रवेशा यैन च माध्यमिकस्य स्वतः स्वतन्त्रमनुमानं कर्तुं युक्तं पक्षान्तराभ्युपगमाभावात् । तथाचोक्तमार्य्यदेवेन । सदसत्सदसच्चेति यस्य पक्षो न विद्यते । उपारम्भश्चिरेणापि तस्य वक्तुन्न शक्यते इति । विग्रहव्यावर्त्तन्यांचोक्तम् । यदि काचन प्रतिज्ञा स्यान्मे तदेष मे भवेद्दोषः । नास्ति च मे प्रतिज्ञा तस्मान्नैवास्ति मे दोषः । यदि किञ्चिदुपलभेयं प्रवर्त्तयेयं निवर्त्तयेयम्वा । प्रत्यक्षादिभिरर्थैस्तदभावान्मे उपालम्भ इति । यदा चैवं स्वतन्त्रमनुमाना-

नभिधायित्वं माध्यमिकस्य तदा कृतानि धार्म्मिकान्यायतनानि स्वत उत्पन्नानीति स्वतन्त्रा प्रतिज्ञा । यस्यां सांख्याः प्रत्यवस्थायन्ते । कोऽयं प्रतिज्ञार्थः किङ्कार्य्यात्मकः स्वत उत कारणात्मक इति । कार्य्यात्मकश्चेत् सिद्धसाधनं । कारणात्मकश्चेद्विरुद्धार्थता । कारणात्मना विद्यमानस्यैव सर्व्वस्योत्पत्तिमत उत्पादादिति । कुतोऽस्माकम्विद्यमानत्वादिति हेतुर्यस्य विरुद्धार्थता स्यात् । यस्य सिद्धसाधनस्य यस्याश्च विरुद्धार्थताया परिहारार्थं यत्न करिष्याम-स्तस्मात् परोक्तदोषप्रसङ्गादेव तत्परिहार आचार्य्यबुद्धपालितेन वर्णनीयः । अथापि स्यात् माध्यमिकानाम्पक्षहेतुदृष्टान्तानामसिद्धेः स्वतन्त्रानुमानानभिधायित्वात् स्वत उत्पत्तिप्रति-षेधप्रतिज्ञार्थसाधनं माभूदुभयसिद्धेन वानुमानेन परप्रतिज्ञानिराकरणं परप्रतिज्ञायास्तु स्वत एवानुमाननिरोधचोदनया स्वत एव पक्षहेतुदृष्टान्तपक्षरहितैः पक्षादिभिर्भवितव्यम् । ततश्च तदनभिधानात्तु दोषपरिहाराच्च स एव दोष इति । उच्यते नैतदेवं । किङ्कारणं यस्माद्योहि यमर्थं प्रतिजानीते तेन स्वनिश्चयवदन्येषां निश्चयोत्पादनेच्छया ययोपपत्त्यासा-वर्थोऽधिगतः । सैवोपपत्तिः यस्मादुपदेष्टव्या तस्मादेष तावन्न्यायः । तत्परेणैव स्वाभ्युपगम-प्रतिज्ञार्थसाधनमुपादेयं । न चायम्परं प्रति हेतु दृष्टान्तासम्भवात् । स्वप्रतिज्ञार्थानुसारत-यैव स्वप्रतिज्ञातार्थमात्रमुत्पाद्यते इति । निरुपपत्तिकपक्षाभ्युपगमात् । स्वात्मानमेवायङ्केव-लम्विसम्वादयन्न शक्नोति परेषां निश्चयमाधातुमिति । इदमेवास्य स्पष्टतरदूषणं यत् स्वप्रतिज्ञातार्थसामर्थ्यमिति । किमत्रानुमानवाधोद्भावनयोजनम् ।

अथाप्येवं स्वमतानुमानविरोधदोष उद्भावनीयः स्यात् सोऽप्युद्भावित एवाचार्य्यबुद्धपालितेन । न स्वत उत्पद्यन्ते भावास्तदुत्पादवैयर्थ्यादिति वचनात् । अत्र हि स्वत इत्यनेन स्वात्मना विद्यमानस्य परामर्षस्तथाह्यस्य ग्रहणकुवाक्यस्येतद्विवरणवाक्यम् । किं हि स्वात्मना विद्य-मानानां पुनरुत्पादप्रयोजनमिति । अनेन वाक्येन साध्यसाधनधर्म्मानुगतस्य परप्रसिद्धस्य ाधर्म्म्यदृष्टान्तस्योपादनम् । तत्र स्वात्मना विद्यमानस्येत्यनेन हेतुपरामर्षः उत्पादवैयर्थ्या-ात्यनेन च साधर्म्म्यपरामर्षः । तत्र यथानित्यः शब्दः कृतकत्वात् कृतकमनित्यं दृष्टम् था घटः । तथाच कृतकः शब्दः तस्मात् कृतकत्वादनित्य इति कृतकत्वं स्वमतोप-याभिव्यक्तौ हेतुः । एवमिहापि न स्वत उत्पद्यन्ते भावाः स्वात्मना विद्यमानानां नरुत्पादवैयर्थ्यात् । इह स्वात्मना विद्यमानम् पुरोऽवस्थितं घटादिकं पुनरुत्पादनपक्षं ष्टम् । यथा च मृत्पिण्डाद्यवस्थायामपि यदि स्वात्मना विद्यमानं घटादिकमिति मन्यसे दापि तस्य स्वात्मना विद्यमानस्य नास्त्युत्पाद इति । एवं स्वात्मना विद्यमानत्वेना-ाभिव्यक्तेन पुनरुत्पादप्रतिषेधो व्यभिचारिणा हेतुना स्वत एव सांख्यस्यानुमानविरोधा-ावनमनुष्ठितमेवेति तत् किमुच्यते । तदयुक्तं हेतुदृष्टानभिधानादिति । नच केवलं तुदृष्टान्तानभिधानन्न सम्भवति । यथोक्तदोषोपरि दोषो न सम्भवति । कथं कृत्वा सांख्या नैवाभिव्यक्तरूपस्य पुरोऽवस्थितस्य घटस्य पुनरपि व्यक्तिमिच्छन्ति । तस्यैव चेह दृष्टान्त-ानोपादानं सिद्धरूपत्वात् । अनभिव्यक्तरूपस्य च शक्तिरूपापन्नस्योत्पत्तिप्रतिषेधः विशिष्ट-ाध्यत्वात् कुतः सिद्धसाधनपक्षदोषाशङ्का कुतो वा हेतोर्विरुद्धार्थताशङ्केति । तस्मात्

स्वतोऽनुमानबाधचोदनायामपि यथोपवर्णितदोषाभावात् परोक्तदोषपरिहारासम्भव एवेत्य-
सम्बद्धमेवैतद्दूषणमिति विज्ञेयम् । यदिकमिति । चादिशब्देन निरवशेषोत्पत्तिपदार्थ-
सङ्ग्रहस्य विवक्षितत्वात् । अनैकान्तिकतापि घटादिभिनैव सम्भवति ।

अथवायमन्यः प्रयोगमार्गः पुरुषव्यतिरिक्ताः पदार्थाः । स्वत उत्पत्तिवादिनस्तत एव न स्वत
उत्पद्यन्ते स्वात्मना विद्यमानत्वात् पुरुषवदेवमुदाहरणमुदाहार्य्यम् । यद्यपि चाभिव्यक्तिवादिन
उत्पादप्रतिषेधो न बाधकस्तथाप्यभिव्यक्तावुत्पादशब्दं निपात्य पूर्व्वम्पश्चाच्चानुपलब्धुपलब्धि-
साधर्म्मेणोत्पादशब्देनाभिव्यक्तेन वाभिधानादयम्प्रतिषेधो बाधकः । कथं पुनरयं यथोक्तस्वा-
भिधानम्बिनैव वस्तुविचारो लभ्यत इति चेत्तदुच्यते ।

अथवा तानि महार्थानि यथोदितार्थसङ्ग्रहप्रवृत्तानि तानि च व्याख्यायमानानि यथोक्त-
मर्थात्मानं प्रसूयन्ते । इति चात्र किञ्चिदनुत्पाद्यं सम्भाव्यते प्रसङ्गविपरीतेन चार्थेन परस्यैव
सम्बन्धो नास्माकं स्वप्रतिज्ञाया अभावात् । ततश्च सिद्धान्तविरोधासम्भवः परस्य च यावद्ब-
हवो दोषाः प्रसङ्गविपरीतापत्त्या आपद्यन्ते तावदस्माभिरभीष्यत एवेति । कुतो नु खल्ववि-
परीताचार्य्यनागार्जुनमतानुसारिण आचार्य्यबुद्धपालितस्य सावकाशवचनाभिधायित्वं यतोऽस्य
परावकाशं लभते । निःस्वभाववादिना च स्वभाववादिनः प्रसङ्गमापाद्यमानेन कुतः
प्रसङ्गविपरीतार्थप्रसङ्गिता । नहि शब्दादाशुपाशिका इव वक्तारमस्वमन्त्रयन्ति । किन्तर्हि सत्यां
शक्तौ वक्तुर्विवक्षामनुविधीयन्ते । ततश्च परप्रतिज्ञाप्रतिषेधमात्रफलत्वात् प्रसङ्गापादस्य नास्ति
प्रसङ्गविपरीतार्थापत्तिः । तथाचाचार्य्यो भूयसा प्रसङ्गापत्तिमुखेनैव परोक्तानि निराकरोति स्म ।

> नाकाशं विद्यते किञ्चित् पूर्व्वमाकाशलक्षणात् ।
> अलक्षणं प्रसज्येत स्यात् पूर्व्वं यदि लक्षणात् ॥
> रूपकारणनिर्मुक्तरूपे रूपं प्रसज्यते ।
> अहेतुको न चास्त्यर्थः कश्चिदाहेतुकः क्वचिदिति ॥

तथा । भावस्तावन्न निर्व्वाणञ्जरामरणलक्षणम् । प्रसज्येतास्ति भावो हि न जरामरणम्बिने-
त्यादिना अर्थार्थवाक्यत्वादाचार्य्यवाक्यानां महार्थत्वसत्त्वेनैकप्रयोगानिष्पत्तिहेतुत्वं परिकल्प्यते ।
आचार्य्यबुद्धपालितव्याख्यानान्यपि किमिति न तथैव परिकल्प्यन्ते । अथ स्याद् वृत्तिकाराणामेष
न्यायो यत्प्रयोगवाक्यविस्तराभिधानङ्कर्त्तव्यमित्येतदपि नास्ति । विग्रहव्यापत्तिं कूर्व्वताप्याचार्य्येण
प्रयोगवाक्यानभिधानात् । अपिचात्मनस्तर्कशास्त्रादिकौशलमात्रमवेद्य साङ्गीकृतमध्यमक-
दर्शनस्यापि यत् स्वतन्त्रप्रयोगवाक्याभिधानं तदतितरामनेकदोषसमुदायोऽस्य तार्किकस्योप-
लक्ष्यते । कथं कृत्वा यत्तावदेव युक्तं प्रयोगवाक्यं तद्भवति । न परार्थं आध्यात्मिकान्यायतनानि
स्वत उत्पन्नानि विद्यमानत्वात् । चैतन्यवदिति किमर्थं पुनरत्र परमार्थत इति विशेषणमुपा-
दीयते । लोकसंवृत्याभ्युपेतस्योत्पादस्याप्रतिषिद्धत्वात् प्रतिषेधे चाभ्युपेतबाधाप्रसङ्गादिति चेत्
नैतद्युक्तं सम्वृत्यापि स्वत उत्पत्त्यनभ्युपगमात् । यथोक्तं सूत्रे स वायं वीजहेतुकोऽङ्कुर उत्पद्य-
मानो न स्वयंकृतो न परकृतो नोभयकृतो नाप्यहेतुसमुत्पन्नो नेश्वरकालाणुप्रकृतिस्वभाव-
सम्भूत इति । तथा वीजस्य स्वतो यथाङ्कुरो । न च यत् वीजं स एवाङ्कुरो न चान्यतमो

नवैतदेवम् । अनुच्छेदमशाश्वतं धर्म्ममिति ॥ इहापि वक्ष्यति । प्रतीत्य यद्यद्भवति नहि तावत्तदेव भवति । न चान्यदपि तत्तस्मान्नोच्छिन्नं नापि शाश्वतमिति । परमतापेक्षं विशेषणमिति चेत्तदयुक्तं सम्वृत्यापि तदीयव्यवस्थानभ्युपगमात् । सत्यद्वयाद्विपरीतदर्शनपरिभ्रष्टा एव हि तीर्थिका यावदुभयथापि निषिध्यन्ते तावद्गुण एव सम्भाव्यत इति । एवम्परमतापेक्षमपि विशेषणाभिधानन्न युज्यते । न चापि लोकः स्वत उत्पत्तिं प्रतिपन्नो यतस्तदपेक्षयापि विशेषणसाफल्यं स्यात् । लोकैर्हि स्वतः परत इत्येवमादिकं विचारमनवतार्य्य कारणात् कार्यमुत्पद्यते इत्येतावन्मात्रं प्रतिपन्नं । एवमाचार्य्योऽपि व्यवस्थापयामासेति सर्व्वथा विशेषणवैफल्यमेव निश्चीयते । अपि च यदि संवृत्योत्पत्तिप्रतिषेधनिराचिकीर्षुणा विशेषणमेतदुपादीयते । तदा स्वतोऽसिद्धाधारः पक्षदोषः आश्रयोऽसिद्धो वा हेतुदोषः स्यात् । परमार्थतः स्वतश्चक्षुराद्यायतनानामनभ्युपगमात् । संवृत्या चक्षुरादिसद्भावाददोष इति चेत् । परमार्थत इत्येतत्तर्हि कस्य विशेषणं । संवृतानाञ्चक्षुरादीनां परमार्थत उत्पत्तिप्रतिषेधादुत्पत्तिप्रतिषेधविशेषणं परमार्थग्रहणमिति चेदेवन्तर्हि एवमेव वक्तव्यं स्यात् । संवृतानाञ्च चक्षुरादीनां परमार्थतो नास्त्युत्पत्तिरिति न चैवमुच्यते । उच्यमानेऽपि परैरुच्यमानानां सतामेव चक्षुरादीनामभ्युपगमात् । प्रज्ञप्तिः सतां ध्यानेनाभ्युपगमात् परतोऽसिद्धाधारः पक्षदोषः स्यादिति न युक्तमेतत् । अथ स्याद्व यथाऽनित्यः शब्द इति धर्म्मधर्म्मिसामान्यमेव गृह्यते न विशेषः । विशेषग्रहणे हि सति अनुमानानुमेय-व्यवहाराभावः स्यात् । तथाहि यदि चातुर्महाभौतिकः शब्दो गृह्यते स परस्यासिद्धः ।

अथाकाशगुणो गृह्यते सबौद्धस्य स्वतोऽसिद्धः । तथा वैशेषिकस्य शब्दानित्यताम्प्रतिजानानस्य यदि कार्य्यः शब्दो गृह्यते स परतोऽसिद्धः । अथ व्यङ्ग्यः स स्वतोऽसिद्धः । एवं यथासम्भवम्विनाशोऽपि यदि सहेतुकः स बौद्धस्य स्वतः । अथ निर्हेतुकः स परतोऽसिद्धः । तस्माद्व यथात्र धर्म्मधर्म्मिसामान्यमात्रमेवमिहापि धर्म्मिमात्रमुत्सृज्य विशेषणं ग्रहीष्यत इति चेन्नचैतदेवम् । यस्मादादैवोत्पादप्रतिषेधोऽत्र साध्यधर्म्मोभिप्रेतस्तदैव धर्म्मिणस्तदाधारस्य विपर्य्यासमापादितात्मभावस्य प्रच्युतिः स्वयमेवानेनाङ्गीकृता । भिन्नौ हि विपर्य्यासौ । तद्यथा । विपर्य्यासेनासत्सत्त्वेन गृह्यते ।? तमिरिकेशवकेशादि तदा कुतः सद्भूतपदार्थलेशस्याप्युपलब्धः । यदाचाविपर्य्यासादभूतन्नाध्यारोपितं वितमिरिकशेवकेशादि तदा कुतः । सद्भूतपदार्थलेशस्याप्युपलब्धिर्येन तदा नेयं वृत्तिः स्यात् । अतएवोक्तमाचार्य्यपादैः । यदि किञ्चिदुपलभेयं प्रवर्त्तयेयं निवर्त्तयेयं वा प्रत्येकादिभिरर्थैस्तदभावान्मेऽनुपालम्भ इति । यतश्चैवम्भिन्नौ विपर्य्यासाविपर्य्यासावेतौ विदुः । नामविपर्य्यासावस्थायां विपरीतस्यासम्भवात् । कुतः सम्वृतश्चक्षुः यस्य धर्म्मत्वं स्यादिति न व्यावर्त्ततेऽसिद्धाधारः पक्षदोष आश्रयासिद्धिः वा हेतुदोष इत्यपरिहार एवायं निदर्शनस्यापि नास्ति साम्यम् । तत्र हि शब्दसामान्यनित्यसामान्यं वा विवक्षितविशेषं द्वयोरपि सम्विद्यते । नत्वेवञ्चक्षुःसामान्यं शून्याशून्यतावादिभ्यां सम्वृत्याङ्गीकृतं नापि परमार्थत इति नास्ति निदर्शनसाम्यम् । यश्चायमसिद्धाधारपक्षदोषोद्भावनविधिनैष • एव सत्त्वादिभ्यः स्वहेतोरसिद्धार्थतोद्भावनीया । इत्थं

चैतदेवं यत् स्वयमप्यनेनायं यथोक्तार्थोऽभ्युपगतस्ताकिंकेन। कथं कृत्वा सन्त्येवाध्यात्मिकायतनोत्पादका हेत्वादयः। तथा तथागतेन निर्देशात्। यद्धि यथा तथागतेनास्ति निर्दिष्टन्तत्तथास्तु। तद्यथा शान्तिं निर्व्वाणमिति। अथ परोपक्षिप्तस्य साधनस्यैदं दूषणमभिहितमनेन। को हि भवतामभिप्रेतोऽत्र हेत्वर्थः संवृत्तः तथा तथागतेन निर्देशादुत परमार्थत इति। संवृत्या चेत् स्वतो हेतोरसिद्धार्थता परमार्थतश्चेन्न सन्नासन्नसदसद्धर्म्माणि वक्तव्यानि सदसदुभयात्मककार्य्यप्रत्ययत्वनिराकरणात्तदा कथन्निवर्त्तको हेतुरेवं सति हि युज्यते नैवासौ निवर्त्तको हेतुरिति वाच्यता। ततश्च परार्थनिवर्त्तकत्वासिद्धेरसिद्धार्थता विरुद्धार्थता वा हेतोरिति। यतश्चैव स्वयमेवामुना न्यायेन हेतोरसिद्धिरङ्गीकृतानेन तस्मात् सर्व्वेष्वेवानुमानेषु वस्तुधर्म्मोपन्यस्तहेतुकेषु स्वत एव हेत्वादीनामसिद्धत्वात् सर्व्वाण्येव साधनानि व्याहन्यन्ते। तद्यथा न परमार्थतः। परैः स्वतः परेभ्य आध्यात्मिकायतनजन्मपरत्वात्। तद्यथा पटस्य अथवा न परैः परमार्थेन विवक्षिताश्चक्षुराद्याध्यात्मिकायतननिवर्त्तकाः प्रत्यया इति। प्रत्ययन्ते परत्वात् तद्यथा। तत्वादय इति। परत्वादिकमत्र स्वत एवासिद्धम्। यथा चानेनोत्पन्ना एवाध्यात्मिका भावास्तद्विषयविशिष्टव्यवहारकरणादित्यस्य पराभिहितस्य हेतोरसिद्धार्थतामुद्भिभावयिषुणेदमुक्तम्। अथ समाहितस्य योगिनः प्रज्ञाचक्षुषा भावयाथात्म्यं पश्यत उत्पादगत्यादयः सन्ति परमार्थत इति साध्यते तदा तद्विषयाविशिष्टव्यवहारकरणहेतोरसिद्धार्थता। गतेरप्युत्पादनिषेधादेव निषेधादिति। एवं स्वकृतसाधनेऽपि अगतन्नैव गम्यते अध्वत्वाद्गताध्ववदिति। अथ हेतोः स्वतोऽसिद्धार्थताया ज्ञानपरमार्थः सरागश्चक्षुः पश्यति चक्षुरिन्द्रियत्वात्।

तद्यथा तत्सरागं तथा न चक्षुः प्रेक्षते रूपं भौतिकत्वात् सरूपवत्। खरस्वभावा न मही भूतत्वात्तद्यथा नलिनइत्यादिषु हेत्वाद्यसिद्धिः स्वतएव योज्या। सत्त्वादिति चायं हेतुः परतो नैकान्तिकः किं सत्त्वाच्चैतन्यवत्। नाध्यात्मिकान्यायतनानि स्वत उत्पद्यन्तामुताहो घटादिवत् स्वत उत्पद्यन्तामिति घटादीनामपि साध्यसमत्वान्नानैकान्तिकतेति चेन्नैतदेवम्। तथानभिधानात्। ननु च यथा परकीयेष्वनुमानेषु दूषणमुक्तमेवं स्वानुमानेष्वपि यथोक्तदूषणप्रसङ्गे सति स एवासिद्धाधारासिद्धहेत्वादिदोषः प्राप्नोति ततश्च पक्ष्योभयो दोषौ न तेनैकश्चेद्य भवतीति सर्व्वमेतद्दूषणमयुक्तं जायत इति। उच्यते। स्वतन्त्रमनुमानं ब्रुवतामयं दोषो जायते न वयं स्वतन्त्रमनुमानं प्रयुञ्ज्महे परप्रतिज्ञानिषेधफलत्वादस्मदनुमानानाम्। तथाहि परश्चक्षुः पश्यतीति प्रतिपन्नः सततप्रसिद्धेनैवानुमानेन निराक्रियते। चक्षुषः स्वात्मादर्शनां धर्म्ममिच्छसि पुरदर्शनधर्म्माविनाभावित्वं चाङ्गीकृतं तस्माद्यत्र यत्र स्वात्मादर्शनं तत्र तत्र च परदर्शनमपि नास्ति। तद्यथा घटेऽस्ति च चक्षुषः स्वात्मादर्शनन्तस्मात् परदर्शनमप्यस्य नैवास्ति ततश्च स्वदर्शनविरुद्धनीलादिपरदर्शनस्वप्रसिद्धेनैवानुमानेन विरुध्यत इति एतावन्मात्रमस्मदनुमानैरुद्भाव्यत इति। कुतोऽस्मत्पक्षे यथोक्तदोषावतारा यतः समानदोषः स्यात्। किं पुनरन्यतरप्रसिद्धेनाप्यनुमानेनास्त्यनुमानवाधा। अस्ति च सा स्वप्रसिद्धेनैव हेतुना न परप्रसिद्धेन। लोकत एव दृष्टत्वात्। कदाचिद्धि लोकेऽर्थिप्रत्यर्थिभ्याम् प्रमाणीकृतस्य साक्षिण

वचनेन जयो भवति पराजयो वा। कदाचित् स्ववचनेनैव परवचनेन तु न जयो नापि पराजयः। यथा च लोके तथा न्यायेऽपि लौकिकस्यैव व्यवहारस्य न्यायशास्त्रे प्रस्तुतत्वात्। अतएव च कैश्चिदुक्तं न परतः प्रसिद्धबलादनुमानबाधा स्वप्रसिद्धेरेव निराचिकीर्षितत्वादिति। यस्तु मन्यते य एवमुभयविनिश्चितवादी स्वसाधनन्दूषणं वा नान्यतरप्रसिद्धसन्दिग्धवाचीति तेनापि लौकिकव्यवस्थामनुरुध्यमानेन यथोक्त एव न्यायोऽभ्युपेयः।

यथाहि नोभयप्रसिद्धेन वागमेनागमबाधा किन्तर्हि स्वप्रसिद्धेनापि। स्वार्थानुमाने तु सर्व्वत्र स्वप्रसिद्धिरेव गरीयसी नोभयप्रसिद्धिः। अतएव तर्कलक्षणाभिधानन्निःप्रयोजनम् यथा स्वप्रसिद्धयोपपत्त्या बुद्धैस्तदनभिज्ञविनेयजनानुग्रहादित्यलम्प्रसङ्गेन। प्रकृतमेव व्याख्यास्यामः। परतोऽपि नोपपद्यन्ते भावाः। पराभावादेव। एतच्च नहि स्वभावो भावानां प्रत्ययादिषु विद्यते इत्यत्र प्रतिपादयिष्यते। ततश्च पराभावादेव नापि यत उत्पद्यन्ते। अपिच अन्यत्-प्रतीत्य यदि नाम परोऽभविष्यज्जायेत तर्हि बहुलः शिखिनोऽन्धकारः सर्व्वस्य जन्म च भवेत् खलु सर्व्वतश्च तुल्यम् परत्वमखिलं जनकेऽपि यस्मादित्यादिना परतउत्पत्तिप्रतिषेधोऽवसेयः। आचार्य्यबुद्धपालितस्तु व्याचष्टे न परत उत्पद्यन्ते भावाः सर्व्वतः सर्व्वसम्भवप्रसङ्गादिति। अत्राचार्य्यभावविवेको दूषणमाह। तदत्र प्रसङ्गवाक्यत्वात् साध्यसाधनविपर्य्ययं कृत्वा स्वत उभयतोऽहेतुतो वा उत्पद्यन्ते भावाः। कुतश्चित् कस्यचिदुत्पत्तेरिति। प्राक् पक्षविरोध इति। अन्यथा सर्व्वतः सर्व्वसम्भवप्रसङ्गादित्यस्य साधनदूषणानन्तःपातित्वादसङ्गतार्थमेतदिति। इदमप्यसङ्गतार्थं पूर्व्वमेव प्रतिपादितत्वात्। दूषणाऽन्तःपातित्वाच्च परप्रतिज्ञार्थदूषणेति यत्किञ्चिदेतदिति न पुनर्यत्न आस्थीयते। द्वाभ्यामपि नोपजायन्ते भावा उभयपक्षाभिहित-दोषप्रसङ्गात् प्रत्येकमुत्पादासामर्थ्याच्च। वक्ष्यति हि। स्यादुभाभ्यां कृतन्दुःखं स्यादेकैकं यदीति। अहेतुतोऽपि नोत्पद्यन्ते हेतावसति कार्य्यञ्च कारणञ्च न विद्यत इति वक्ष्यमाणदोषप्रसङ्गात्। गृह्यते नैव च जगद्यदि हेतुशून्यम्। स्याद्यद्वदेव गगनोत्पलवर्णगन्धावित्यादिदोषप्रसङ्गाच्च आचार्य्यबुद्धपालितस्त्वाह। अहेतुतो नोत्पद्यन्ते भावाः सदा च सर्व्वतश्च सर्व्वसम्भवप्रसङ्गा-दिति। अत्राचार्य्यभावविवेको दूषणमाह। अत्रापि प्रसङ्गवाच्यत्वात् यदि विपरीतसाध्यसाधन-व्यक्तिवाच्यार्थ इष्यते तदैतदुक्तं भवति हेतुत उत्पद्यन्ते भावाः कदाचित् कुतश्चिदुत्पत्तेरा-रम्भसम्भवादिति। सेयं व्याख्या न युक्ता प्रागुक्तदोषादिति। तदेतदयुक्तं पूर्व्वोदितपरिहारा-दित्यपरे।

अथ खलु तानि दशभुवनस्थितदेवपुत्त्रसहस्राणि भगवतो धर्म्मदेशनामनवरतं समव-गाहितान्यप्यनधिमुच्यमानानि उत्थ्यासनेभ्यः प्रक्रान्तानि। प्रमुदिताभूमिस्थिता देवा इमान् सर्व्वधर्म्मानिति। विमलाभूमिस्थिता देवा इमान् सर्व्वधर्म्मानिति। प्रभाकरीभूमिस्थिता देवा इमान् सर्व्वधर्म्मानिति। अर्च्चिष्मतीभूमिस्थिता देवा इमान् सर्व्वधर्म्मानिति। सुरङ्गमाभूमि-स्थिता देवा इमान् सर्व्वधर्म्मानिति। अभिमुखीभूमिस्थिता देवा इमान् सर्व्वधर्म्मानिति। दूरङ्गमाभूमिस्थिता देवा इमान् सर्व्वधर्म्मानिति। अचलाभूमिस्थिता देवा इमान् सर्व्वधर्म्मा-निति। साधुमतीभूमिस्थिता देवा इमान् सर्व्वधर्म्मानिति। धर्म्मसेघाभूमिस्थिता देवा इमान्

सर्व्वधर्म्मानिति। इमांस्तथागतस्य धर्म्मदेशनां श्रुत्वा विगतरागान् सर्व्वधर्म्मान् पश्यन्ति विकल्पान् न पश्यन्ति। दानपारमितामुत्पादिता भावना। शीलपारमितामुत्पादिता भावना क्षान्तिपारमितामुत्पादिता भावना वीर्य्यपारमितामुत्पादिता भावना ध्यानपारमितामुत्पादिता भावना। प्रज्ञापारमितामुत्पादिता भावना उपायपारमितामुत्पादिता भावना प्रणिधिपारमिता-मुत्पादिता भावना बलपारमितामुत्पादिता भावना ज्ञानपारमितामुत्पादिता भावना। एवम स्वभावाननावरणात्। तेनाकाशस्थितेन चेतसा कालं कुर्व्वन्ति। चित्तमनोरमसंज्ञितश्रेष्ठाः स्वर्गविमानं ज्वलन्ति मनोज्ञाः। यच्चापीश्वरादीनामुपसंग्रहार्थमन्तरेऽपि न युक्तमीश्वरादीनां स्वपरोभयपक्षेषु यथाभ्युपगमनानन्तरादिति। तस्मात् प्रसाधितमेतन्नास्त्युत्पाद इति। उत्पादा-सम्भवाच्चासिद्धोऽनुत्पादादिविशिष्टः प्रतीत्यसमुत्पाद इति। अत्राह यद्येवमनुत्पादादिविशिष्टः प्रतीत्यसमुत्पादो व्यवस्थापितो भवद्भिः। यत्तर्हि हैमवताकर्मविद्याप्रत्ययाः संस्काराः अविद्या-निरोधात् संस्कारनिरोधः। तथापि नित्याश्च ते हि संस्कारा उत्पादव्ययधर्म्मिणः। उत्पद्य हि निरुध्यन्ते तेषां व्युपशमः सुखं। तथा उत्पादाद्वा तथागतानामनुत्पादाद्वा तथागतानां स्थितै-वैषा धर्म्माणान्धर्म्मता। एको धर्म्मः सत्त्वस्थितये यदुत चत्वार आहाराः। द्वौ धर्म्मौ लोकं पालयतो ह्रीश्च। यत्रापि यश्चत्यादि तथा परलोकादिहागमनमिहलोकाच्च परलोकगमनमित्य-वन्निरोधादिविशिष्टः प्रतीत्यसमुत्पादो देशितो भगवता स कथन्न निरुध्यत इत्याह। यत एव निरोधादयः प्रतीत्यसमुत्पादस्योपरभान्त। अत एवेदमाध्यमकशास्त्रं प्रणीतमाचार्य्येण न प्रतीतार्थं सूत्रान्तविभागोपदर्शनार्थम्। यत्र यत्र एते प्रतीत्यसमुत्पादादय उक्ता न ते विगताविद्याः। नैर्निरोधर्व्विषये स्वभावोपेक्षया। किन्तर्ह्यविद्यातिमिरोपहतमतिनयनज्ञानविषयापेक्षया। तत्त्वदर्शनापेक्षया तूक्तं भगवता। एतद्धि भिक्षवः परमं सत्यं यदुतामोषधर्म्मा निर्व्वाणः सर्व्वसंस्काराश्च मृषामोषधर्म्माणः इति। तथा नास्त्यत्र तथता वा। अवितथता वा मोष-धर्मकमप्येतत्। प्रलोपधर्म्मकमप्येतत् मृषाप्येतत्। मायेयं बालालापिनीति तथा

फेनपिण्डोपमं रूपं वेदना बुद्बुदोपमा।
मरीचिसदृशी संज्ञा संस्काराः कदलीनिभाः॥
मायोपमञ्च विज्ञानमुक्तमादित्यबन्धुना।
एवं धर्म्मं निरीक्षमाणभिक्षुरारब्धवीर्य्यवान्॥
दिवा वा यदि वा रात्रौ सम्प्रजानन् प्रतिस्मृतः।
प्रतिविम्बपदे शान्तं संस्कारोपसमर्ज्जितमिति॥

निरात्मकत्वाच्च धर्म्माणामित्यादि॥ यस्यैवं दर्शनाभिप्रायानभिज्ञतया सन्देहः स्यात् को ह्यत्र देशनातत्त्वार्थकोनु स्वल्पाभिप्रायिकेति। यश्चापि मन्दबुद्धितयार्थानिदेशनां नीता-र्थामवगच्छति। तयोरुभयोरपि विनेयजनयोराचार्य्यो युक्त्यागमाभ्यां संशयमिथ्याज्ञानम-पाकर्त्तुमेतमारब्धवान्। तत्र न स्वतः इत्यादिना युक्तिरुपवर्णिता। तन्मृषा मोषधर्म्मा

यद्भगवानित्यभाषत । सर्व्वे च मोषधर्म्माणः संस्कारास्ते मृषा पूर्व्वा प्रज्ञायते कोटिन-
त्युवाच महामुनिः । संसारोऽनवराग्राहिरास्मादिर्नापि पश्चिमम् । कात्यायनाववादे च ।
अस्ति चोभयं प्रतिषिद्धम्भगवता भावाभावविभाविनेत्यादिना आगमो वर्णितः । उक्त-
ञ्चार्य्याक्षयमतिसूत्रान्ताः शून्यतानिमित्ता प्रणिहितानभिसंस्कारा जातानुत्पादा भाव-
निःसत्त्वनिर्जीवनिःपुद्गलास्वामिकविमोक्षमुखानि निर्दिष्टास्त उच्यन्ते नीतार्था । इय-
मुच्यते भदन्त शारद्वतीपुत्र नीतार्थसूत्रान्तप्रतिसरणता न नेयार्थप्रतिसरणतेति । तथा-
चार्य्यसमाधिराजसूत्रे नीतार्थसूत्रान्तविशेषजानतो यथोपदिष्टा सुगतेन शून्यता । यस्मिन्
पुनः पुद्गलसत्त्वपुरुषो नेयार्थताञ्जानाति सर्व्वधर्म्मानिति । तस्मादुत्पादादिदेशनां मृषार्थो-
म्प्रतिपादयितुं प्रतीत्यसमुत्पादानुपदर्शनमारब्धवानाचार्य्यः । ननु चोत्पादादीनामभावे सति
यदि सर्व्वधर्म्माणां मृषात्वप्रतिपादनार्थमिदमारब्धवानाचार्य्यः । नन्वेवं सति यन्मृषा न
तदस्तीति न सन्त्यकुशलानि कर्म्माणि । तदभावान्न सन्ति दुर्गतयः । न सन्ति कुशलानि
कर्म्माणि तदभावान्न सन्ति सुगतयः । सुगतिदुर्गत्यसम्भवाच्च नास्ति संसार इति । सर्व्वारम्भ
वैयर्थ्यमेव स्यात् । उच्यते सम्वृतिसत्यव्यपेक्षया लोकस्यैव सत्याभिनिवेशस्य प्रतिपक्षभावेन
मृषार्थता भावानां प्रतिपाद्यतेऽस्माभिः । नैवत्यार्य्याः कृतकार्य्याः किञ्चिदुपलभन्ते यन्मृषा वा
अमृषा वा स्यादिति । अपि च येन हि सर्व्वधर्म्माणाम्मृषात्वम्परिज्ञातं । किन्तस्य कर्म्माणि सन्ति
संसारो वास्ति न चाप्यसौ कस्यचिद्धर्म्मस्यास्तित्वं नास्तित्वञ्चोपलभते । यथोक्तं भगवतार्य्यरत्न-
कूटसूत्रे चित्तं हि काश्यप परिगवेष्यमाणं न लभ्यते । यन्न लभ्यते तन्नोपलभ्यते । यन्नोपलभ्यते
तन्नैवातीतं नानागतं न प्रत्युत्पन्नं यन्नैवातीतन्नानागतन्न प्रत्युत्पन्नं, तस्य नास्ति स्वभावः ।
यस्य नास्ति स्वभावस्तस्य नास्त्युत्पादः । यस्य नास्त्युत्पादः तस्य नास्ति निरोधः । इति
विस्तरः । यस्तु विपर्य्यासानुगमान्मृषात्वधर्म्माणान्नावगच्छति प्रतीत्यभावानां स्वभाव-
मभिनिविशते । स धर्म्मेष्विदं सत्याभिनिवेशितमभिनिविष्टः सत्कर्म्माण्यपि करोति संसारे-
ऽपि संसरति विपर्य्यासावस्थितत्वान्न भव्यो निर्व्वाणमधिगन्तुम् । किम्पुनः मृषास्वभावा अपि
पदार्थाः संक्लेशव्यवदाननिबन्धनम्भवति । तद्यथा मायायुवतिस्तत्स्वभावानभिज्ञानात्तथागत-
निर्म्मितिश्चोपचितकुशलानाम् । उक्तं हि दृढाशयपरिपृच्छासूत्रे । तद्यथा कुलपुत्र मायाकार-
नाटके प्रत्युपस्थिते मायाकारनिर्म्मितां स्त्रियं दृष्ट्वा कश्चिद्रागपरीतचेता पर्षत्सरघाभयेना-
त्थायासनादपक्रमेत् । सोऽपक्रम्य तामेव स्त्रियमशुभतो मनसि कुर्य्यादनित्यतो दुःखतः
शून्यतोऽनात्मतो मनसि कुर्य्यादिति विस्तरः । विनये च यन्त्रकारकारिता यन्त्रयुवतिः
सुभूतयुवतिः शून्याऽसुभूतयुवतिरूपेण प्रतिभासते । तस्य च चित्रकरस्य कामरागास्पदभूतो ।
तथा मृषास्वभावा अपि भावा बालानां संक्लेशव्यवदाननिबन्धनम्भवति । तथार्य्यरत्नकूट-
सूत्रे ।

अथ खलु तानि पञ्चमात्राणि भिक्षुशतानि भगवतो धर्म्मदेशनामनवतरन्त्यनवगाहन्ता-
न्यनधिमुच्यमानानि उत्थायासनेभ्यः प्रक्रान्तानि । अथ भगवान् येन मार्गेण भिक्षवो गच्छन्ति
स्म तस्मिन्मार्गे द्वौ भिक्षू निर्म्मिते स्म । अथ तानि पञ्चभिक्षुशतानि येन तौ द्वौ भिक्षू तेनो-

पसंक्रामन्ति स्म। उपसंक्रम्य ताववोचत् कुत्रायुष्मन्तौ गमिष्यथ। निर्म्मितकाववोचतां गमिष्याव आरामरण्यायतनेषु तत्र ध्यानसुखस्पर्शविहारैर्विहरिष्यावः। यं हि भगवान् धर्म्मन्देशयति तमावां नावतरावो नावगाहावहे नाधिमुच्यावहे। उत्त्रस्यावः सन्त्रासमापद्यावहे।

अथ तानि पञ्चभिक्षुशतान्यतदवोचन् वयमप्यायुष्मन्तौ भगवतो धर्म्मदेशनान्नावतरामो नावगाहिष्यामो न विवादिष्यामः। अविवादपरमो हि श्रमणधर्म्मः। कस्यायुष्मतः प्रहाणाय प्रतिपन्नाः। तान्यवोचन् रागद्वेषमोहानां प्रहाणाय वयं प्रतिपन्नाः। निर्म्मितकाववोचताम् किं पुनरायुष्मतां सम्विद्यते। रागद्वेषमोहायानङ्कपयिष्यथ। तान्यवोचन्न ते अध्यात्मं न वहिर्द्धानोभयमन्तरेणोपलभ्यन्ते नापि तेऽपरिकल्पिता उत्पद्यन्ते। निर्म्मितकाववोचतान्तेन ह्यायुष्मन्तो माकल्पयत। यदा चायुष्मन्तो न कल्पयिष्यथ न विकल्पयिष्यथ तदा न रज्यथ न विरज्यथ यश्च न रक्तो न विरक्तः स शान्त इत्युच्यते। शासनमायुष्मन्तो न संसरति न परिनिर्वाति समाधिः प्रज्ञाविमुक्तिर्विमुक्तिज्ञानदर्शनमायुष्मन्तो न संसरति न परिनिर्वाति। एभिश्चायुष्मन्तो धर्म्मनिर्व्वाणं सूच्यते। एते च धर्म्माः शून्याः प्रकृति विविक्ता प्रजहीतैतामायुष्मन्तः। संज्ञा यदुत परिनिर्वाणमिति सा च संज्ञायाः संज्ञाकाष्ठा च संज्ञायाः संज्ञाम्परिज्ञासिष्ठ। यो हि संज्ञाया संज्ञां परिजानाति संज्ञावन्धनमेवास्य तद् भवति। संज्ञावेदयितनिरोधसमापत्तिमायुष्मन्तः समापद्यध्वम्। संज्ञावेदयितनिरोधसमापत्तिसमापन्नस्य भिक्षोः नोत्स्युत्तरीकरणीयमिति वदावः। अथ तेषां पञ्चानाम्भिक्षुशतानामनुपादमाश्रितेभ्यश्चित्तानि विमुक्तान्यभूवन्। तानि विमुक्तचित्तानि येन भगवांस्तेनोपसंक्रामन्ति। उपसंक्रम्य भगवतः पादौ शिरसाभिवाद्यैकान्ते न्यसीदन्।

अथायुष्मान् सुभूतिस्तान् भिक्षून् एतदवोचन्। कुत्रायुष्मन्तो गताः कुतोवागताः न क्वचिद्गमनाय न कुतश्चिदागमनाय भगवन्तः। सुभूते भगवता धर्म्मोदेशितः। आह को नामायुष्मतां शास्ता। आहुः। यो नोत्पन्नो न परिनिर्वास्यति। आह। कथं युष्माभिर्धर्म्म श्रुतः। आहुर्न वन्धाय न मोक्षाय। आह केन यूयं विनीताः। आहुः यस्य न कायो न चित्तम्। आह कथं यूयं प्रयुक्ताः। आहुः नाविद्याप्रहाणाय न विद्योत्पादनाय। आह कस्य यूयं श्रावकाः। आहुः येन न प्राप्तं नाभिसम्बुद्धम्। आह के युष्माकं सब्रह्मचारिणः। आहुः यैस्त्रैधातुकेनापविचरन्ति। आह कियच्चिरेणायुष्मन्तः परिनिर्वास्यन्ति। आहुः यदा तथागतनिर्म्मितकाः परिनिर्वास्यन्ति। आह। कृतं युष्माभिः करणीयम्। अहङ्कारममकारपरिज्ञानतः। आह क्षीणा युष्माकं क्लेशाः। आहुरत्यन्तं क्षयात् सर्व्वधर्म्माणाम्। आह धर्षितो युष्माभिर्मारः। आहुः स्कन्धमारानुपलम्भात्। आह परिचरितो युष्माभिः शास्ता। आहुः न कायेन न वाचा न मनसा। आह विशोधिता युष्माभिर्दक्षिणीयभूमिः। आहुः अग्राहतोऽप्रतिग्राहतः। उत्तीर्णो युष्माभिः संसारः। अनुच्छेदतोऽशाश्वतः। आह प्रतिपन्ना युष्माभिः दक्षिणीयभूमिः। आहुः सर्व्वग्राहविनिर्मुक्तितः। आह किंगामिन आयुष्मन्तः यद्गामिनस्तथागतनिर्म्मिताः। इति ह्यायुष्मतः सुभूतेः परि-

पृच्छतस्तेषां भिक्षूणां विसर्जयतां तस्यां पर्षदि अष्टानां भिक्षुशतानामनुपादायास्रवेभ्यश्चित्तानि विमुक्तानि द्वात्रिंशतश्च प्राणिसहस्राणां विरजो विगतमलं धर्म्मेषु धर्म्म चक्षुः विशुद्धम् । इत्येवं मृषास्वभावाभ्यां तथागतनिर्म्मिताभ्यां भिक्षुभ्यां पञ्चानां भिक्षुशतानां व्यवदान-निबन्धनं कृतमिति । उक्तञ्चार्यसजमण्डायां धारण्यां । तद्यथा । मञ्जुश्रीः काण्डञ्च प्रतीत्य मथनीञ्च प्रतीत्य पुरुषहस्तव्यायामं प्रतीत्य धूमः प्रादुर्भवतीति । अग्निरभिनिवर्त्तते । स चाग्निसन्तापो न काण्डसन्निःसृतो न मथनीसन्निसृतो न पुरुषहस्तव्यायामसन्निःसृतः । एवमेव मञ्जुश्रीरसद्विपर्य्यासमोहितस्य पुरुषपुंगलस्योत्पद्यन्ते । रागपरिदाहो द्वेषपरिदाहः स च परिदाहो नाध्यात्मतो न वहिर्धानोभयमन्तरेण स्थितः । अपि तु मञ्जुश्रीः यदुच्यते मोह इति तत् केन कारणेनोच्यते मोह इति । अत्यन्तमुक्तो हि मञ्जुश्रीः सर्व्वधर्म्मैर्मोहस्तेनो-च्यते, मोह इति । तथा नरकमुखा मञ्जुश्रीः सर्व्वधर्म्मा इदं धारणीपदम् । आह कथं भगवन्निदं धारणीपदम् । आह नरका मञ्जुश्रीर्वालपृथग्जनैरसद्विपर्य्यासविरचिताः स्ववि-कल्पसम्भूताः । आह कुत्र भगवन्नरकाः समवसरन्ति । भगवानाह । आकाशसमवसरणा-मञ्जुश्रीर्नरकाः । तत् किं मन्यसे मञ्जुश्रीः स्वविकल्पसम्भूताः । नरका उत स्वभावसम्भूताः । आह । स्वविकल्पेनैव भगवन् सर्व्ववालपृथग्जना नरकतिर्य्यग्योनियमलोकं सञ्जानन्ति । ते चासत्समारोपेण दुःखाम्वेदनाम्वेदयन्ति दुःखमनुभवन्ति । त्रिष्वप्यपायेषु यथावाहम्भगवन्न-रकान् पश्यामि तथा नारकं दुःखम् । तद्यथा भगवन् कश्चिदेव पुरुषः सुप्तः । स्वप्नान्तर-गतो नरकगतमात्मानं संजानीते । स तत्र क्वथितायां सञ्ज्वालितायां संप्रज्वलितायां अनेकपारुषायां लोहकुण्ड्यां प्रक्षिप्तमात्मानं सञ्जानीयात् । स तत्र खराङ्कटुकान्तीव्रान्दुःखान् वेदनाम्वेदयेत । स तत्र मानसम्परिदाहं सञ्जानीयात् ।

उत्त्रसत् सन्त्रासमापद्यते । स तत्र प्रतिविबुद्धः समानः अहो दुःखमहो दुःखमिति क्रन्देत् शोचेत् परिदेवेत् । अथ तस्य मित्रज्ञातिसालोहिताः परिपृच्छेयुः केन तव दुःखमिति । स तान्मित्रज्ञातिसालोहितानेवम्वेदयेत् । नैरयिकन्दुःखमनुभूतं स तानाक्रोशत्परिभाषते । अहञ्च नाम नैरयिकन्दुःखमनुभवामि । यूयञ्च मे उपरि परिपृच्छत केनैतत्तव दुःखमिति । अथ ते मित्रज्ञातिसालोहितास्तं पुरुषमेवं वदेयुर्माभैर्माभैर्भो पुरुष सुप्तो हि त्वमितो गृहात् किञ्चिन्निर्गतः । तस्य पुनरपि स्मृतिरुत्पद्यते सुप्तोऽहमभूवम् । वितथमेतन्मया परिकल्पित-मनुभूतमिति । स पुनरपि सौमनस्यं प्रतिलभते । तद्यथा भगवन् स पुरुषोऽसत्समारोपेण सुप्तो स्वप्नान्तरगतो नरकगतमात्मानं सञ्जानीयात् । एवमेव भगवन् सर्व्ववालपृथग्जना अस-द्रागपर्य्यवसानद्धा स्त्रीनिमित्तं कल्पयन्ति । स्त्रीनिमित्तं कल्पयित्वा ताभिः सार्द्धं रममाणं सञ्जानन्ति । तस्य वालपृथग्जनस्यैवं भवत्यहं पुरुष इयं स्त्री ममैषा स्त्री तेन तस्य छन्द-रागपर्य्यवसानद्धा स्त्रीनिमित्तं कल्पयन्ति ते स्त्रीनिमित्तं कल्पयित्वा ताभिः सार्द्धं रममाण-मात्मानं सञ्जानन्ति तस्य वालपृथग्जनस्यैवं भवत्यहं पुरुषः इयं स्त्री ममैषा स्त्री तस्य तेन छन्दरागपर्य्यवस्थितेन चित्तेन भोगपर्य्येस्तचित्तं क्रामयति । स ततो निदानं कलहविग्रहविवादं जनयति । तस्य प्रदुष्टेन्द्रियस्य वरः सञ्जायते । स तेन संज्ञाविपर्य्यासेन कालगतः समानो बहूनि

कल्पसहस्राणि नरकेषु दुःखाम्वेदनाम्वेदयमानमात्मानं सञ्जानाति । तद्यथा भगवन् तस्य पुरुषस्य मित्रज्ञातिसालोहिता एवम्वन्दिता माभैः माभैः भोः पुरुष सुप्तो हि त्वन्न त्वमित गृहात् कुतश्चिन्निर्गत इति । एवमेव भगवन् बुद्धा भगवन्तश्चतुर्विपर्य्यासविपर्य्यस्तानां सत्त्वानामेवं धर्म्मं देशयन्ति । नात्र स्त्री न पुरुषो न सत्त्वो न जीवो न पुरुषो न पुद्गलो विद्यत इमे सर्व्वधर्म्माः । असन्त इमे सर्व्वधर्म्माः । विठपिता इमे सर्व्वधर्म्माः । मायोपमा इमे सर्व्वधर्म्माः । स्वप्नोपमा इमे सर्व्वधर्म्माः । निर्म्मितोपमा इमे सर्व्वधर्म्माः । उदकचन्द्रोपमा इमे सर्व्वधर्म्मा इति विस्तरः । त इमान्तथागतस्य धर्म्मदेशनां श्रुत्वा विगतरागान् सर्व्वधर्म्मान् पश्यन्ति । विगतमोहान् सर्व्वधर्म्मान् पश्यन्ति । अस्वभावाननावरणान् । ते आकाशस्थितेन चेतसा कालं कुर्व्वन्ति ते कालगताः समानाः । निरुपधिशेषे निर्वाणधातौ परिनिर्व्वान्ति । एवमहं भगवन्नरकानाम्यामिति । उक्तं चार्य्योपालिपरिपृच्छायाम् । भयदर्शिता नैरयिकं मे सत्वसहस्रं वर्जितं नैकेन च विद्यते कश्चित् सत्वो यो व्युद्गच्छति घोरमपायम् । न च कारककारणं सन्ति ये हि कृतासितोमरवर्षाः कल्पवशेन तु पश्यन्ति तत्र कोऽपि पतन्ति । आपायितशस्त्रा चित्रमनोरमसङ्कितवृन्दाः स्वर्णविमानं ज्वलन्ति मनोज्ञाः । तेऽपि कारकं नास्तीह कश्चित्तेऽपि च स्थापितकल्पवशेन विकल्पयते लोकः । सत्त्वाग्रहेण विकल्पेत्तु वालः सारग्रहोऽग्रहोऽसद्भूतो मायामरीचिसमा हि विकल्पा इति । तदेवमेतत्स्वभावास्वविपर्य्यासविठपिता वालानां संक्लेशहेतवो भवन्ति संसार इति स्थितम् । यथा च मृषास्वभावानां पदार्थानां संक्लेशव्यवदानहेतुत्वम् । तथा मध्यमकावतारादिभ्यस्तरेणावधेयम् । अत्राह यदि स्वतः परत उभयतोऽहेतुतश्च नास्ति भावानामुत्पादस्तत्र कथमविद्याप्रत्यया संस्कारा इत्युक्तं भगवता उच्यते । संवृतिरेव न तत्वम् । किं संवृतेः व्यवस्थानं वक्तव्यं इदंप्रत्ययतामात्रेण संवृतेः सिद्धिरभ्युपगम्यते न तु पक्षचतुष्टयाभ्युपगमेन सस्वभाववादप्रसङ्गात्, तस्य चायुक्तत्वात् इदंप्रत्ययता मात्राभ्युपगमे हि सति हेतुफलयोरन्योन्यापेक्षत्वात् नास्ति स्वाभाविकी सिद्धिरिति नास्ति सस्वभाववादः । अतएवोक्तं स्वयं कृतम्परकृतं द्वाभ्यां कृतमहेतुकम् । तार्किकैरिष्यते दुःखं तथाभूतं प्रतीत्यजमिति । इहाविद्यत्तिनमिति । प्रतीत्यकारकः कर्म्म तम्प्रतीत्य च कारकम् । कर्म्म प्रवर्त्तते नान्यत्पश्याम सिद्धिकारणमिति ॥ भगवताप्येतावन्मात्रमेवोक्तम् । तत्रायन्धर्म्मसङ्केतो यदुतास्मिन् सतीदं भवति । अस्योत्पादादिदमुत्पद्यते । यदुताविद्याप्रत्ययाः संस्काराः संस्कारं प्रत्ययश्चिज्ञानमित्यादि । अत्र केचित् परिचोदयन्ति । अनुत्पन्ना भावा इति । किमियं प्रमाणाहोनिश्चयो यदुताप्रमाणजः । तत्र यदि प्रमाणज इष्यते तदेदम्वक्तव्यम् । कति प्रमाणानि किं लक्षणानि किं विषयानि किं स्वत उत्पन्नानि किं परत उभयतोऽहेतुतो वेति ।

अथाप्रमाणजः सन् युक्तप्रमाणाधीनत्वात् प्रमेयाधिगमस्य । अनधिगतो ह्यर्थो न विना प्रमाणैरधिगन्तुं शक्यत इति । प्रमाणाभावादर्थाधिगमाभावे सति कुतोऽयं सम्यग्निश्चय इति । न युक्तमेतदनिष्पन्ना भावा इति । यतश्चायन्निश्चयो भवतोऽनुत्पन्नाभावा इति भविष्यति तत एव ममापि सर्वभावाः सन्तीति । तथा चायन्ते निश्चयोऽनुत्पन्ना सर्व्वधर्म्मा इति

तथैव ममापि सर्व्वभावोत्पत्तिः भविष्यति। अथ ते नास्ति निश्चयोऽनुत्पन्ना सर्व्वभावा इति। तदा स्वयमनिश्चितस्य परप्रत्ययेनासम्भवाच्छास्त्रारम्भवैयर्थ्यमेवेति। सन्त्यप्रसिद्धा सर्व्वभावा इति। उच्यते यदि कश्चिन्निश्चयो नास्माकं स्यात् सप्रमाणजो वा स्यादप्रमाणजो वा न त्वस्ति किं कारणम्। इहानिश्चयसम्भवे सति स्यात्तत्प्रतिपक्षस्तदपेक्षानिश्चयः। यदा त्वनिश्चय एव अस्माकं नास्ति तदा कुतस्तु विरुद्धानिश्चयः स्यात्। सम्बन्धान्तरनिरपेक्षत्वात्। खरविषाणस्य ह्रस्वदीर्घतावत्। यदा चैवन्निश्चयस्यासद्भावः तदा कस्य प्रसिद्ध्यर्थं प्रमाणानि परिकल्पयिष्यामः। कुतो वैषां संख्यालक्षणम्विषयो वाहयिष्यति। स्वतः परत उभयतो वा समुत्पत्तिरिति। सर्व्वमेतन्न वक्तव्यमस्माभिः। यद्येवं निश्चयो नास्ति सर्व्वतः कथं पुनरिदं निश्चितरूपं वाक्यमुपलभते। भगवतो न स्वतो नापि परतो न द्वाभ्यां नाप्यहेतुतो भावा भवन्तीति। उच्यते निश्चितमिदं वाक्यं लोकस्य स्वप्रसिद्धियं चोपपत्त्यानार्य्याणाङ्कि खल्वार्य्याणामुपपत्तिर्नास्ति केनैतदुक्तमस्ति वा नास्ति चेति। परमार्थो ह्यार्य्यन्तूष्णीम्भावस्ततः कुतस्तत्र प्रपञ्चसम्भवो यत् उपपत्तिरनुपपत्तिर्वा स्यात्। यदि ह्यार्य्या उपपत्तिं न वर्णयन्ति केन खल्विदानीम्परमार्थं लोकं बोधयिष्यन्ति। न खल्वार्य्या लोकसंव्यवहारेणोपपत्तिं वर्णयन्ति। किन्तु लोके तत्रैवार्य्याः प्रसिद्धोपपत्तिं सम्यगवबोधार्थमभ्युपेत्य समेव लोकं बोधयन्ति। यथैव हि विद्यमानामपि शरीराशुचितांम्विपर्यासानुगतारागिनो नोपलभन्ते शुभाकारं चाभूतमध्यारोप्य परिक्लिश्यन्ते। तेषां वैराग्यानां तथागतनिर्म्मिता देवा वा शुभसंज्ञया प्राक्प्रच्छादितान् कामदोषानुपवर्णयेत्। सन्त्यस्मिन्कायकेशादिना ते च तस्याशुभसंज्ञायाम्विषमावैराग्यमासादयेयुः। एवमिहाप्यार्य्यैः सर्व्वथाप्यनुलभ्यमानात्मकम्भावानामविद्यातिमिरोपहतमतिनयनतया विपरीतं स्वभावमध्यारोप्य क्वचित् किञ्चिद्विशेषमतितराम्परिक्लिश्यन्ति पृथग्जनाः। तानिदानीमार्य्यास्तत्प्रसिद्धये चोपपत्त्या परिबोधयन्ति। यथा विद्यमानस्य घटस्य न मृदादिभ्य उत्पाद इत्यभ्युपेतमेवमुत्पादा पूर्व्वविद्यमानस्य घटस्य विद्यमानत्वादुत्पाद इत्यवसीयताम्। यथा च परभूतेभ्यो ज्वालान् रागादिभ्योऽङ्कुरस्योत्पत्तिर्नास्तीत्यभ्युपेतमेवम्विवक्षितेभ्योऽपि बीजादिभ्यो नास्तीत्यवसीयताम्।

अथापि स्यादनुभव एषोऽस्माकमिति। एतदप्ययुक्तम्। यस्मादनुभव एष मृषानुभवत्वात्तैमिरकद्विचन्द्राद्यनुभववदिति। ततश्चानुभवस्यापि साध्यसमत्वाद्वेन प्रत्युपस्थानं न युक्तमिति। अस्माकमिति। एतदप्ययुक्तम्। यस्मादनुभव एष मृषानुभव इति। तस्मादनुत्पन्ना भावा इत्येवन्तावद्विपरीतस्वरूपाध्यारोपप्रतिपक्षप्रथमकरणस्यः। इदानीं क्वचिद् यः कश्चिद्विशेषोऽध्यारोपितस्तद्विशेषापाकरणार्थं शेषप्रकरणार्थं शेषप्रकरणारम्भः। गन्तृगन्तव्यगमनादिकोऽपि निरवशेषो विशेषो नास्ति प्रतीत्यसमुत्पादस्येति। प्रतिपादनार्थमथ स्यादेष एव प्रमाणप्रमेयं व्यवहारलौकिकोऽस्माभिः शास्त्रेनानुवर्त्तित इति। तदनुवर्णनस्य तर्हि फलम्वाच्यम्। कुतार्किकैः स नाशितो विपरीतलक्षणाभिधानेन तस्यास्माभिः सम्यक् लक्षणमुक्तमिति चेत्। एतदप्ययुक्तम्। यदि हि कुतार्किकैर्विपरीतलक्षणप्रणयनं कृतम्। लक्षवैपरीत्यं लोके स्यात्तदर्थं श्रेयःसाफल्यं स्यान्न चैतदेवमिति व्यर्थ एवायं प्रयत्न इति। अपि च यदि प्रमाणाधीनप्रमेयाधिगमस्तानि प्रमाणानि केन परिच्छिद्यन्ते इत्यादिना

विग्रहव्यावर्त्तन्यामभिहितो दोषस्तदपरिहारात् सम्यक् लक्षणद्योतकत्वमपि नास्ति। किञ्च यदि स्वसामान्यलक्षणद्वयानुरोधेन प्रमाणद्वयमुक्तं यस्य तल्लक्षणद्वयं किं लक्ष्यमस्ति। अथ नास्ति यद्यस्ति तदा तदपरं प्रमेयमस्तीति कथं प्रमाणद्वयम्।

अथ नास्ति लक्ष्यन्तदा लक्षणमपि निराश्रयं नास्तीति कथं प्रमाणद्वयम्। वक्ष्यति हि। लक्षणासम्प्रवृत्तौ च न लक्ष्यमुपपद्यते। लक्ष्यस्यानुपपत्तौ च लक्षणस्याप्यसम्भव इति। अथ स्यान्न लक्ष्यतेऽनेनेति लक्षणं किन्तर्हि कृत्यल्युटो बहुलमिति कर्म्मणि ल्युटं कृत्वा लक्ष्यते तदिति लक्षणम्। तेन एवमपि तेनैतस्य लक्षणत्वासम्भवाद्येनैतल्लक्ष्यते तस्य करणस्य कर्म्मणोऽर्थान्तरत्वात् स एव दोषः। अथ स्यात् ज्ञानस्य करणत्वस्य च स्वलक्षणान्तर्भावादयमदोष इति। इह भावानामन्यासाधारणस्य लक्षमाणत्वासम्भवात् येन तल्लक्ष्यते तस्य करणस्य कर्म्मणोऽर्थान्तरत्वात् स एव दोषः अथ स्यात् ज्ञानस्य करणत्वात् तस्य च स्वलक्षणान्तर्भावादयमदोष इति। उच्यते। इह भावानामन्यसाधारणमात्मीयं यत्स्वरूपन्तत्स्वलक्षणम्। तद्यथा पृथिव्याः काठिन्यं वेदनाया अनुभावाविज्ञानस्य विषमं प्रतिविज्ञप्तिः तेन हि तद्वा न लक्ष्येत इति कृत्वा प्रसिद्धानुगताश्च व्युत्पत्तिमवधूय कर्म्मसाधनमभ्युपगच्छति। विज्ञानस्य च करणभावं प्रतिपद्यमानेनेदमुक्तम्भवति स्वलक्षणासौ च कर्म्मता स्वलक्षणान्तरस्य करणभावस्येति। तत्र यदि विज्ञानस्वलक्षणं करणन्तस्य व्यतिरिक्तेन कर्म्मणा भवितव्यमिति। स एव दोषः। अथ स्याद्यत् पृथिव्यादिगतकाठिन्यादिकं विज्ञाने गम्यते तस्य कर्म्मणस्तावच्च स्वलक्षणाव्यतिरिक्तमिति। एवं तर्हि विज्ञानस्वलक्षणस्य कर्म्मत्वाभावात् प्रमेयत्वन्न स्यात् कर्म्मरूपस्यैव स्वलक्षणदोषः। अथ स्याद्यत् पृथिव्यादिगतं काठिन्यादिकं विज्ञानगम्यन्तन्नम कर्म्म तावच्च स्वलक्षणव्यतिरिक्तमिति। एवन्तर्हि विज्ञानस्वलक्षणस्य कर्म्मत्वाभावात् प्रमेयत्वन्न स्यात् कर्म्मरूपस्यैव स्वलक्षणलक्षणस्य प्रमेयत्वात्। ततश्च द्विविधं प्रमेयं स्वलक्षणं सामान्यलक्षणं लक्ष्य तद्विशिष्य वक्तव्यम्। किञ्चित् स्वलक्षणं अप्रमेयं यल्लक्ष्यते इत्येवं व्यपदिश्यते किञ्चित् प्रमेयं यल्लक्ष्यतेऽनेनेति व्यपदिश्यत इति। अथ तदपि कर्म्मसाधनन्तदा तस्यान्येन करणेन भवितव्यञ्ज्ञानान्तरस्य करणभावयमिकस्य नायमनित्यादौ पर्य्यापद्यते। अथ मन्यसे स्वसंवृत्तिरस्ति ततः स्वसविद्याग्रहणात् कर्म्मतायां सत्यामस्त्येव प्रमेयान्तर्भाव इति। उच्यते विस्तरेण मध्यमकावतारे स्वसंवृत्तिनिषेधात् स्वलक्षणं स्वलक्षणान्तरेण लक्ष्यते। तदपि स्वसंवित्तेति न युज्यते। अपि च तदपि नाम ज्ञानं स्वलक्षणव्यतिरेकेनासिद्धेरसम्भवाल्लक्षणाभावे निराश्रयलक्षणप्रवृत्त्यसम्भवात् सर्व्वथा नास्तीति ततः स्वसम्वित्तिः। तथाचोक्तमार्य्यरत्नचूड़परिपृच्छायाम्। स चित्तं समन्वपश्यत् चित्तधानां पर्य्यषते कुतश्चित्तस्योपपत्तिरिति तस्यैवम्भवति। आलम्बने सति चित्तमुत्पद्यते। तत् किमन्यदालम्बनमन्यच्चित्तम्। अथ यदेवालम्बनन्तदेव चित्तम्। यदि तावदन्यदालम्बनमन्यच्चित्तन्तदा द्विचित्तता भविष्यति अथ यदेवालम्बनं तदेव चित्तं तत्कथंश्चित् तेन चित्तेन समनुपश्यति। न चित्तं चित्तं समनुपश्यति तद्यथापि नाम तयैवासिधारया वासिधारा न शक्यते छेत्तुं, न तेनैवाङ्गुल्यग्रेण तदेवाङ्गुल्यग्रं शक्यते स्प्रष्टुम्। एवमेव न तेनैव चित्तेन न तदेव चित्तं शक्यं द्रष्टुम्

तस्यैवं योनिशः प्रयुक्तस्य या चित्तस्यानवस्थानताभोगा शाश्वतता न कूटस्थता नाहेतुकी न प्रत्ययविरुद्धा न ततो नान्यतो तस्यैव नान्यताश्चित्तधाराश्चित्तलतां चित्तधर्म्मताश्चित्तानवस्थिततां चित्ताप्रचारतां चित्तादृश्यतां, चित्तस्वलक्षणतां तथा जानाति। तथा पश्यति यथा तथतां न च निरोधयति। तां च चित्तविवेकतां तथा प्रजानाति तथा पश्यति। इयं कुलपुत्रचित्ते चित्तानुपश्यना नाम्मृत्युपस्थानमिति। तदेवं नास्ति स्वसम्बित्तिस्तदभावात् किं केन लक्ष्यते। किञ्च भेदेन वा तल्लक्षणं। लक्ष्यात्त्वादभेदेन वा। तत्र यदि तावद्भेदेन तदा लक्षभिन्नत्वादलक्षणवल्लक्षणमपि न तल्लक्षणं। लक्षणाच्च भिन्नत्वादलक्ष्यवल्लक्षमपि न लक्ष्यम्। तथा लक्ष्याभिन्नत्वाल्लक्षणस्य लक्षन्निरपेक्षं स्यात्तत्श्च न तल्लक्ष्यलक्षणनिरपेक्षत्वात् खपुष्पवत्। अथ भिन्न लक्षणे तदा लक्षणादव्यतिरिक्तत्वाल्लक्षणस्वात्मवदिहीयते लक्ष्यस्य लक्ष्यता। लक्ष्याच्चाव्यतिरिक्तत्वाल्लक्षस्वात्मवल्लक्षणमपि न लक्षणस्वभावम्। यथाचोक्तम्।

> लक्ष्याल्लक्षणमन्यच्चेत् स्यात्तल्लक्षमलक्षणम्।
> तयोरभावान्यत्वे तु विस्पष्टं कथितं त्वया॥ इति॥

न च विना तत्त्वान्यत्वेन लक्षलक्षणसिद्धावन्या गतिरस्ति तथा च वक्ष्यति। एकीभावे वासिद्धिर्नानाभावेन वा ययोः। न विद्यते तयोः सिद्धिः कथं खलु विद्यते॥ इति॥

अथवोच्यते या सिद्धिर्भविष्यतीति चेन्नैतदेवम्। अवाच्यता हि परस्परविरागपरिज्ञानाभावे सति भवति। यत्र च विरागपरिज्ञानं नास्ति तत्रेदं लक्षणमिदं लक्षमिति विशेषतः परिच्छेदासम्भवे सति द्वयोरप्यभाव एवेति। तस्मादवाच्यतयापि नास्ति सिद्धिः। अपिच यदि ज्ञानं करणं विषयस्य परिच्छेदकः कर्त्ता कर्त्तारमन्तरेण नास्ति करणादीनां सम्भवः छिदिक्रियायामिव। अथ चित्तस्य तत्र कर्त्तृत्वं परिकल्प्यते तदपि न युक्तं यस्मादर्थमात्रदर्शने चित्तस्य व्यापारोऽर्थविशेषो चैतसानाम्। तत्रार्थदृष्टिविज्ञानयोरेका प्रधानक्रिया किन्त्वर्थमात्रपरिच्छित्तिविज्ञानस्य प्रधानक्रियाज्ञानस्य त्वर्थविशेषपरिच्छेद इति नास्ति ज्ञानस्य करणत्वं नापि चित्तस्य कर्त्तृत्वन्ततश्च स एव दोषः। अथ स्यादनात्मानः सर्व्वधर्म्मा इत्यागमात् कर्त्तुः सर्व्वथा अभावात् कर्त्तारमन्तरेणापि विद्यत एव क्रियादिव्यवहार इति। एतदपि नास्ति आगमस्य सम्यगर्थानवधारणात्। एतदेवोक्तं मध्यमकावतारे। अथापि स्याद्यथा शिलापुत्रकस्य शरीरं राहोः शिर इति शरीरशिरोव्यतिरिक्तविशेषणासम्भवेऽपि विशेषणविशेष्याभावोऽस्त्येवं पृथिव्याः स्वलक्षणमिति स्वलक्षणव्यतिरिक्तपृथिव्यसम्भवेऽपि भविष्यतीति। नैतदेवमतुल्यत्वात्। शरीरशिरःशब्दयोर्हि बुद्ध्यादिपाण्यादिमत्सहभाविपदार्थान्तरसापेक्षताप्रवृत्तौ शरीरशिरःशब्दमात्रालम्बनो बुद्ध्युपजननः सहचारिपदार्थान्तरसाकाङ्क्ष एव वर्त्तते कस्य शरीरं कस्य शिर इति। इतरोऽपि विशेषणान्तरसम्बन्धनिराचिकीर्षया शिरापुत्रकराहुविशेषध्वनिना लौकिकसङ्केतानुविधायिना प्रतिकर्त्तुः काङ्क्षामुपहन्तीति युक्तम्। इह तु काठिन्यादिव्यतिरिक्तपृथिव्याद्यसम्भवे सति न युक्तो विशेषणविशेष्यभावः। तीर्थिकैर्व्यतिरिक्तालक्ष्याभ्युपगमात्तदनुरोधेन विशेषणाभिधानमदुष्टमिति यन्नैत-

देवं । नहि तीर्थिकपरिकल्पिता युक्तिविधुराः पदार्थाः स्वसमयेऽभ्युपगन्तुं न्याय्याः । प्रमाणा-
न्तरादेरभ्युपगमप्रसङ्गात् । अपिच पुद्गलादिप्रज्ञप्तिवत्सशरीरोपादानस्य शिलापुत्रकस्य पादान्
तु लौकिकव्यवहाराङ्गभूतस्य विशेषणस्याविचारप्रसिद्धस्यासद्भावात् । शिर उपानस्य च
बाह्योरुपादातुः सद्भावादयुक्तमेतन्निदर्शनम् । शरीरशिरोव्यतिरिक्तस्यार्थान्तरस्यासिद्धेस्तन्मा-
त्रस्योपलम्भात् सिद्धमेव निदर्शनमिति चेन्नैतदेवम् । लौकिके व्यवहार इत्थं विधा
प्रवृत्तेरविचारतश्च लौकिकपदार्थानामस्तित्वात् । यथैव हि रूपादिव्यतिरेकेण विचार्य्यमाण
आत्मा न सम्भवति । अपिच लोकसंवृत्या स्कन्धानुपादायास्यास्तित्वमेवं बाहुशिलापुत्रकयोर-
पीति नास्ति निदर्शनसिद्धिः । एवं पृथिव्यादीनां यद्यपि काठिन्यादिव्यतिरिक्तं विचार्य्यमाणं
लक्ष्यन्नास्ति लक्ष्यव्यतिरेकेण च लक्षणं निराश्रयन्तथापि संवृत्तिरेवेति ।

परस्परापेक्षया तयोः सिद्ध्यासिद्धिं व्यवस्थापयाम्बभूवुराचार्याः । अवश्यं चैतदेवमभ्युपेयम् ।
अन्यथा हि संवृतिरुपपत्त्या न वियुज्यते । तदेवं तत्त्वमेवं स्यात् तन्न संवृतिः । न चोपपत्त्या
विचार्य्यमाणानां शिरापुत्रकादीनामेवासम्भवः । किं तर्हि वक्ष्यमाणया युक्त्या रूपवेदनादी-
नामपि नास्ति सम्भव इति । तेषामपि संवृत्या शिलापुत्रक इवास्तित्वमास्थेयं स्यान्नचैत-
देवमित्यसदेतत् । अथ स्यात् किमनया शुष्कतार्किकया नैव हि वयं सर्व्वत अप्रमाणप्रमेय-
व्यवहारं सत्यमित्याचक्ष्महे किन्तु लोकप्रसिद्धिरेवामुना न्यायेन व्यवस्थाप्यत इति । उच्यते ।
वयमप्येवं ब्रूमः । किमनया शुष्कतार्किकया लौकिकव्यवहारेऽवतारिकया तिष्ठतु तावदेषा
विपर्य्यासमात्रासादितात्मभावसत्तासवृत्तिमुमुक्षूणां मोक्षो गेहककूलमूलापचयहेतुर्यावन्न
तत्त्वाधिगम इति । भवान्मनान् संवृतिपरमार्थसत्यविभागदुर्विदग्धबुद्धितया क्वचिदुप-
पत्तिमवतार्य्य न्यायतो नाशयति । सोऽहं सम्वृतिमत्यव्यवस्थाने चतुर्णां लौकिक एव पक्षे
स्थित्वा संवृत्त्येकदेशनिराकरणोपपत्तिमोपपत्त्यन्तरान्तरमुपपत्त्यन्तरेण विनिवर्त्तयन् लोक वृद्ध
इव लोकाचारात् परिभ्रश्यमानम्भवन्तमेव निवर्त्तयामि न तु संवृत्तिम् । तस्मात् यदि लौकिकि
व्यवहारस्तदावश्यं लक्षवल्लक्षणेनापि भवितव्यन्ततश्च स एव दोषः । अथ परमार्थस्तदा लक्ष्या
भावाल्लक्षणद्वयमपि नास्तीति कुतः प्रमाणद्वयम् । अथ शब्दानामेवं क्रियाकारकसम्बन्ध-
पूर्व्विकाव्युत्पत्तिर्नाङ्गीक्रियते । तदिदमतिकष्टं तेनैव क्रियाकारकसम्बन्धप्रवृत्तैः शब्दैर्भवान्
व्याहरति शब्दार्थक्रियाकरणादिकञ्च नेच्छतीति । अहो वतेच्छामात्रप्रतिबद्धप्रवृत्तितो भवतः
यदा चैव प्रमेयद्वयमव्यवस्थितन्तदा सामान्यलक्षणविषयत्वेनागमादीनां प्रमाणान्तरत्वम्
किञ्च घटः प्रत्यक्ष इत्येवमादिकस्य लौकिकव्यवहारस्यासंग्रहादार्य्यव्यवहाराभ्युपगमाच्चाव्या
पिता लक्षणस्येति न युक्तमेतत् ।

अथ स्यात् घटोपादानं नीलादयः प्रत्यक्षाः प्रत्यक्षप्रमाणपरिच्छेद्यत्वात् । ततश्च यथैव
कारणे कार्य्योपचारं कृत्वा बुद्धानां सुखं उत्पाद इति व्यपदिश्यते । एवं प्रत्यक्षं नीलादिनि-
मित्तकोऽपि घटः कार्य्यकारणोपचारं कृत्वा प्रत्यक्ष इति व्यपदिश्यते । नैवम्विधे विषये
उपचारो युक्तः । उत्पादो हि लोके सुखव्यतिरेकेणोपलब्धः । स च संस्कृतलक्षणस्वभावत्वा-
दनेकदुष्करशतहेतुत्वादसुख एव ससुख इति व्यपदिश्यमानोऽसम्बद्ध एवेत्येवम्विषये युक्त
उपचारः । घटः प्रत्यक्ष इत्यत्र तु नहि घटो नाम कश्चित् यो प्रत्यक्षः पृथगुपलब्धः ।

यस्योपचारात् प्रत्यक्षत्वं स्यात् । नीलादिव्यतिरिक्तस्य घटस्याभावाद्नौपचारिकं प्रत्यक्षत्वमिति चेदेवमपि सुतरामुपचारो न युक्त उपचर्य्यमाणस्याश्रयस्याभावात् । नहि खरविषाणे तैच्च्यमुपचर्य्यते । अपिच लोकव्यवहाराङ्गभूतो घटः पीतनीलादिव्यतिरिक्तो नास्तीति कृत्वा तस्योपचारः कल्प्यते । नत्वेवं सति पृथिव्यादिव्यतिरेकेण नीलादिकमपि नास्तीति नीलादेरस्योपचारिकं प्रत्यक्षत्वं कल्प्यताम् । यथोक्तम् ।

रूपादिव्यतिरेकेण यथा कुम्भो न विद्यते ।
वाय्वादिव्यतिरेकेण तथा रूपं न विद्यते ॥ इति ॥

तस्मादेवमादिकस्य लोकव्यवहारस्य लक्षणेनासंग्रहादव्यापितैव लक्षणं स्यात् । तत्त्वविदपेक्षया हि प्रत्यक्षं घटादीनां नीलादीनाञ्च नेष्यते । लोकसंवृत्यात्वभ्युपगन्तव्यमेव प्रत्यक्षत्वं घटादीनाम् । यथोक्तम् शतके ।

सर्व्व एव घटो दृष्टो रूपे दृष्टे हि जायते ।
ब्रूयात् तत् कस्यचिन्नाम घटः प्रत्यक्ष इत्यपि ।
एतेनैव विचारेण सुगन्धि मधुरं मृदु ।
प्रतिषेधयितव्यानि सर्व्वाण्युत्तमबुद्धिना ॥ इति ॥

अपिचापरोक्षार्थवाचिच्छेदकस्य ज्ञानस्य तृणतुषाग्निप्रत्यक्षकारणत्वात् प्रत्यक्षत्वं व्यपदिश्यते । यस्त्वक्षमक्षं प्रवर्त्तत इति प्रत्यक्षशब्दं व्युत्पादयति तस्य ज्ञानस्येन्द्रियाविषयत्वाच्च न युक्ता व्युत्पत्तिः प्रतिविषयन्तु स्यात् प्रत्यर्थमिति वा । अथ स्याद्यथोभयाधीनायामपि विज्ञानप्रवृत्तावाश्रयस्य पटुमन्दतानुविधानाविज्ञानानां तद्विकारविकारित्वादाश्रयेणैव व्यपदेशो भवति । चक्षुर्विज्ञानमिति । एवं यद्यस्मदर्थमर्थं प्रतिवर्द्धते । तथाप्यक्षमक्षमाश्रित्य वर्त्तमानम्विज्ञानमाश्रयस्य व्यपदेशात् प्रत्यक्षमिति भविष्यति । दृष्टान्तसाधारणेन व्यपदेशो भेरीशब्दो यवाङ्कुर इति । नैतत् पूर्व्वेण तुल्यं तत्र हि विषयेण तुल्यं तत्र हि विषयेण विज्ञाने व्यपदिश्यमाने रूपविज्ञानेष्युपदिश्यमाने रूपविज्ञानमित्येवमादिना विज्ञानषिट्ठोऽस्य भेदो नोपदर्शितः स्यात् । मनोविज्ञानस्य चक्षुरादिविज्ञानैः सहैकविषयप्रवृत्तत्वात् । तदा हि नीलाहिविषयसत्काविज्ञानमित्युक्ते साकाङ्क्ष एव प्रत्ययात् जायते किमेतद्रूपेन्द्रियजं विज्ञानमाहोस्वित् मानसमिति । आश्रयेण तु व्यपदेशे मनोविज्ञानचक्षुरादिविज्ञानविषयप्रवृत्तिसम्भवेऽपि परस्परभेदः सिद्धो भवति । इह तु प्रमाणलक्षणविवक्षया कल्पनापोढमात्रस्य प्रत्यक्षत्वाभ्युपगमे सति विकल्पकादेव तद्विशेषत्वाभिमतत्वादसाधारणकारणेन व्यपदेशे सति न किञ्चित् प्रयोजनमुपलक्ष्यते । प्रमेयपरतन्त्रायाञ्च प्रमाणसंख्याप्रवृत्तौ प्रमेयाकारानुकारितामात्रतया च समासादितात्मभावसत्ताकयोः प्रमाणयोः स्वरूपस्य व्यवस्थापनान्नेन्द्रियेन व्यपदेशः किञ्चिदुपकरोतीति सर्व्वथा विषयेणैव व्यपदेशो न्याय्यः । आलोके प्रत्यक्षशब्दस्य प्रसिद्धत्वादिवक्षतेऽर्थप्रत्यक्षशब्दस्य प्रसिद्धत्वादाश्रयेणैव व्युत्पत्तिराश्रीयते इति चेत् उच्यते । अस्त्ययं प्रत्यक्षशब्दो लोकप्रसिद्धः । स तु यथा लोके तथास्माभिरुच्यत एव । यथास्थितलौकिकपदार्थतिरस्कारेण तु तस्योत्पादे क्रियमाणे प्रसिद्धशब्दतिरस्कारः प्रसिद्धः स्यात् ततश्च प्रत्यर्थमित्येवं

स्यात् । एकस्य च चक्षुर्विज्ञानस्यैकेन्द्रियक्षणाश्रयस्य प्रत्यक्षत्वं न स्याद्बहूनामाश्रयाभावात् । एकैकस्य च प्रत्यक्षत्वाभावे बहूनामपि न स्यात् । कल्पनापोढस्यैव च ज्ञानस्य प्रत्यक्षत्वाभ्युपगमात्तेन च लोकस्य संव्यवहाराभावात् । लौकिकस्य च प्रमाणप्रमेयस्य व्याख्यातुमिष्टत्वाद्व्यर्थैव प्रत्यक्षप्रमाणकल्पना संजायते । चक्षुर्विज्ञानसमङ्गि नीलं जानाति । न तु नीलमिति चागमस्य प्रत्यक्षलक्षणाभिधानार्थस्याप्रस्तुतत्वं स्यात् पञ्चानामिन्द्रियविज्ञानानां । अत्र त्वप्रतिपादकत्वाच्च नागमादपि कल्पनापोढस्यैव विज्ञानस्य प्रत्यक्षत्वमिति न युक्तमेतत्तस्माल्लोके यदि लक्ष्यं यदि वा लक्षणम् स्वसामान्यलक्षणम्वा सर्व्वमेव साक्षादुपलभ्यमानत्वादपरोक्षमतः प्रत्यक्षं व्यवस्थाप्यते तद्विषयेण ज्ञानेन सह द्विचन्द्रादीनां त्वतैमिरकज्ञानापेक्षयाऽप्रत्यक्षत्वम् । तैमिरिकाद्यपेक्षया तु प्रत्यक्षत्वमेवापरोक्षविषयन्तु ज्ञानं साधारणव्यभिचारिलिङ्गोत्पन्नमनुमानम् । साक्षादतीन्द्रियार्थविदामाप्तानां यद्वचनं स आगमसादृश्यादननुभूतार्थाधिगम उपमानं गौरिव गवय इति यथा । तदेवं प्रमाणचतुष्टयाल्लोकस्यार्थाधिगमो व्यवस्थाप्यते तानि च परस्परापेक्षया सिध्यन्ति । सत्सु प्रमेयेषु प्रमेयार्थाः सत्सु प्रमेयेष्वर्थेषु प्रमाणानि । न तु खल्वस्वाभाविकी प्रमाणप्रमेययोः सिद्धिरिति तस्माल्लौकिकमेवास्तु यथादृष्टमित्यलं प्रसङ्गेन प्रस्तुतमेव व्याख्यास्यामः । लौकिक एव दर्शने स्थित्वा बुद्धानां भगवतां धर्म्मदेशना ।

अत्राहुः स्वयूथ्याः । यदिदमुक्तं न स्वत उत्पद्यन्ते भावा इति । यदुक्तं स्वत उत्पत्तिवैयर्थ्यात् । यच्चोक्तं न द्वाभ्यामिति । तदपि युक्तमेकांशभावैः । अहेतुपक्षे त्वकान्तो निकृष्ट इति तत्प्रतिषेधोऽपि युक्तः । यत्तु खल्विदमुच्यते नापि परत इति । तदयुक्तं यस्मात् परभूता एव भगवतामुत्पादका निर्दिष्टाः ।

**चत्वारः प्रत्यया हेतुश्चालम्बनमनन्तरम् ।**
**तथैवाधिपतेयं यत् प्रत्ययो नास्ति पञ्चमः ॥**

तत्र निवर्त्तको हेतुरिति लक्षणात् यो हि यस्य निवर्त्तको बीजभावेनावस्थितः स तस्य हेतुप्रत्ययः । उत्पद्यमानो धर्म्मो येनालम्बनेनोत्पद्यते स तस्यालम्बनप्रत्ययः । कारणस्यानन्तरो निरोधः कार्य्यस्योत्पत्तिप्रत्ययस्तद्यथा बीजस्यानन्तरनिरोधोऽङ्कुरस्योत्पादप्रत्ययः यस्मिन् सति यद्भवति तत्तस्याधिपतेयमिति तत्र ते चत्वारः प्रत्यया ये चान्ये पुरोजात सहजात – पश्चाज्जातयस्त एतेष्वेवान्तर्भूताः । ईश्वरादयस्तु प्रत्यया एव न सम्भवन्तीति अतएवावधारयन्ति प्रत्ययो नास्ति पञ्चम इति । तस्मादेभ्यः परभूतेभ्यो भावानामुत्पत्तिरस्ति परत उत्पत्तिरिति । अत्रोच्यते नैव हि भावानां परभूतेभ्यः प्रत्ययेभ्य उत्पत्तिरिति ।

**यस्मान्नहि स्वभावानां प्रत्ययादिषु विद्यते ।**
**अविद्यमाने स्वभावे परभावो न विद्यते ॥ इति ॥**

यदि हि हेत्वादिषु परभूतेषु प्रत्ययेषु समस्तेषु व्यस्तेषु व्यस्तसमस्तेषु हेतुप्रत्ययसामग्र्यमन्यत्र च क्वचिद्भावानां कार्य्याणामुत्पादात् पूर्व्वं सत्त्वं स्यात्तेभ्य उत्पादो नचैवं यदुत्पादात् पूर्व्वसम्भवः स्यात् । यदि स्याद्गृह्येत चोत्पादवैयर्थ्यं न स्यात्तस्मान्न चास्ति भावानां प्रत्यया

स्वभावः। अविद्यमाने च स्वभावे नास्ति परभावः। भवनं भाव उत्पादः परभावः स न विद्यते। तस्मादयुक्तमेतत् परेभ्यो भावानामुत्पत्तिरिति। अथ भावानां कार्य्याणामङ्कुरादीनां बीजादिषु प्रत्ययेषु सत्स्वविकृतरूपेषु नास्ति स्वभावः सिद्धहेतुकत्वप्रसङ्गात्। तत् किमपेक्ष-परत्वं प्रत्ययादीनां विद्यमाने यो नैव हि मैत्रोपगुप्तयोः परस्परापेक्षं परत्वं न चैवं बीजाङ्कु-रयोर्योगमापद्यम्। तस्मादविद्यमाने स्वभावे कार्य्याणां परभावः परत्वं बीजादीनां नास्तीति परव्यपदेशाभावादेव न परत उत्पाद इति। तस्मादागमाभिप्रायानभिज्ञतयैव परस्य नहि तथागता युक्तिविरुद्धवाक्यमुदाहरन्ति। आगमस्य चाभिप्रायः प्रागेवोपवर्णितः। तदेवं प्रत्ययेभ्यः उत्पादवादिनि प्रतिषिद्धे क्रियात उत्पादवादी मन्यते न चक्षुरुत्पादादयः प्रत्ययाः साक्षाद्विज्ञानं जनयन्ति। विज्ञानजनिक्रियानिष्पादकत्वात्तु प्रत्यया उच्यन्ते। भावः क्रिया-विज्ञानं जनयति। तस्मात् प्रत्ययवती विज्ञानजनिक्रिया विज्ञानजनिकाप्रत्यया। यथा परिक्रिया ओदनस्येति। उच्यते क्रिया न प्रत्ययवती। यदि क्रिया काचित्स्यात्सा चक्षुरादिभिः प्रत्ययैः प्रत्ययवती विज्ञानं जनयेत्। नत्वस्ति कथं कृत्वा इह क्रियेयमिष्यमाणा जाते वा विज्ञान इष्यते अजाते वा जायमाने वा। तत्र जाते न युक्ता क्रिया हि भावनिष्पादका भावश्चेन्निष्पन्नः किमस्य क्रियया जातस्य जन्म पुनरेव च नैव युक्तमित्यादिना मध्यमकावतार-प्रतिपादितमेतत्। अजातेऽपि न युक्ता कर्त्री निनाजनिरियन्न च युक्तरूपस्यादिवचनात्। जायमानेऽपि भावे क्रिया न सम्भवति। जाताजातव्यतिरेकेण जायमानाभावात्। यथोक्तं जायमानोऽर्द्धजातत्वाज्जायमानो न जायते। अथवा जायमानत्वं सर्व्वस्यैव प्रसज्यत इति। यतश्चैवं त्रिषु कालेषु जनिक्रियाया असम्भवस्तस्मान्नास्ति सा।

अतएवाह। क्रिया न प्रत्ययवतीति विशेषणं नास्तीति। विना विशेषणमित्यादिना प्रतिपादितमेतत् मध्यमकावतारे। नहि बन्ध्यापुत्रः श्रीमानित्युच्यते। यद्येवमप्रत्ययवती तर्हि भविष्यतीति। एतदप्ययुक्तमित्याह। नाप्रत्ययवती क्रियाया असम्भवः। प्रत्यया हि ते जनका भविष्यन्ति भावानामिति उच्यन्ते. प्रत्यया नाक्रियावन्तः। यदा क्रिया नास्ति तदा क्रिया-रहिताः। अक्रियावन्तो निर्हेतुका प्रत्ययाः कथञ्जनकाः। अथ क्रियावन्त एव जनका इति उच्यते। क्रियावन्तश्च सन्तु तेनेति प्रकृतेनाभिसम्बन्धः। उत शब्दोऽवधारणे। तत्र क्रियाया अभाव उक्तः कथं क्रियावत्वं प्रत्ययानामिति। यथा च विज्ञान जनिक्रियोक्ता। एवं परिक्रिया-दयोऽपि भावा उक्ता वेदितव्या इति नास्ति क्रियातोऽपि समुत्पत्तिर्भावानामिति। भवति उत्पादाभिधानमर्थशून्यम्। अत्राह। किन्न एतेन क्रियावन्तः प्रत्यया इत्यादि विचारेण यस्माच्चक्षुरादीन् प्रतीत्यप्रत्ययान् विज्ञानादयो भावा जायन्ते। तस्माच्चक्षुरादीनां प्रत्ययत्वं तेभ्यश्चोत्पादा वा ज्ञानादीनामिति। एतदप्ययुक्तमित्याह। उत्पद्यन्ते प्रतीत्येमानितो मे प्रत्ययाः किल। यावन्नोत्पद्यन्त इमे तावन्नाप्रत्ययाः कथं यदि चक्षुरादीन् प्रत्ययान् प्रतीत्य विज्ञान-मुत्पद्यत इत्यर्थमेमे प्रत्यया उच्यन्ते। ननु यावत्तद्विज्ञानाख्यं कार्य्यं नोत्पद्यते तावदिमे चक्षुरा-दयः कथं नाप्रत्ययाः। अप्रत्यया एवेत्यभिप्रायः नचाप्रत्ययेभ्य उत्पत्तिः शिकताभ्य इव तैलस्य। अथ सत्पूर्व्वप्रत्ययाः सन्तः किञ्चिदन्यं प्रत्ययमवेक्ष्य प्रत्ययं सम्प्रतिपद्यत इति। एतदप्ययुक्तं यस्मात् प्रत्ययान्तरमप्रत्ययस्य प्रत्ययत्वेन कल्प्यते तदपि प्रत्ययत्वं सत्यस्य प्रत्ययो भवति।

तत्राप्येषएव चिन्तयति न युक्तमेतत् । किञ्चेह चक्षुरादयो विज्ञानस्य प्रत्ययाः कल्प्यमानाः स्वतोवास्य कल्प्येरन्नसतो वा सर्व्वथा च न युक्त इत्याह । नैवासतो नैव सतः प्रत्ययार्थस्य युज्यते । कस्मादित्याह । असतः प्रत्ययः कस्य सतश्च प्रत्ययेन किम् । असतोह्यर्थस्याविद्यमानस्य कथं प्रत्ययः स्यात् । भविष्यता व्यपदेशो भविष्यतीति चेन्न । भविष्यता चेदयं व्यपदेश इष्टः । शक्तिं विना नास्ति हि भावितास्येत्यादिनोक्तदोषत्वात् । सतोऽपि विज्ञानस्य लब्धजन्मनो निष्फलैव प्रत्ययकल्पना । एवं समस्तानां प्रत्ययानां कार्य्योत्पादनासामर्थ्येनासामर्थ्येनाप्रत्ययत्व मुद्भाव्यातःपरव्यस्तानामप्रत्ययत्वं प्रतिपाद्यते । अत्राह । यद्यप्येवं प्रत्ययानामसम्भवस्तथाप्यतव लक्षणोपदेशात् । प्रत्यक्षसिद्धिस्तत्र निवर्त्तको हेतुरिति लक्षणमुच्यते । हेतुप्रत्ययस्य नचाविद्यमानस्य लक्षणोपदेशो युक्तो बन्ध्यासुतस्येवेति । उच्यते स्याद्धेतुप्रत्ययो यदि तस्य लक्षलक्षणं स्याद्यस्यात् न सन्नासन्नसदसद्धर्म्मो निवर्त्तते तदा कथं निवर्त्तको हेतुः । एवं सति हि युज्यते । तत्र निवर्त्तक उत्पादको यदि निवर्त्त्यो धर्म्मो निवर्त्तेत तमुत्पादकहेतुरुत्पादयेन्न तु निवर्त्तते सदसदुभयरूपस्य निवर्त्तस्याभावात् तत्र सन्निवर्त्तते विद्यमानत्वात् असन्नाप्यविद्यमानत्वात् । सदसन्नापि परस्परविरुद्धस्यैकाभावात् उभयपक्षाभिहितदोषत्वाच्च । यत एव कार्य्यस्योत्पत्ति र्नास्ति हेतुप्रत्ययोऽप्यतो नास्ति ततः । यदुक्तम् । लक्षणसम्भवो विद्यते हेतुप्रत्यय इति तदेवं सति न युज्यते इदानीमालम्बनप्रत्ययनिषेधार्थमाह । अनालम्बन एवायं सर्व्वधर्म्म उपदिश्यते । अथानालम्बने धर्म्मः कुत आलम्बनं पुनरिह सालम्बनधर्म्मा कतमे सर्व्वचित्तचैत्या इत्यागमात् । चित्तचैत्या येनालम्बनेनोत्पद्यन्ते यथायोगं रूपादीनामेतेषामालम्बनप्रत्ययाः अयं च विद्यमानानां वा परिकल्प्येताविद्यमानानां वा परिकल्प्येताविद्यमानानां वा । तत्र विद्यमानानां नार्थस्तदालम्बनप्रत्ययेन धर्म्मस्य व्युत्पत्त्यर्थमालम्बनं परिकल्प्येत स चालम्बनात् पूर्व्वं विद्यमान एवेति । अथैवमनालम्बने धर्म्मे स्वात्मना प्रसिद्धे किमस्यालम्बयोगेन परिकल्पितेनेत्यनालम्बन एवायं स न विद्यमानो धर्म्मचित्तादिकं केवलं सारम्बण इत्युच्यते भवद्भिः स्वमनीषिकया । नन्वस्यारम्बणेन कश्चित् सम्बन्धोऽस्ति । अथाविद्यमानस्यारम्बणं परिकल्प्यते । तदपि न युक्तम् । अनारम्बण एवायमित्यादि । अविद्यमानस्य हि नास्त्यारम्बणेन योगः । अनारम्बण एवायं स धर्म्म उपदिश्यते भवद्भिः सारम्बण इति वाक्यशेषः ।

अथ नारम्बणे धर्म्मे कुत आरम्बणं वत ।

अथ शब्दः प्रश्ने कुत इति हेतौ । तेनायमर्थः अथैव तेनारम्बणे धर्म्मे असत्य विद्यमाने भूयः कुत आलम्बनकाभावादारम्बणस्याप्यभाव इत्यभिप्रायः । कथं तर्हि सारम्बणचित्तचैत्याः । प्राकृतमेतल्लक्षणं न पारमार्थिकमित्यदोषः । इदानीं समनन्तरप्रत्ययनिषेधार्थमाह ।

अनुत्पन्नेषु धर्म्मेषु निरोधो नोपपद्यते ।
नानन्तरमतो युक्तं निरुद्धप्रत्ययश्च कः ॥

तत्र पश्चिमश्लोकस्यार्द्धपादव्यत्ययो द्रष्टव्यः । च शब्दश्च निम्नक्रमे निरुद्धेचेति तेनैवम्पाठः । निरुद्धे च प्रत्ययः कः । नानन्तरमतो युक्तमिति । श्लोकबन्धार्थन्त्वेवमुक्तं । तत्र कारणस्यानन्तरो निरोधः । कार्य्यस्योत्पादप्रत्ययसमनन्तरप्रत्ययलक्षणमत्र विचार्य्यते । वीजनिरोध इष्यते । एवं सति निरुद्धे वीजेऽभावीभूतेऽङ्कुरस्य कः प्रत्ययः । को वा वीजनिरोधस्य प्रत्यय इति ।

उभयमेतदहेतुकमित्याह। निरुद्धे च कः प्रत्यय इति। च शब्दोऽनुत्पन्नशब्दापेक्षः। तेनानुत्पन्ने चाङ्कुरे वीजादीनान्निरोध इष्यमाणेऽप्युभयमेतदहेतुकमापद्यत इति नानन्तरमतोयुक्तम्। अथवा न स्वतो नापि परत इत्यादिनोत्पादोनिषिद्धस्तमभिसन्धायाह। अनुत्पन्नेषु धर्म्मेषु निरोधो नापि विद्यते। नानन्तरमतो युक्तमिति। अपि च निरुद्धप्रत्ययश्च क इत्यत्र पूर्व्वक्रमेव व्याख्यानम्। इदानीमधिपतिप्रतिप्रत्ययस्वरूपनिषेधार्थमाह।

भावानान्निःस्वभावानान्न सत्ता विद्यते यतः।
सतीदमस्मिन् भवतीत्येतन्नैवोपपद्यते॥

इह यस्मिन् सति यद् भवति तत्तस्याधिपतेयमित्यधिपतिप्रत्ययलक्षणम्। भावानाञ्च प्रतीत्यसमुत्पन्नत्वात् स्वभावाभावे कुतस्तदेतस्मिन्निति कारणत्वेन व्यपदिश्यते। कुतस्तद्यदिदं कार्य्यत्वेन तस्मान्नास्ति लक्षणतोऽपि प्रत्ययसिद्धिः। अत्राह तन्त्वादिभ्यः घटादिकमुपलभ्य घटादेस्तन्त्वादयः प्रत्यया इति उच्यते। घटादि फलप्रवृत्तेरेव स्वरूपतो नास्ति कुतः प्रत्ययानां प्रत्ययत्वस्येति। यथा च घटादिफलप्रवृत्तिरसती तथा प्रतिपादयन्नाह।

न च व्यस्तसमस्तेषु प्रत्ययेष्वस्ति तत्फलम्।
प्रत्ययेभ्यः कथं तच्च भवेन्न प्रत्ययेषु तत्॥

तत्र व्यस्तेषु तन्तुतुरीरवेनशरशलाकादिषु प्रत्ययं घटो नास्ति तत्रानुपलभ्यमानत्वात् कारणबहुत्वाच्च कार्य्यबहुत्वप्रसङ्गात्। समुदितेष्वपि तत्त्वादिषु नास्ति घटः प्रत्येकमवयवेष्वविद्यमानत्वात्। एकस्य कायस्य खण्डश उत्पत्तिप्रसङ्गात्। तस्मात् फलाभावान्न सन्ति प्रत्ययाः। स्वभावान्न सन्ति प्रत्ययाः स्वभावत इति। अथासदपि तत्तेभ्यः प्रवर्त्तते फलमित्यभिप्रायः स्यात् अप्रत्ययेष्वपि नास्ति फलमिति। अप्रत्ययेभ्योऽपि वीरणादिभ्यः कस्मान्नाभिप्रवर्त्तते घट इतिं नास्ति फलप्रवृत्तिः स्वरूपतः। अत्राह यद्यन्यत् फलं स्यादन्यएव प्रत्ययास्तदा किं प्रत्ययेषु फलमस्ति नास्तीति स्याच्चिन्तास्ति तु व्यतिरिक्तं फलं किन्तर्हि प्रत्ययमयमवयवमिति। उच्यते।

फलञ्च प्रत्ययमयं प्रत्ययाश्चास्वयंमयाः। फलमस्वयंमयोत्म यत्तत्प्रत्ययमयं कथम्॥

यदि प्रत्ययमयं प्रत्ययविकारः फलमिति व्यवस्थाप्यते तदयुक्तम्। यस्मात्तेऽपि प्रत्यया अस्वयंमया अप्रत्ययस्वभावा इत्यर्थः। तन्तुमयो हि पट इत्युच्यते। घटा यदि तन्तव एव स्वभावसिद्धाः। स्युस्तेह्यंशुमया अंशुविकारा न स्वभावसिद्धास्ततश्च तेभ्योऽस्वयंमयस्वभावेभ्यो यत् फलं घटाख्यन्तत् कथन्तन्तुमयं भविष्यति।

यथोक्तं।

पटः कारणतः सिद्धः सिद्धं कारणमन्यतः।
सिद्धिर्यस्य स्वतो नास्ति तदन्यज्जनयेत् कथम्॥ इति॥

तस्मान्न प्रत्ययमयं फलं सम्बिद्यते। अप्रत्ययमयन्तर्ह्यस्तु। नाप्रत्ययमयं फलं सम्बिद्यत इति तन्तुमयो यदा घटो नास्ति तदा कथं हिरण्मयः स्यात्। अत्राह। माभूत् फलं प्रत्ययाप्रत्ययनियमस्तु विद्यते। तथाच भगवान् ब्रवीति। यद्यसत्फलं प्रत्ययेभ्यः प्रवर्त्तते। अप्रत्यया एव स्युः। सति हि फले इमेऽस्य प्रत्यया इमेऽप्रत्यया इति स्यात्। तच्च विचार्य्यमानन्नास्तीति। फलाभावात्। प्रत्ययाप्रत्यया कुतः। प्रत्ययाश्चाप्रत्ययाश्चेति समासः। तस्मान्नास्ति भावानां स्वभावतः समुत्पत्तिरिति। यथोक्तमार्य्यरत्नाकरसूत्रे।

शून्य विद्ये नहि विद्यते क्वचित् अन्तरिक्षि शकुनस्य वा पदम्।
यन्न विद्यति स्वभावतः क्वचित् सा न जातु परहेतु भविष्यति॥
यस्य नैवहि स्वभाव लभ्यते सोऽस्वभावः परप्रत्ययः कथम्।
अस्वभावूपनु किञ्चनिष्यति एष हेतु सुगतेन देशितः॥
सर्व्वधर्म्म अचला दृढ़स्थिता निर्व्विकार निरुपद्रवाः शिवाः।
अन्तरिक्षपथतुल्य जानका अत्र युज्यति जगं अजानकम्॥
शैलपर्व्वत यथा अकंपिया एव धर्म्म अविकम्पियाः सदा।
नोच्यवन्ति नपि नोपि पद्यपू एव धर्म्मत जिनेन देशिता॥ इत्यादि
तथा।
जोजनपि जायति नोवुपपद्यनोच्यवतेनपि जीयति धर्म्मः।
तं जिन देशयती नरसिंघस्तत्र निवेशति सत्वशतानि॥
यस्य स्वभाव न विद्यति कश्चिन्नोपर भाव तु केन विलुद्धः।
नान्तरतो नपि वाहिरतो वालत्यति तत्र निवेशयि नाथः॥
शान्तमतो कथिता सुगतेनानोवगर्ज उपलभ्यति काचि।
तत्र च व्याहरसी गतियुक्ता युक्त कुमोचयसी वह्नसत्वान्॥
इति विस्तरः॥

इत्याचार्य्यचन्द्रकीर्त्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ प्रत्ययपरीक्षा नाम प्रथमप्रकरणम्।

---

अत्राह । यद्यप्युत्पादप्रतिषेधात् प्रतीत्यसमुत्पादस्यानिरोधादिविशेषणसिद्धिरुक्ता तथाप्यना-गमानिर्गमः प्रतीत्यसमुत्पादसिद्ध्यर्थं लोकप्रसिद्धगमनागमनक्रियाप्रतिषेधार्थं किञ्चिदुपलभ्य-कारमुच्यतामिति उच्यते । यदि गमनं नाम स्यान्नियतन्तद्गते वाऽध्वजाते परिकल्प्यतां गते गम्यमाने वा । सर्व्वथा च न युज्यत इत्याह ।

गतन्न गम्यते तावदगतं नैव गम्यते ।
गतागतविनिर्मुक्तं गम्यमानन्न गम्यते ॥

तत्रोपरतगमिक्रियमध्वजातं गतमित्युच्यते । आविश्यमानं गमिक्रियया वर्त्तमानं गम्यत इत्युच्यते । यद्गतमुपरतगमिक्रियं तद्वर्त्तमानगमिक्रियायोगवाचिना गम्यते इत्यनेन शब्देना-च्यमानमसम्बद्धमिति कृत्वा गतन्तावद्ग गम्यत इति न युज्यते । तावत् पृष्टे न च प्रतिषेधक्रमं दर्शयति । अगतमिति न गम्यते । अगतं ह्यनुपजातगमिक्रियमनागतमुच्यते गम्यत इति च वर्त्तमानताऽनागतवर्त्तमानयोरत्यन्तभेदादगतमपि गम्यत इति न युज्यते । यद्यगतं कथं गम्यतेऽथ गम्यते न तदगतमिति गम्यमानेऽपि नास्ति गमनं । यस्माद्गतागतविनिर्मुक्तं गम्यमानं न गम्यते । इह हि गन्ता यं देशमतिक्रान्तः स तस्य देशो गतो यं च नातिक्रान्तः सोऽस्यानागतः । न च गतागतव्यतिरेकेण तृतीयमपरमध्वजातं पश्यामो गम्यमानं नाम । यतश्चैवं गम्यमानं न गम्यते । गम्यत इति न प्रज्ञायते तस्मान्नास्ति गम्यमानम् । अतो न तद्गमिक्रियया आविश्यते न गम्यत इति । नास्ति गम्यमानेऽपि गमनम् । अथास्यागन्तुः गच्छतो यश्चरणाक्रान्तदेशः स गम्यमानः स्यादिति । नैवं चरणयोरपि परमाणुसङ्घातत्वात् । अङ्गुल्यग्रावस्थितस्य परमाणोर्यः पूर्व्वो देशः स तस्या गतेरन्तर्गतः । पार्ष्ण्यवस्थितस्य चरण-परमाणोर्य उत्तरदेशः सोऽस्यागतेरन्तर्गतः । न च परमाणुव्यतिरेकेण चरणमस्ति तस्मान्नास्ति गतागतव्यतिरेकेण गम्यमानं । यथाचैवं चरणे विचार एवं परमाणूनामपि पूर्व्वापरदिग्भाग सम्बन्धेन विचारः कार्य्य इति । अथाध्वगतं गम्यमानं उक्तमुद्भूतजायमानविचारेण । तस्माद्गम्यमानं न गम्यत इति सिद्धं । तत्राह । गम्यत एव गम्यमानमिह हि ।

चेष्टा यत्र गतिस्तत्र गम्यमाने च सा यतः ।
न गते नागते चेष्टा गम्यमाने गतिस्ततः ॥

तत्र चेष्टा चरणोत्क्षेपपरिक्षयलक्षणा । यतो वर्ज्जतो गन्तुर्यत्र देशे चेष्टा गतिस्तत्रैव देशे सा च चेष्टा न गतेऽध्वनि सम्भवति नाप्यगते किन्तु गम्यमान एव ततश्च गम्यमाने गतिः । यत्र हि गतिरुपलभ्यते तद्गम्यमानम् । तच्च गमिक्रियया आविश्यते तस्माद्गम्यमानमेव गम्यते इति । एकोऽत्र गमिर्ज्ञानार्थः । अपरश्च देशान्तरसंप्राप्त्यर्थ इति । एवमपि परिकल्प्यमाने गम्यमानं न गम्यत इति आह ।

गम्यमानस्य गमनं कथं नामोपपत्स्यते ।
गम्यमानं विगमनं यदा नैवोपपद्यते ॥

इह हि गमिक्रियायोगादेव गम्यमानव्यपदेशमिच्छति । भवांस्तच्च गम्यत इति ब्रवीति । एकैवात्र गमिक्रिया गमागमगम्यमानव्यपदेशो भवतु । काममध्व गम्यत इति भूयः क्रियासम्बन्धो गम्यमानस्य न युज्यत इति गम्यमानस्य गमनं कथं नामोपपत्स्यते कारणमाह । गम्यमानं विगमनं यदा नैवोपपद्यत इति । गम्यमानमिति गम्यत इत्यर्थः । विगतं गमनं विगमनं । एकस्या गमिक्रियाया गम्यमानमित्यत्रोपयुज्यत्वाद्द्वितीयाया अभावाच्च गम्यत इत्ययं व्यपदेशो विना गमनेन यदा नैवोपपद्यते तदा गम्यमानं गम्यत इति परिपूर्णो वाक्यार्थो नास्तीत्यभिप्रायः । गम्यमानमित्येतावन्मात्रमेव सम्भवति द्वितीयक्रियाभावात् न तु गम्यत इति । अथ गम्यत इत्यत्रैव गमिक्रियासम्बन्ध इष्यते । एवं सति गम्यमानव्यपदेशे नास्ति क्रियासम्बन्ध इति न परिपूर्णता वाक्यार्थस्येत्याह ।

गम्यमानस्य गमनं यस्य तस्य प्रसज्यते ।
ऋते गतेर्गम्यमानं गम्यमानं हि गम्यते ॥

यस्य वादिनो गम्यमानस्य गमनमिति पक्षः । गम्यमाने संज्ञाभूते गमिक्रियाशून्यया गमिक्रियामाधेयभूतामिच्छति । यस्य पक्षे ऋते गतेर्गम्यमानमिति प्रसज्यते तस्य गतिर्गहित गमनं स्यात् । यस्मादस्य गम्यमानं हि गम्यते । हि शब्दो यस्मादर्थे गतिरहितमेव गम्यमानमस्तस्य वादिनो गम्यते गम्यत इत्यत्र क्रियाप्रयोगात्तस्माद्गतिरहितं गम्यमानं प्रसज्यते ।
अथोभयत्रापि क्रियासम्बन्ध इष्यते । गम्यमान गम्यत इत्यत्र च ।

एवमपि गम्यमाने प्रसक्तङ्गमनद्वयम् ।
येन तद्गम्यमानं च यच्च तु गमनं पुनः ॥

येन गमनेन योगाद्गम्यमानव्यपदेशं प्रतिलभतेऽध्वा । तदेकङ्गमनं तत्र गमनेऽधिकरणभू द्वितीयं गमनं येन स गम्यते । एतन्गमनद्वयं । गम्यमानस्य गमने सति प्रसक्तं भवतु गमनद्व का दोष इति चेत् । अयं दोषो यस्मात् । द्वौ गन्तारौ प्रसज्येते । प्रसक्ते गमनद्वये किं पुन कारणद्वयप्रसङ्ग इत्याह ।

गन्तारं हि तिरस्कृत्य गमनन्नोपपद्यते ।
यस्मादवश्यं हि क्रिया स्वसाधनमपेक्षते ॥

कर्मकर्त्तृगम्या । गमिक्रियाचैवं कर्त्तर्यवस्थिताऽतो गन्तारमपेक्षते । नास्ति चैकस्मिन् गच्छति देवदत्ते द्वितीयः कर्त्तेति । अतः कर्त्तृद्वयाभावान्नास्ति गमनद्वयन्ततश्च गम्यमा

गम्यत इति नोपपद्यते । अथ स्याद्यथायं देवदत्तः स्थितः स न भाषते पश्यति न तदेकोऽनेकक्रियो दृष्टः । एवमेकस्मिन् गन्तरि क्रियाद्वयम्भविष्यतीति । नैव शक्तिः हि कारको न द्रव्यं क्रियाभेदाच्च तत्साधनस्यापि शक्तेः भिन्न एव भेदः । न हि स्थितिक्रियया वक्ता स्यात् द्रव्यमेकमिति चेत् भवत्वेवम् । न तु द्रव्यं कारकं किन्तर्हि शक्तिः सा च भिद्यत एव । अपि च समदृशक्रियाद्वयकारकत्वन्नैकदेशिकस्य दृष्टमतो नैकस्य गन्तुर्गमनद्वयम् । अत्राह । यद्यप्येवन्तथापि गन्तरि देवदत्ते गमनमुपलभ्यते देवदत्तो गच्छतीति व्यपदेशात्ततश्चिरोद्यत एव गमनं गमनाश्रयगन्तृसद्भावादुच्यते । स्यादेवं यदि गमनाश्रयो गन्ता स्यात् । कथमित्याह ।

गन्तारञ्च तिरस्कृत्य गमनन्नोपपद्यते ।

गमनेऽसति गन्ताथ कुत एव भविष्यति ॥

गन्तारमन्तरेण निराश्रयं गमनमसदित्युक्तं ततश्च गन्तारं च तिरस्कृत्य प्रत्याख्याय गमनं नास्ति । असति गमने कुतो निर्हेतुको गन्ता अतो नास्ति गमनम् । अत्राह । विद्यत एव गमनन्तद्वतस्तेन व्यपदेशात् । इह गन्ता गमनेन युक्तः तद्योगाच्च गच्छति । यदि गमनं न स्याद्गमनवतो देवदत्तस्य गच्छतीति व्यपदेशो न स्यात् । दण्डाभावे दण्डिव्यपदेशाभाववत् । उच्यते स्याद्गमनं । यदि गच्छतीत्येव व्यपदेशः स्याद्यस्मात् ।

गन्ता न गच्छते तावदगन्ता नैव गच्छति ।

अन्यो गन्तुरगन्तुश्च कस्तृतीयो हि गच्छति ॥

इह गच्छतीति गन्ता स तावन्न गच्छति यथा च न गच्छति तथोत्तरेण श्लोकत्रयेण प्रतिपादयिष्यति । अगन्तापि न गच्छति । अगन्ता हि नाम यो गमिक्रियारहितः । गच्छतीति च गमिक्रियायोगप्रवृत्तः शब्दः । यद्यभावगन्ता कथं गच्छति । अथ गच्छति नासावगन्तेति तदुभयव्यतिरिक्तो गच्छतीति चेन्नैवं कोहि नाम गन्ता न गन्तृविनिर्मुक्तस्तृतीयोऽस्ति योगवतीति कल्प्यते तस्मान्नास्ति गमनं । अत्राह नागन्ता गच्छति नाप्युभयरहितः किन्तर्हि गन्तैव गच्छतीति । एतदप्यसत् । किं कारणं यस्मात् ।

गन्ता तावद्गच्छतीति कथमेवोपपत्स्यते ।

गमनेन विना गन्ता यदा नैवोपपद्यते ॥

गन्ता गच्छतीत्यत्र वाच्य एकैव गमिक्रिया तया च गच्छतीति व्यपदिश्यते । गन्तेति तु व्यपदेशे नास्ति द्वितीया गमिक्रियेति । गमनेन विना गन्ताऽगच्छन् गन्तेति यदा न सम्भवति तदा गन्ता गच्छतीति न युज्यते । कामं गच्छतीत्यस्तु । गन्तेति तु न सम्भवतीति तदयुक्तं । अथ गतियोगात् सगतिक एव गन्ता तथापि द्वितीयगमिक्रियाभावाद्गच्छतीति व्यपदेशो न स्यादित्याह ।

पक्षे गन्ता गच्छतीति यस्य तस्य प्रसज्यते।
गमनेन विना गन्ता गन्तुर्गमनमिच्छतः॥

यस्य वादिनो गतिक्रियायोगादेव गन्तेति पक्षः तस्य गन्तुर्गमनमिच्छतः स गन्तृपदेनो-द्गमनेन विना गन्ता गच्छतीति स्यात् द्वितीयगमिक्रियाभावादतो गच्छतीति न युज्यते। गच्छतीति एतस्यार्थे गतइति शब्दो गतेन विना गन्तेत्यत्र वाच्यः। तयोभयत्रापि गतियोग इष्यते गन्ता गच्छतीति। एवमपि

गमने द्वे प्रसज्येते गन्ता यद्युत गच्छति।
गन्तेति वोच्यते येन गन्ता सोऽन्यश्च गच्छति॥

येन गमनेन योगाद्गन्तेत्युच्यते व्यपदिश्यते तदेकं गमनं गन्ता भवन् यत्र गच्छति यां च गतिक्रियां करोति तदेतद्गमनद्वयं प्रसक्तमतो गन्तृद्वयप्रसङ्ग इति पूर्व्ववद्दूषणं वक्तव्यम्। तस्मान्नास्ति गच्छतीति व्यपदेशः। अत्राह। यद्यप्येवम्। तथापि देवदत्तो गच्छतीति व्यपदेशसद्भावाद्गमनमस्तीति नैवम्। यस्माद्देवदत्ताश्रयैव नैवं चिन्ता किमसौ गन्ता स गच्छति उत गन्तुमिच्छति तद्व्यतिरिक्त इति सर्व्वथा च नोपपद्यत इति यत्किञ्चिदेतत्। अत्राह। विद्यत एव गमनं तदारम्भसद्भावात्. इह देवदत्तः स्थित्युप-मर्द्देनगमनमारभते। न चाविद्यमानम् कूर्मरोमप्रचार्य्यादिकमारभते। उच्यते। स्याद्गमनं यदि तदारम्भ एव स्याद्यस्मात्।

यस्माद्गतो नारभते गन्तुमारभतेऽगतः।
नारभ्यतेऽगम्यमाने गन्तुमारभ्यते कुह॥

यदि गमनारम्भो भवेत्तद्गते चाध्वनारभ्यते गम्यमाने वा। तत्र वा तेन गमनन्नारभ्यते तद्धि नामोपरतगमिक्रियं यदि तत्र गमनमारभ्यते तद्गतमित्येव स्यादतीतवर्त्तमानयो विरो-धात्। अगतेऽपि गमनमारभ्यतेऽनागतवर्त्तमानयोर्विरोधात्। नापि गम्यमाने तदभावात् क्रियाद्वयप्रसङ्गात् कर्त्तृद्वयप्रसङ्गाच्च। तदेवं सर्व्वत्र गमनारम्भमपश्यन्नाह अगतेऽपि गमन-मारभ्यते अनागतवर्त्तमानयोर्विरोधात् नापि गम्यमाने तदभावात् क्रियाद्वयप्रसङ्गात् कर्त्तृ-द्वयप्रसङ्गाच्च। तदेवं सर्व्वत्र गमनारम्भवर्ज्जित। गन्तुमारभ्यते कुहेति। यथा च गमनं सम्भवति तथा प्रतिपादयन्नाह।

अतोऽस्ति गमनारम्भाद्गम्यमानं न चागतं।
यत्रारभ्येत गमनं स गच्छेत् गमनं कुतः॥

इह देवदत्तो यदावस्थित आस्ते स तदा गमनमारभते तस्य गमनारम्भात्पूर्व्वं न गम्य-मानमध्वजातमिति। न च गतं यत्र गमनमारभ्यते। तस्माद्गतगम्यमानाभावादेनयोर्न

गमनारम्भः। अथ स्याद्यद्यपि गमनारम्भात्पूर्व्वतः गम्यमानम् तथाप्यगतमस्ति तत्र गमनारम्भः स्यादिति उच्यते। अगमनं कुतः। अनुपजातगमिक्रियमनारब्धगमिक्रियमगतं तत्र गमनारम्भ इत्यसम्बद्धमेतदित्याह। अगते गमनं कुत इति। यद्यपि गतागतगम्यमानेषु गमनारम्भो नास्ति गतागतगम्यमानानि तु सन्ति न वा सन्ति गमने एतानि युज्यत इत्युच्यते। स्याद्गमनं यद्येतान्येव स्युः। सति हि गमिक्रियाप्रारम्भे यत्रोपरता गमिक्रिया तद्गतमिति परिकल्प्येत यत्र वर्त्तमानाद्गम्यमानं तदगतमिति। यदा तु गमिक्रियाप्रारम्भ एव नास्ति तदा गतं किं गम्यमानं को विकल्प्यते। अदृश्यमान आरम्भे गमनस्यैव सर्व्वथा प्रारम्भेऽनुपलभ्यमाने किं मिथ्याध्वत्रयं परिकल्प्येत कुतो वा तद्व्यपदेशकारणं गमनमित्युक्तमेतदत्राह। विद्यत एव गमनतत्प्रतिपक्षसद्भावात्। यस्य च प्रतिपक्षोऽस्ति तदस्ति। आलोकान्धकारवत् पारावारवत् संशयनिश्चयवच्च। अस्ति च गमनस्य प्रतिपक्षस्थानमित्युच्यते। स्याद्गमनं यदि तत्प्रतिपक्षस्थानं स्यात्। कथमिहेदं स्थानं गन्तुरगन्तु स्तदपरस्यवा परिकल्प्येत सर्व्वथा च न युज्यत इत्याह।

गन्ता न तिष्ठते तावदगन्ता नैव तिष्ठति।
अन्यो गन्तुरगन्तुश्च कस्तृतीयोऽथ तिष्ठति॥

यथा गन्ता न तिष्ठति तथोत्तरेण श्लोकेनाख्यास्यति। अगन्तापि न तिष्ठति स हि तिष्ठत्येव तत् किमपरया स्थित्या प्रयोजनमेकया स्थित्याऽगन्तापरया तिष्ठतीति नैवं यस्मादगन्ता तावत्तिष्ठतीति कथमेवोपपद्यते।

गमनेन विना गन्ता यदा चैवोपपद्यते।

यदायं तिष्ठतीत्युच्यते तदा स्थितिविरोधिगमनस्य नास्थितिद्वयप्रसङ्गात् इति पूर्व्ववद्दोषः। गन्त्रगन्तृरहितश्चान्यो नास्ति। अत्राह। नागन्ता तिष्ठति नापि गन्तुरगन्तुश्चान्यः किं तर्हि गन्तैव तिष्ठतीति स्थित्या च गमनम्। गन्तृव्यपदेशो नास्ति। अतो गन्ता तिष्ठतीति नोपपद्यते। अत्राह। विद्यत एव गमनं निवृत्तिसद्भावात्। इह गतो निवृत्तमानः स्थितिमारभते। गमनाभावे तु ततो निवर्त्तते उच्यते स्याद्गमनं यदि तन्निवृत्तिरेव स्यात्। यस्मान्न तिष्ठति गम्यमानान्न गतान्नागतादपि। तत्र गन्ता गतादध्वनो निवर्त्तते गत्यभावात्। अगतादपि गत्यभावादेव गम्यमानादपि न निवर्त्तते तदनुपभेद्यगमिक्रियाभावाच्च। तस्मान्न गतिनिवृत्तिरत्राह। यदि गमनप्रसिद्धिद्धिस्थित्यभावात् गतिरसती। एवन्तर्हि गमनप्रसिद्धये स्थितिं साधयामस्तत्सिद्धौ गमनसिद्धि स्तस्माद्विद्यत एव स्थानं प्रतिद्वन्द्विसद्भावात् स्थितं हि प्रतिद्वन्द्विगमनं तदस्थितिनश्च स्थितिरपि प्रतिद्वन्द्विसद्भावात् एतदप्ययुक्तम्। यस्मात् संवृत्तिश्च निवृत्तिश्च गते समा। अत्र हि यद्गमनं स्थितिसिद्धये वर्णितं तद्गत्या समं गतिदूषणेन तुल्यमित्यर्थः। यदा गन्ता न तिष्ठति तावदित्यादिना गतिप्रसिद्धये स्थितेर्हेतुत्वेनोपात्ताया दूषणमुक्तमेवमिहापि स्थितिप्रसिद्धये गमनहेतुत्वेनोपात्ते

स्थानान्न गच्छति तावदित्यादिना श्लोकद्वयपाठपरिवर्त्तन दूषणं वक्तव्यमिति नास्ति गमनं तद्भावात् प्रतिद्वन्द्विनी स्थितिरपीति। एवं तावद्गमनं गत्या तुल्यं प्रत्याख्येयम्। अथ स्याद्विद्यत एव स्थानं तदारम्भात्। इहेत्युपमर्द्दनस्थानमारभते कथं तन्न स्यादुच्यते। सम्प्रवृत्तिश्च गतेः समा वाच्या। तत्र यथापूर्व्वङ्गन्तेनारभ्यते कुहेत्यादिना श्लोकत्रयपरिवर्त्तन स्थानसंप्रवृत्तिरपि गतेः समा। स्थाननिवृत्तिरपि गतिनिवृत्या समा प्रत्याख्येया। यथा गतिनिषण्णो न तिष्ठति गम्यमानान्न गतान्नागतादपीति गते दूषणमुक्तमेवं स्थितिनिषेधेऽपि निर्गच्छतो स्थीयमानान्नास्थितादपीति गत्या तुल्यं दूषणमिति नास्ति स्थितिर्नैतत् संभवतीत्याह। 65645

> तदेव गमनं गन्तुः स एवेति न युज्यते।
> अन्य एव पुनर्गन्ता गतेरिति न युज्यते॥

कथं पुनर्न युज्यत इत्याह।

> तदेव गमनं गन्ता स एव हि भवेद्यदि।

एकान्त तदभावात् कुतो गतिप्रतिपत्तस्थितिमद्भाववादिनाङ्गतेः सिद्धिरिति। अपि च यदि गमनं स्याद्गन्तृव्यतिरेकेण वा स्यादव्यतिरेकेण वा सर्व्वथा च विचार्य्यं वः प्रसज्येत। कर्त्तुः कर्म्मण एव च येयं गमिक्रिया सा यदि गन्तुरव्यतिरिक्ता नान्या स्यात्तदा कर्त्तुः क्रियायाश्चैकत्वं स्यात्तत्श्चेयं क्रियायम् कर्त्तेति विशेषो न स्यात्। न च च्छिदिक्रियाया श्छेत्तुश्चैकत्वं मतं। यदेव गमनं स एव गन्तेति न युज्यते। अन्यत्वमपि अनयोर्यथा नास्ति तथा प्रतिपादयन्नाह।

> अन्य एव पुनर्गन्ता गन्तुर्यदि विकल्प्यते।
> गमनं स्यादृते गन्तुर्गन्ता स्याद्गमनादृते॥

यदि हि गन्तृगमनयोरन्यत्वं स्यात्तदा गमननिरपेक्षो गन्ता स्यात् गन्तृनिरपेक्षं च गमनं गृह्येत। पृथक् सिद्धं घटादिव पटः। न च गन्तुः पृथक् सिद्धं गमनं गृह्यत इति। अन्य एव पुनर्गन्ता गतेरिति न युज्यत इति प्रसाधितमेतत्तदेवम्।

> एकीभावेन वा सिद्धि र्नैकीभावेन वा ययोः।
> न विद्यते तयोः सिद्धिः कथं नु खलु विद्यते॥ इति।

नास्ति गन्तृगमनयोः सिद्धिरित्यभिप्रायः। अत्राह इह देवदत्तो गन्ता गच्छतीति लोकप्रसिद्धं तत्र यथा वक्ता भावं भाषते कर्त्ता क्रियां करोतीति प्रसिद्धमेवम्। यथा गत्या गतिरभिव्यज्यते तां गच्छतीति न यथोक्तदोषः। तदप्यसत्। यस्मात्।

> गत्या ययोच्यते गन्ता गतिन्तां स न गच्छति।

यया गत्या देवदत्तो गच्छतीति अभिव्यज्यते। स गन्ता संस्तावन्न गतीः प्राप्नोति यदि वा न करोतीत्यर्थः। यस्मान्न गतिपूर्व्वोऽस्ति। गतेः पूर्व्वो गतिपूर्व्वः। यदि गन्ता गतेः पूर्व्वसिद्धः स्यात् स तां गच्छेत् कथम्। यस्मात् कश्चित् त्वं विद्धि गच्छेति। कश्चिद्देवदत्तः किञ्चिदर्थान्तरभूतं ग्रामं नगरम्वा गच्छतीति दृष्टः। न चैवं यया गत्या गन्तेत्युच्यते। तस्याः पूर्व्वं सिद्धिरूपो गतिनिरपेक्षो गन्ता नामास्ति यस्तां गच्छेत्।

अथ मन्यसे यया गत्या गन्तेत्यभिव्यज्यते तामेवासौ न गच्छति। किन्तर्हि ततोऽन्यां गतिमिति। एतदप्यसद्यस्मात्।

गत्या ययोच्यते गन्ता ततोऽन्यः स न गच्छति।
गती द्वे नोपपद्येते यस्मादेकः प्रगच्छति॥

यया गत्या गन्ताभिव्यज्यते न त्वन्यामपि स गन्ता सन्न गच्छति। गतिद्वयप्रसङ्गात्। यया गत्या गन्ताभिव्यज्यते गन्ता सन् यां चापरां गच्छतीत्येतद्गतिद्वयं प्रसक्तं न चैकस्मिन् गन्तरि गतिद्वयमित्ययुक्तमेतत्। एतेन वक्ता वाचं भाषते कर्त्ता क्रियां करोतीति प्रयुक्तम्। तदेव।

सद्भूतो गमनं गन्ता त्रिप्रकारं न गच्छति।
नासद्भूतोऽपि गमनं त्रिप्रकारं स गच्छति॥

गमनं सद्भूतः त्रिप्रकारं न गच्छति। तत्र गम्यत इति गमनमिहोच्यते। तत्र सद्भूतो गन्ता यो गमिक्रियायुक्तः असद्भूतो गन्ता यो गमिक्रियारहितः। सदसद्भूतो य उभयपक्षेय रूपः। एवं गमनमपि त्रिप्रकारं गमिक्रियासम्बन्धेन वेदितव्यम्। तत्र सद्भूतगन्ता सद्भूतमसद्भूतं सदसद्भूतं त्रिप्रकारं गतं न गच्छति। एतच्च कर्म्मकारकपरीक्षायामाख्यास्यते। एवमसद्भूतोऽपि गन्ता त्रिप्रकारगमनं न गच्छति। सदसद्भूतोऽपीति तत्रैव प्रतिपादयिष्यति। यतश्चैवं गन्तृगन्तव्यगमनानि विचार्य्यमानानि न सन्ति।

तस्माद्गतिश्च गन्ता च गन्तव्यं च न विद्यते।

यथोक्तमार्य्याक्षयमतिनिर्द्दिशसूत्रे। अगतिरिति भदन्त शारद्वतीपुत्त्र संकर्षणपदमेतत्। गतिरिति भदन्त शारद्वतीपुत्त्र निष्कर्षणपदमेतत्। यत्र न संकर्षणपदं स निष्कर्षणपदं तदार्य्यो नापदमपदयोगेन अनागतिरगतिश्चार्य्याणां गतिरिति। यदि वीजमेवाङ्कुरे सङ्क्रामति वीजमेव तत् स्यान्न पदं कुतः शाश्वतदोषप्रसङ्गश्च। अथाङ्कुरोऽन्यत आगच्छति। अहेतुकदोषप्रसङ्गः स्यान्न चाहेतुकस्योत्पत्तिः खरविषाणस्येव। अतएवाह भगवान् वीजस्य सतो यथाङ्कुरो न च यत् वीजं स चैवाङ्कुरो न च अच्युततो न चैव तदेवमनुच्छेदमशाश्वतधर्म्मेति। मुद्रातः प्रतिग्रहो दृश्यते। मुद्रासंक्रान्ति न चोपलभ्यते न च सैव न चैव स्यादन्यत एवमनुच्छेदमशाश्वतधर्म्मेति यथा आदर्शपृष्ठे तथा तैलपात्रे निरीक्षते नारीमुखमलङ्कृतम्। सा तत्र

रागं जनयित्वा बाला प्रधाविता कामे गवेषमाणा सुखस्य संक्रान्तिं यदा न विद्यते विम्ब-मुखं नैव कदापि लभ्यते। मूढो यथासौ जन एति रागं यथोपमानं जायते सर्व्वधर्म्मानिति। तथा तेन हि कालिम्ना दशबलोऽनघो जिनो भाषते इमं समाधिबलम्। स्वप्नोपमा भगवती सकला। न कश्चिज्जायते न कश्चित् म्रियते न च सत्वमुपलभ्यते। न जीवनो इमु धर्म्माः फेनकदलीसदृशः। मायोपमा गगनविद्युत्समोदकचन्द्रसन्निभमरीचिसमा। न चास्मि लोकि मृदु कश्चिन्नैवापर लोकि संक्रमति गच्छति वा न च कर्म्म नश्यति कदा विकृतं फलं देति कृष्ण शुभे संसरतो न च शाश्वतं न च उच्छ्वत पूर्व्वो न च कर्म्म संचेयुर्न चापि स्थितिः। न च सापि कृत्वा पुनरस्पृशति न च अन्यकृत्व पुनर्य देयते। न च संक्रमो न च पुनरागमनं न च सर्व्वमस्ति न वा नास्ति पुनः। न च दृष्टिस्थानगतिविशुद्धिरिह न च सत्व सत्व चारु सुप्रसक्त गति। सुखिनोपम हि त्रिभववशिकम्। लघुभग्नमनितातमायसमं न च आगतं न च इहोपगतं शून्यानिमित्त सदसत्तेति। यो अनुत्पादे शास्तु अनिमित्तपदं सुगतानुगोचलजिनानुगुणः बलधारणीदशबलानुबलं बुद्धानियं वृषभिता परमा विशुक्ल-धर्म्मगुणज्ञानधारणीवसं परमम्। अद्धिविकुर्व्वणविधिः परमापरमं चाभिज्ञप्रतिलाभनयं इति विस्तरः—

इत्याचार्य्यचन्द्रकीर्त्तिपादोपरचितायां प्रसन्नपादायां मध्यमकवृत्तौ गतागतपरीक्षणं नाम द्वितीयं प्रकरणम्॥

---

अत्राह यद्यपि गतिश्च गन्ता च गन्तव्यञ्च न विद्यते तथापि प्रवचनसिद्ध्यपेक्षया दृष्टृदृष्टव्यदर्शनादीनामस्तित्वमास्थेयम्। तथाचाभिधर्म्म उच्यते।

दर्शनं श्रवणं घ्राणं रसनं स्पर्शनं मनः।

इन्द्रियाणि षडेतेषां द्रष्टव्यादीनि गोचरः॥

तस्मात् सन्ति दर्शनादीनि स्वभावत इत्युच्यते न सन्ति इह हि पश्यतीति दर्शनं चक्षुस्तस्य च रूपं विषयत्वेनोपदिश्यते। यथा दर्शनं रूपं न पश्यति तथा प्रतिपादयन्नाह। स्वं आत्मानं दर्शनं हि तत्वमेव न पश्यति।

न पश्यति यदात्मानं कथं द्रक्ष्यति तत्परान्।

तत्रेदं देव दर्शनं स्वात्मानं न पश्यति स्वात्मनि क्रियाविरोधात्। ततश्च स्वात्मादर्शना च्छ्रोत्रादिवन्नीलादिकं न पश्यति। तस्मान्नास्ति दर्शनमुः। यद्यपि स्वात्मानं दर्शनं न पश्यति। तथाप्यग्निवत्परान् द्रक्ष्यति। तथाह्यग्निः परात्मानमेव दहति न स्वात्मानं एवं दर्शनं परानेव द्रक्ष्यति न स्वात्मानमिति। एतदप्ययुक्तं यस्मान्न पर्य्याप्तोऽग्निदृष्टान्तो दर्शनस्य प्रसिद्धये।

योऽयमग्निदृष्टान्तो दर्शनस्य प्रसिद्धये भवतोपन्यस्तः स न पर्य्याप्तो नालं न समर्थो न युज्यत इत्यर्थः । यस्मात् सदर्शनः सप्रत्यक्तो गम्यमानगतागतैः । सह दर्शनेन वर्त्तत इति सदर्शनः । योऽयमग्निदृष्टान्तो दर्शनप्रसिद्धये भवतोपदिष्टः सोऽपि सह दर्शनेन दृष्टान्तिकार्थेन प्रत्यक्तो दूषितः । केन पुनरित्याह – गम्यमानगतागतैः । यथा गतं न गम्यते नागतं न गम्यमानमेवमग्निनापि दग्धं न दह्यते नादग्धं दह्यते इत्यादिना समं वाच्यं यथा च न गतं नागतं न गम्यमानं गम्यते । एवं ।

न दृष्टं दृश्यते तावददृष्टं नैव दृश्यते ।
दृष्टादृष्टविनिर्मुक्तं दृश्यमानञ्च दृश्यते ॥

इत्यादि वाच्यं ।

यथा च गन्ता न गच्छते तावदित्याद्युक्तमेव न दग्धं दह्यतेतावदित्यादि वाच्यं एवं र्शनम्पश्यते तावदित्यादिनाग्निदृष्टान्तेन सह गम्यमानगतागतैर्यस्मात्समं दूषणमतोऽग्नि-द्दर्शनसिद्धिरिति न युज्यते ततश्च सिद्धमेतत् । स्वात्मवद्दर्शनम्परानपि न पश्यतीति । दिवम्परान्नपश्यमानं भवति यदा किञ्चन दर्शनन्दर्शनं पश्यतीत्येवं कथमेतत्तु युज्यते यदा विमपश्यन्न किञ्चित् दर्शनं भवति तदानीमपश्यतो दर्शनत्वायोगः । स्तम्भादिवत् पश्यतीति र्शनमिति व्यपदेशो न युज्यते । यद्यपि दर्शनशब्दादनन्तरं श्लोकबन्धानुरोधेन दर्शनं श्यति पाठस्तथापि व्याख्यानकाले पश्यतीति दर्शनमित्येवं कथमेतत्तु युज्यत इति पठि-व्यं । किञ्चान्यदिह पश्यतीति दर्शनमित्युच्यमाने दर्शनक्रियायाः दर्शनस्वभावस्य वा चक्षुषः म्बन्धः परिकल्प्येत अदर्शनस्वभावस्य वा । उभयथा च न युज्यत इत्याह ।

पश्यते दर्शनं नैव नैव पश्यत्यदर्शनं ।

दर्शनस्वभावस्य तावद्दृशिक्रियायुक्तस्य भूयः पश्यतीत्यादिना सम्बन्धो नोपपद्यते दृशि-क्रयाद्वयप्रसङ्गात् दर्शनद्वयप्रसङ्गाच्च । अदर्शनमपि न पश्यति दर्शनक्रियारहितत्वात् ङ्गुल्यग्रवदित्यभिप्रायः । यदा पश्यते दर्शनं नैवं नैव पश्यत्यदर्शनं । तदा दर्शनं पश्यतीत्येवं थमेतत्तु युज्यते । इत्यनेनैव सम्बन्धः । यत्तु मन्यते निर्व्यापारं हीदन्धर्म्ममात्रमुत्पद्यमान-मुत्पद्यत इति नैव किञ्चित् कश्चिद्विषयं पश्यति क्रियाया अभावात्तस्माद्दर्शनन्नपश्यतीति द्धमेतत् प्रसाध्यत इति । अत्रोच्यते । यदि क्रियाव्यवहाराङ्गभूतो न स्यात् तदा र्ममात्रमपि न स्यात् क्रियाविरहितत्वात् खपुष्पवदिति कुतः क्रियारहितं धर्म्ममात्रं श्यति तस्माद्यदि व्यवहारसत्यं धर्म्ममात्रवत् क्रियाप्यभ्युपगम्यताम् । अथ तत्वचिन्ता क्रियावद्धर्म्ममात्रमपि नास्तीति भवताभ्युपगम्यतां । यथोक्तं शतके ।

क्रियावान् शाश्वतो नास्ति नास्ति सर्व्वगते क्रिया ।
निष्क्रिया नास्ति नातुल्यो नैरात्म्यं किन्न ते प्रियम् ॥ इति ।

तस्मान्नायमस्विधिर्न बाधकः परस्परं नाप्यस्माकं सिद्धसाधनदोषः । अत्राह नैव हि तीति दर्शनमिति कर्त्तृसाधनमभ्युपगम्यते किन्तर्हि पश्यत्यनेनेति दर्शनमिति करण

साधनं ततश्चोक्तदोषाप्रसङ्गः यस्मानेन दर्शनेन करणभूतेन पश्यति स द्रष्टा एष च विद्यते विज्ञानात्मा भावो कर्त्तृसद्भावाच्च दर्शनमपि सिद्धमिति । उच्यते व्याख्यातो दर्शनेनैव द्रष्टा वाप्युपगम्यतां । यथा स्वमात्मानं दर्शनं हीत्यादिना दर्शनस्य दूषणमुक्तमेवं द्रष्टुरपि दर्शनवद्दूषणं वेदितव्यम् । तद्यथा

स्वमात्मानं नैव द्रष्टा दर्शनेन विपश्यति ।
न पश्यति यदात्मानं कथं द्रक्ष्यति तत्परान् ॥

इत्यादि वाच्यन्तस्माद्दर्शनन्तद्द्रष्टापि नास्तीति सिद्धम् । अत्राह । विद्यत एव द्रष्टा तत्कर्म्मकरणसद्भावात् । इह यन्नास्तीति न तस्य कर्म्मकरणे विद्येते तद्यथा वन्ध्यासूनोः । अस्ति च द्रष्टुः करणन्दर्शनं द्रष्टव्यञ्च कर्म्म । तस्माद्भवेत् विद्यमानकर्म्मकरणो विद्यत एव द्रष्टेति । उच्यते नैव हि द्रष्टव्यदर्शने विद्येते तत् कुतो द्रष्टा स्यात् । द्रष्टृसापेक्षे हि द्रष्टव्यदर्शने स च निरूप्यमाणः । द्रष्टा नास्त्यतिरस्कृत्य च दर्शनं । इह द्रष्टा नाम यदि कश्चित् स्यात् स दर्शनसापेक्षो वा स्यात् निरपेक्षो वा । तत्र यदि दर्शनसापेक्षोऽतिरस्कृत्य दर्शनमिष्यते । तथा सिद्धस्य वा दर्शनापेक्षा स्यादसिद्धस्य वा । तत्र सिद्धो द्रष्टा न हि दर्शनमपेक्षते किं सिद्धस्य सतो द्रष्टुः पुनर्दर्शनापेक्षां कुर्य्यान्न हि सिद्धं पुनरपि साध्यत इति । अथासिद्धोऽपेक्षते असिद्धत्वाद्वन्ध्यासुतवद्दर्शनं नापेक्षते । एवं तावदतिरस्कृत्य दर्शनमपेक्ष्य द्रष्टा नास्ति । तिरस्कृत्यापि दर्शननिरपेक्षादित्युक्तं प्राक् । तदेवं तिरस्कृत्य वा दर्शनं यदा द्रष्टा नास्ति तदा ।

द्रष्टव्यं दर्शनं चैव द्रष्टर्य्यसति ते कुतः ।

द्रष्टर्य्यसति निर्हेतुके द्रष्टव्यदर्शने न सम्भवत इति कुतस्तद्भवतो द्रष्टा प्रसेत्स्यति अत्राह । विद्येतएव द्रष्टव्यदर्शने तत्कार्य्यसद्भावात् । तत्र

प्रतीत्य मातापितरौ यथोक्तः पुत्रसम्भवः ।
चक्षूरूपे प्रतीत्यैवमुक्तो विज्ञानसम्भवः ॥ इति ।

द्रष्टव्यं दर्शनञ्च प्रतीत्य विज्ञानमुत्पद्यते । त्रयाणां सन्निपातात् ॥ साम्रवस्पर्शः स्पर्शसहः वेदना तत्प्रत्यया तृष्णेति । एवञ्चत्वार्य्यपि भवाङ्गानि द्रष्टव्यदर्शनहेतुकानि विद्यन्ते । तस्मा कार्य्यसद्भावाद्द्रष्टव्यदर्शने विद्येते इति । उच्यते । स्यातामेते यदि विज्ञानादिचतुष्टयव स्याद्यस्मात् द्रष्टव्यदर्शनाभावाद्विज्ञानादिचतुष्टयं नास्तीति । इह द्रष्टुरभावात् द्रष्टव्यदर्शः ऽपि नस्त इत्युक्तमतः कुतो विज्ञानादिचतुष्टयं विज्ञानस्पर्शवेदनातृष्णाख्यं । तस्मान्न स विज्ञानादीनि । अत्राह । सन्त्येवैतानि तत्कार्य्यसद्भावादित्याह तृष्णाप्रत्ययमुपादानमित्य दिना उपादाने भवे जातिजरामरणादिकं विज्ञानादिचतुष्टयादुत्पद्यते तस्मात् सन्ति विज्ञ नादीनि तत्कार्य्यसद्भावादुच्यते स्युरुपादानादीनि यदि विज्ञानादिचतुष्टयमेव स्यात् । यः तु द्रष्टव्यदर्शनाभावाद्विज्ञानादिचतुष्टयं नैवास्ति तदा उपादानादीनि भविष्यन्ति पुनः कथं न सन्त्युपादानादीनीत्यर्थः । इदानीं दर्शनवच्छेषायतनव्याख्यानातिदेशार्थमाह ।

व्याख्यातं श्रवणं घ्राणं रसनं स्पर्शनं मनः।
दर्शनेनैव जानीयाच्छ्रोतृश्रोतव्यकादि च॥ इति।

उक्तं हि भगवता।

न चक्षुः प्रेक्षते रूपं मनोधर्म्मांश्च वेत्ति च।
एतत्तु परमं सत्यं यत्र लोको न गाहते॥

सामग्र्या दर्शनं यत्र प्रकाशयति नायकः।
प्राहोपचारभूमिं तां परमार्थस्य बुद्धिमान्॥ इति।

तथा

चक्षुश्च प्रतीत्य रूपतः चक्षुर्विज्ञानमिहोपजायते।
न चक्षुषि रूपं निश्रितं रूपसंक्रान्तिर्न चैव चक्षुषि॥

नैरात्म्यस्वभावाश्च धर्म्मिण एते पुरात्मेति शुभाश्च कल्पिताः।
विपरीतमसद्विकल्पितं चक्षुर्विज्ञानं ततोऽपि जायते॥

विज्ञाननिरोधसम्भवं विज्ञानं उत्पादव्ययं विपश्यति।
न कहिंचिद्गतं न चागतं शून्योपमं योगी पश्यति॥

तथा चार्य्योपालिपृच्छायां।

सर्व्वसंयोगे तु पश्यति चक्षुस्तत्र न पश्यति प्रत्ययहीनं।
नैव चक्षुः प्रपश्यति रूपं तेन संयोगवियोगविकल्पः॥

आलोके पश्यति चक्षूरूपं मनोरमचित्रविशिष्टं।
येन च योगसमाश्रितचक्षुस्तेन न पश्यति चक्षुः कदाचित्॥

योऽपि च चक्षुः शृणोति शब्दमनोज्ञं सोऽपि च नान्तरि जातु प्रविष्टः।
सङ्क्रमणं न च लभ्यति तस्य कल्पवशात्तु समुच्छ्रितशब्दः॥ इति।

गीतं न नृत्यमपि वाद्यरुतं न शाख्यं स्वप्नोपमा हि रतयोऽबुद्धमोहनाश्च।
सङ्कल्पवशगता अबुद्धा अत्र नाशं किं क्लेशदास इव वालजनो भवामि॥ इति।

इत्याचार्य्यचन्द्रकीर्त्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
चक्षुरादीन्द्रियपरीक्षा नाम तृतीयप्रकरणम्।

---

अत्राह । यद्येवं चक्षुरादीन्द्रियाणि न सन्ति । न स्कन्धा अप्रतिषेधात्तदन्तर्गतानि चेन्द्रियाणि । अतस्तान्यपि भविष्यन्तीति । उच्यते स्युरेवं यदि स्कन्धाः स्युः । तत्र रूपस्कन्धमधिकृत्याह ।

रूपकारणनिर्मुक्तं न रूपमुपलभ्यते ।

रूपेणापि न निर्मुक्तं दृश्यते रूपकारणम् ॥

तत्र रूपं भौतिकन्तस्य कारणं चत्वारि महाभूतानि तद्व्यतिरिक्तं पृथग्भूतं भौतिकं रूपशब्दगन्धरसस्पर्शाख्यं नोपलभ्यते। घटादिवत्पटः। रूपेणापि न निर्मुक्तं रूपात् पृथग्भूतं रूपकारणमुपलभ्यते । तदेतत् प्रतिज्ञाद्वयं प्रसाधयितुकाम आह ।

रूपकारणनिर्मुक्ते रूपे रूपं प्रसज्यते ।

अहेतुको न चास्त्यर्थः कश्चिदहेतुकः क्वचित् ॥

यथा घटादर्थान्तरभूतः पटो न घटाहेतुक एवं रूपकारणचतुर्महाभूतव्यतिरिक्तं भौतिकं रूपमिष्यमाणं न भूतहेतुकं स्यात् । न चास्त्यर्थः कश्चिदहेतुकः क्वचित्। तस्मादहेतुकत्वदोषप्रसङ्गान्न रूपकारणनिर्मुक्तं रूपमभ्युपेतव्यमिति । इदानीं रूपेणापि विनिर्मुक्तं यथा रूपकारणं नास्ति । तथा प्रतिपादयन्नाह ।

रूपेण तु विनिर्मुक्तं यदि स्याद्रूपकारणम् ।

यदि कार्य्यरूपविनिर्मुक्तं रूपकारणं स्यात्तदा यथा घटात् कुण्डं पृथक् सिद्धं घटाहेतुकन्न भवति। एवं कार्य्यात् पृथग्भूतं कारणमिष्यमाणमकार्य्यकङ्कारणं स्यान्निर्हेतुकस्याकारणस्य हि कारणत्वे कार्य्यप्रवृत्तिहेतोः कार्य्यनिरपेक्षाच्च कारणात् पृथक्सिद्धा नास्ति कार्य्यप्रवृत्तिः। यच्चाकार्य्यकङ्कारणं तन्निर्हेतुकत्वान्नरोरगतुरगविषाणवन्नास्त्येवेत्याह । नास्त्यकार्य्यञ्च कारणमिति । अथचेदं रूपस्य कारणमिष्यमाणं सति वा रूपकारणत्वे नेष्यतेऽसति वा। उभयथा च नोपपद्यते इत्याह ।

रूपे सत्येव रूपस्य कारणं नोपपद्यते ।

रूपेऽसत्येव रूपस्य कारणं नोपपद्यते ॥

सति वा सन्विद्यमाने रूपे किं रूपकारणेन प्रयोजनम्। असत्यसन्विद्यमाने रूपे किं रूपकारणेन प्रयोजनं कस्य वा तत्कारणमिति परिकल्प्यते। तस्मादसत्यपि रूपे रूपकारणं नोपपद्यते । अथ स्याद्यदेवं रूपकारणं न सम्भवति तथापि कार्य्यं रूपम्विद्यते तत्सद्भावात् कारणमपि भविष्यतीति । स्यादेवं यदि कार्य्यं रूपं स्यान्न त्वस्ति । यस्मात्

निष्कारणं पुना रूपं नैव नैवोपपद्यते ।

रूपकारणं यथा नास्ति तथोक्तम् । असति कारणे कुतो निर्हेतुककार्य्यं रूपम्भवेत्। नैव नैवेत्यनेन सावधारणेन प्रतिषेधद्वयेनाहेतुकवादस्यात्यन्तदुष्टतां दर्शयति । यतश्चैवं रूपं सर्व्वथा विचार्य्यमाणन्न सम्भवति, तस्मात्तत्त्वदर्शी योगी रूपगतान् कांश्चिन्न विकल्पान्

विकल्पयेत् । सप्रतिघाप्रतिघसनिदर्शनानिदर्शनातीतानागतनीलपीतादिविकल्पान् रूपालम्बनान् न कांश्चित् परिकल्पयितुमर्हतीत्यर्थः । अपि चेदं रूपकारणमिष्यमाणं सदृशं कार्य्यं निष्पादयेदसदृशम्वा उभयथा च नोपपद्यते इत्याह ।

न कारणस्य सदृशं कार्य्यमित्युपपद्यते ।

तत्र रूपकारणं कठिणद्रवतरलस्वभावं भौतिकं तु चक्षुराद्याध्यात्मिकमप्पञ्च चक्षुर्विज्ञानाद्याश्रयरूपप्रसादात्मकं वाह्यन्तु रूपाद्यायतनादिकञ्चक्षुर्विज्ञानादिग्राह्यलक्षणम् । न महाभूतस्वभावमित्यतो भिन्नलक्षणत्वान्निर्वाणवत्कार्य्यकारणयोः सादृश्यमेव नास्तीति न कारणस्य सदृशं कार्य्यमित्युपपद्यते । न चापि सदृशानां शालिवीजादीनां परस्परं कार्य्यकारणभावो दृष्ट इत्यतो न कारणस्य सदृशं कार्य्यमित्युपपद्यते । न चापि कारणस्यासदृशं कार्य्यमित्युपपद्यते भिन्नलक्षणत्वान्निर्व्वाणवदेवेत्यभिप्रायः । यथाचेदं रूपं विचार्य्यमाणं सर्व्वथा नोपपद्यते । एवम्वेदनादयोऽपीत्यतिदिशन्नाह ।

वेदनाचित्तसंज्ञानां संस्काराणां च सर्व्वशः ।

सर्व्वेषामेव भावानां रूपेणैव समक्रमः ॥

वेदनादिकमपि सर्व्वं रूपविचारेणैव संयोज्यम् । यथैव ह्येकस्य धर्म्मस्य शून्यता प्रतिपादयितुमिष्टा माध्यमिकेन तथैव सर्व्वधर्म्माणामपीति । अतः ।

विग्रहे यः परीहारं कृते शून्यतया वदेत् ॥

सर्व्वन्तस्यापरिहृतं समं साध्येन जायते ।

तत्र परपक्षदूषणं विग्रहः । शून्यतया कारणभूतया रूपं निःस्वभावमित्येवं सस्वभाववादे प्रतिषिद्धे । यदि परपरीहारं ब्रूयात् वेदनादयस्तावत् सन्ति तद्वद् रूपमप्यस्तीति तदेतत्सर्व्वन्तस्यापरिहृतं भवति । तस्माद्वेदनादीनामपि सद्भावः साध्येन रूपसद्भावेन समो वेदितव्यः यथा रूपं स्वकारणात्तत्वान्यत्वेन विचार्य्यमाणमसदेवं स्पर्शप्रत्यया वेदना विज्ञानसहजा संज्ञा अविद्याप्रत्ययाः संस्काराः संस्कारप्रत्ययञ्च विज्ञानं स्वकारणात् स्पर्शादेस्तत्वान्यत्वादिना विचार्य्यमाणं नास्तीति सर्व्वमेतत् साध्यसमम्भवति । यथा वेदनादयः साध्यसमा एवं तद्व्यलक्षणं कार्य्यकारणाद्यव्यये वादयामि सर्व्व एव परार्थरूपेण साध्येन समा इति । कुतः परस्य परीहारः सम्भवेत् । सर्व्वम्वचनमस्य साध्यसमं भवतीति सर्व्वत्र शास्त्रुः परीहारेण साध्यसमत्वं माध्यमिकेनाग्रहणीयमित्याचार्य्यः शिक्षयति यथा परपक्षदूषणे विहितोऽयं विधिरेवं व्याख्यानकालेऽपीत्याह ।

व्याख्याने य उपारम्भं कृते शून्यतया वदेत् ।

सर्व्वन्तस्यानुपालब्धं समं साध्येन जायते ॥

व्याख्यानकालेऽपि यः शिष्यदेशीयस्त्वोद्यमुपारम्भं कुर्यात्तस्यापि तच्चोद्यमुपालम्भाख्यं पूर्व्ववत् साध्यसमं वेदयितव्यम् । यथोक्तम् ।

भावस्यैकस्य यो द्रष्टा द्रष्टा सर्व्वस्य स स्मृतः।
एकस्य शून्यता यैव सैव सर्व्वस्य शून्यता॥ इति।

आर्य्यगगणगञ्जसमाधिसूत्रेऽपि।

एकेन धर्म्मेण यः सर्व्वधर्म्माननुगच्छते।
मायामरीचिसदृशान् अग्राह्यतुच्छानलीकान्।
शाश्वतान् स बोधिमण्डं नचिरेण गच्छति॥ इति।

समाधिराजसूत्रेऽपि

यथा ज्ञाता त्वया आत्मसंज्ञा तथैव सर्व्वत्र प्रेषिता बुद्धिः।
सर्व्वे च तत्स्वभावा धर्म्मविशुद्धा गगणकल्पाः॥
एकेन सर्व्वञ्जानाति सर्व्वमेकेन पश्यति।
कियद्बहुंपि भावयित्वा न तस्योपपद्यते दमः॥ इति।

इत्याचार्य्यचन्द्रकीर्त्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
स्कन्धपरीक्षा नाम चतुर्थप्रकरणम्॥

---

अत्राह धातवः सन्ति प्रतिषेधाभावात्। उक्तञ्च भगवता षड्धातुरयं महाराज पुरुष पुङ्गव इत्यादि। ततश्च प्रवचनपाठात् धातवस्कन्धायतनान्येव सन्तीति। उच्यते स्युः स्कन्धायतनानि यदि धातव एव स्युः। कथमित्याह।

नाकाशम्विद्यते किञ्चित् पूर्व्वमाकाशलक्षणात्।
अलक्षणं प्रसज्येत स्यात् पूर्व्वं यदि लक्षणात्॥

तत्र षड्धातव उक्ताः पृथिव्यप्तेजोवाय्वाकाशविज्ञानाख्याः। तत्राकाशमधिकृत्योच्यते दूषणं स्वरूपविरूपणात्। इहाकाशस्यानावरणं लक्षणमुच्यते। यद्यस्मात् पूर्व्वमाकाशमनावरणलक्षणालक्षं स्यात्। तत्र लक्षणप्रवर्त्तनस्यावरणलक्षणात् पूर्व्वमाकाशं लक्षणपमिति। यदा चैवं —

नाकाशम्विद्यते किञ्चित् पूर्व्वमाकाशलक्षणात्।

तथा ह्यलक्षणं प्रवर्त्तताम्। तदभावे खपुष्पवन्नास्त्याकाशमित्याह।

अलक्षणं प्रसज्येत स्यात् पूर्व्वं यदि लक्षणात्।
अलक्षणो न कश्चिच्च भावः सम्विद्यते क्वचित्॥ इति।

अत्राह। लक्षणप्रवृत्तिं लक्ष्यं भवेत्तत्स्वभावाल्लक्षणमप्यस्तीति। एतदपि नास्ति यस्मात्।

असत्यलक्षणे भावे क्रमतां कुत्र लक्षणम्।

लक्षणात् पूर्व्वमलक्षणभावो नास्तीत्युक्तं ततश्चासत्यसम्बिद्यमाने लक्षणे लक्षणरहिते भावे तदानीं लक्षणं प्रवर्त्ततामिति नास्ति लक्षणप्रवृत्तिः। अपि चेदं लक्षणं प्रवर्त्तमानं सलक्षणैर्वा प्रवर्त्तेतालक्षणेन वा उभयथा च नोपपद्यते इत्याह।

**नालक्षणे लक्षणस्य प्रवृत्तिर्न सलक्षणे।**

**सलक्षणालक्षणाभ्यां नाप्यन्यत्र प्रवर्त्तते॥**

तत्रालक्षणे खलविषाणवन्न लक्षणप्रवृत्तिः। सलक्षणे सलक्षणेऽपि भावे सलक्षणप्रवृत्तिर्नैपपद्यते प्रयोजनाभावात्। किं हि लक्षणवतः प्रसिद्धस्य भावस्य पुनः लक्षणकृत्यं स्यादित्यं न च स्यादित्यप्रसङ्गश्चैवं स्यात्। न ह्यसौ कदाचिन्न सलक्षणः स्यादिति सदैव लक्षणप्रवृत्तिः प्रसज्येत। न चैतदिष्टं तस्मात् सलक्षणेऽपि भावे सलक्षणप्रवृत्तिरुपपद्यते। प्रयोजनमपि तत्रैव स्यात् सलक्षणालक्षणाभ्यामन्यत्र प्रवर्त्तिष्यते इत्युच्यते।

सलक्षणालक्षणाभ्यां नाप्यन्यत्र प्रवर्त्तते।

किङ्कारणमसद्भावात्। यदि सलक्षणो नालक्षणः। अथालक्षणो न सलक्षणः अतः सलक्षणश्चासलक्षणश्चेति विप्रतिषिद्धमेतत्। न च विप्रतिषिद्धं सम्भवति तस्मादसम्भवादेव सलक्षणे वालक्षणे च लक्षणप्रवृत्तिर्नैपपद्यत इति। अथापि स्याद्यद्यपि न लक्षणप्रवृत्तिः तथापि लक्षणमस्तीति। एतदपि नास्ति यस्मात्।

**लक्षणासम्प्रवृत्तौ च न लक्षमुपपद्यते।**

यदा लक्षणप्रवृत्तिरेव नास्ति तदा कथं लक्षं स्यान्नैव सम्भवतीत्यभिप्रायः। अत्राह लक्षणप्रवृत्तिस्त्वया निषिद्धा न तु लक्षणं ततश्च विद्यते लक्षं लक्षणसद्भावादुच्यते। लक्ष्यानुपपत्तौ च लक्षणस्याप्यसम्भवः। लक्षणा सम्प्रवृत्तौ च न लक्षमुपपद्यते इति प्रतिपादितं। तदलक्ष्यस्यानुपपत्तौ च लक्षणस्याप्यसम्भवो निराश्रयत्वात्। यदा चैवं लक्षणं नास्ति तदालक्षणसद्भात् विद्यते लक्षमिति यदुक्तं तन्न यतश्चैतदेवं तस्मान्न विद्यते लक्ष्यं लक्षणं नैव विद्यते इति निगमनं। यद्यपि लक्षलक्षणे नस्तस्तथाकाशमस्ति भावरूपं च भवेदाकाशं लक्षे लक्षणं स्यात्। तस्माल्लक्षलक्षणेऽपि स्त इति। एतदप्ययुक्तमित्याह।

**लक्षलक्षणनिर्म्मुक्तो नैव भावोऽपि विद्यते।**

लक्षलक्षणे यथा नस्तस्तथोक्तं प्राक्। यदानयोरभावस्तदा लक्षलक्षणरहितत्वादाकाशकुसुमवन्नाकाशं। यद्याकाशस्भावो न भवत्यभावस्तर्ह्यस्तु। एतदपि नास्ति। यस्मादविद्यमाने भावे च कस्याभावो भविष्यति। यथाकाशस्भावो न भवति तदा भावस्यासत्वे कस्याभावः कल्प्यतां। वक्ष्यति हि।

**भावस्य चेदं प्रसिद्धिर्हि न भावेनैव सिध्यति।**

**भावस्य ह्यन्यथाभावमभावं ब्रुवते जनाः॥ इति।**

भावस्यैकस्य यो द्रष्टा द्रष्टा सर्व्वस्य स स्मृतः।
एकस्य शून्यता यैव सैव सर्व्वस्य शून्यता॥ इति।

आर्य्यगगनगञ्जसमाधिसूत्रेऽपि।

एकेन धर्म्मेण यः सर्व्वधर्म्माननुगच्छते।
मायामरीचिसदृशान् अग्राह्यांस्तुच्छानलीकान्।
शाश्वतान् स बोधिमण्डं नचिरेण गच्छति॥ इति।

समाधिराजसूत्रेऽपि

यथा ज्ञाता त्वया आत्मसंज्ञा तथैव सर्व्वत्र प्रेषिता बुद्धिः।
सर्व्वे च तत्स्वभावा धर्म्मविशुद्धा गगणकल्पाः॥

एकेन सर्व्वञ्जानाति सर्व्वमेकेन पश्यति।
कियद्बहुंपि भावयित्वा न तस्योपपद्यते दमः॥ इति।

इत्याचार्य्यचन्द्रकीर्त्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
स्कन्धपरीक्षा नाम चतुर्थप्रकरणम्॥

---

अत्राह धातवः सन्ति प्रतिषेधाभावात्। उक्तञ्च भगवता षड्धातुरयं महाराज पुरुष पुङ्गव इत्यादि। ततश्च प्रवचनपाठात् धातवस्कन्धायतनान्येव सन्तीति। उच्यते स्युः स्कन्धायतनानि यदि धातव एव स्युः। कथमित्याह।

नाकाशम्विद्यते किञ्चित् पूर्व्वमाकाशलक्षणात्।
अलक्षणं प्रसज्येत स्यात् पूर्व्वं यदि लक्षणात्॥

तत्र षड्धातव उक्ताः पृथिव्यप्तेजोवाय्वाकाशविज्ञानाख्याः। तत्राकाशमधिकृत्योच्यते दूषणं स्वरूपविरूपणात्। इहाकाशस्यानावरणं लक्षणमुच्यते। यद्यस्मात् पूर्व्वमाकाशमनावरणलक्षणालक्षं स्यात्। तत्र लक्षणप्रवर्त्तनस्यावरणलक्षणात् पूर्व्वमाकाशं लक्ष्यरूपमिति। यदा चैवं —

नाकाशम्विद्यते किञ्चित् पूर्व्वमाकाशलक्षणात्।

तदा स्यालक्षणं प्रवर्त्तताम्। तदभावे खपुष्पवन्नास्त्याकाशमित्याह।

अलक्षणं प्रसज्येत स्यात् पूर्व्वं यदि लक्षणात्।

अलक्षणो न कश्चिच्च भावः सम्विद्यते क्वचित्॥ इति।

अत्राह। लक्षणप्रवृत्तिर्लक्ष्ये भवेत्तत्स्वभावाल्लक्ष्यमप्यस्तीति। एतदपि नास्ति यस्मात्।

असत्यलक्षणे भावे क्रमतां कुत्र लक्षणम् ।

लक्षणात् पूर्व्वमलक्षणभावो नास्तीत्युक्तं ततश्चासत्यसम्विद्यमाने लक्षणे लक्षणरहिते भावे तदानीं लक्षणं प्रवर्त्ततामिति नास्ति लक्षणप्रवृत्तिः । अपि चेदं लक्षणं प्रवर्त्तमानं सलक्षणेर्वा प्रवर्त्ततालक्षणेन वा उभयथा च नोपपद्यते इत्याह ।

**नालक्षणे लक्षणस्य प्रवृत्तिर्न सलक्षणे ।**
**सलक्षणालक्षणाभ्यां नाप्यन्यत्र प्रवर्त्तते ॥**

तत्रालक्षणे खरविषाणवन्न लक्षणप्रवृत्तिः । सलक्षणे सलक्षणेऽपि भावे सलक्षणप्रवृत्ति-र्नोपपद्यते प्रयोजनाभावात् । किं हि लक्षणवतः प्रसिद्धस्य भावस्य पुनः लक्षणकृत्यं स्यादित्थं न च स्यादित्यप्रसङ्गश्चैवं स्यात् । न ह्यसौ कदाचिन्न सलक्षणः स्यादिति सदैव लक्षणप्रवृत्तिः प्रसज्येत । न चैतदिष्टं तस्मात् सलक्षणेऽपि भावे सलक्षणप्रवृत्तिरुपपद्यते । प्रयोजनमपि तत्रैव स्यात् सलक्षणालक्षणाभ्यामन्यत्र प्रवर्त्तिष्यते इत्युच्यते ।

सलक्षणालक्षणाभ्यां नाप्यन्यत्र प्रवर्त्तते ।

किङ्कारणमसद्भावात् । यदि सलक्षणो नालक्षणः । अथालक्षणो न सलक्षणः अतः सल-क्षणश्चासलक्षणश्चेति विप्रतिषिद्धमेतत् । न च विप्रतिषिद्धं सम्भवति तस्मादसम्भवादेव सलक्षणे वालक्षणे च लक्षणप्रवृत्तिर्नोपपद्यत इति । अथापि स्याद्यद्यपि न लक्षणप्रवृत्तिः तथापि लक्षणमस्तीति । एतदपि नास्ति यस्मात् ।

**लक्षणासम्प्रवृत्तौ च न लक्ष्यमुपपद्यते ।**

यदा लक्षणप्रवृत्तिरेव नास्ति तदा कथं लक्ष्यं स्यान्नैव सम्भवतीत्यभिप्रायः । अत्राह लक्षणप्रवृत्तिस्त्वया निषिद्धा न तु लक्षणं ततश्च विद्यते लक्ष्यं लक्षणसद्भावादुच्यते । लक्ष्यस्या-नुपपत्तौ च लक्षणस्याप्यसम्भवः । लक्षणा सम्प्रवृत्तौ च न लक्ष्यमुपपद्यते इति प्रतिपादितं । तदलक्ष्यस्यानुपपत्तौ च लक्षणस्याप्यसम्भवो निराश्रयत्वात् । यदा चैवं लक्षणं नास्ति तदा-लक्षणसद्भात् विद्यते लक्ष्यमिति यदुक्तं तन्न यतश्चैतदेवं तस्मान्न विद्यते लक्ष्यं लक्षणं नैव विद्यते इति निगमनं । यद्यपि लक्ष्यलक्षणे नस्तस्तथाकाशमस्ति भावरूपं च भवेदाकाशं लक्ष्ये लक्षणं स्यात् । तस्माल्लक्ष्यलक्षणेऽपि स्त इति । एतदप्ययुक्तमित्याह ।

**लक्ष्यलक्षणनिर्मुक्तो नैव भावोऽपि विद्यते ।**

लक्ष्यलक्षणे यथा नस्तस्तथोक्तं प्राक् । यदानयोरभावस्तदा लक्ष्यलक्षणरहितत्वादाकाश-कुसुमवन्नाकाशं । यद्याकाशस्याभावो न भवत्यभावस्तर्ह्यस्तु । एतदपि नास्ति । यस्मादविद्य-माने भावे च कस्याभावो भविष्यति । यथाकाशस्याभावो न भवति तदा भावस्यासत्त्वे कस्या-भावः कल्प्यतां । वक्ष्यति हि ।

**भावस्य चेदं प्रसिद्धिर्हि न भावेनैव सिध्यति ।**
**भावस्य ह्यन्यथाभावमभावं ब्रुवते जनाः ॥ इति ।**

तस्माद्भावाभावादभावोऽप्याकाशन्न सम्भवति रूपाभावस्याकाशमिति व्यवस्थाप्यते । यद्यपि रूपं स्यात्तदा रूपाभाव आकाशमिति स्यात् । यदा च यथोक्तेन न्यायेन रूपमेव नास्ति तदा कस्याभाव आकाशं स्यात् । अत्राह विद्येते एव भावाभावौ तत्परीक्षकसद्भावात् । अस्ति च भवान् भावाभावयोः परीक्षकः । य एव आह ।

अविद्यमाने भावे च कस्याभावो भविष्यति । इति ।

तस्माद्भवतो भावाभावपरीक्षकस्य सद्भावात् परीक्षितावपि भावाभावौ विद्येत इति उच्यते एतदप्ययुक्तम् । यस्मात् ।

भावाभावविधर्म्मा च भावाभावस्य वेति कः ।

स्यातामभावाभावौ यदि तदा तयोः परीक्षको भावो वा स्यादभावो वा यदि भाव इष्यते ॥ तस्य लक्षलक्षणनिर्म्मुक्तो नैव भावोऽपि विद्यते इत्युक्तं दूषणं । अथाभावः –

अविद्यमाने भावे च कस्याभावो भविष्यति । इति

अत्रोपक्रमे तद्दूषणम् । न च भावाभावविसदृशधर्म्मा कश्चित्तृतीयः पदार्थोऽस्ति योऽनयोरेव गमक इति । नास्ति भावाभावयोः परीक्षकः । अतएवोक्तम् भगवता ।

भावानभावानिति यः प्रजानाति स सर्व्वभावेषु न जातु सज्जते ।

यः सर्व्वभावेषु न जातु सज्यते स अनिमित्तं स्पृशते समाधिमिति ॥ तथा—

योऽपि च चिन्तयि शून्यकधर्म्मान् सोऽपि कुमार्गप्रपन्नकुबालः ।

अक्षरकीर्त्तितशून्यकधर्म्मास्तेच अनक्षर अक्षर उक्ताः ॥

शान्ते प्रशान्ते य चिन्तयि धर्म्मान् सोऽपि च चिन्तु न जातु न भूतः ।

चित्तवितर्कण स विप्रपचास्तस्य अचिन्तिय वुध्यथ धर्म्मान् । इति विस्तरः ।

इदानीमप्रातिपादिकमर्थं निगमयन्नाह । यस्मान्न भावो नाभावो न लक्ष्यन्नापि लक्षणमाकाशमिति । यथावाकाशमेवमाकाशसमा धातवः पञ्च ये परे पृथिव्यादिधातवो ये पञ्च परा अवशिष्यन्ते । तेऽप्याकाशवद्भावाभावलक्षणपरिकल्पस्वरूपरहिताः परिज्ञेया इत्यर्थः । तदेवं पदार्थानां स्वभावे व्यवस्थितेऽविद्यातिमिरोपहतमतिनयनतयाऽनादिसंसाराभ्यस्ततया भावाभावादिविपरीतदर्शनानिर्व्वाणानुगम्यविपरीतेनैव भावदर्शनसम्मार्गपरिभ्रष्टाः ।

अस्तित्वं येतु पश्यन्ति नास्तित्वं चाल्पबुद्धयः ।

भावानान्तेन पश्यन्ति द्रष्टव्योपशमं शिवम् ॥

द्रष्टव्योपशमशिवलक्षणं सर्व्वकल्पनाजालरहितज्ञानज्ञेयनिवृत्तिस्वभावं शिवम्परमार्थस्वभावम् । परमार्थमजरममरमप्रपञ्चनिर्व्वाणं शून्यतास्वभावं तेन पश्यन्ति मन्दबुद्धितया अस्तित्वं नास्तित्वं चाभिनिविष्टाः सन्त इति । यथोक्तमार्य्यरत्नावल्याम् ।

नास्तिको दुर्गतिं याति सुगतिं यात्यनास्तिकः ।
यथाभूतपरिज्ञानान्मोचमद्वयनिःश्रित इति ॥

आर्य्यसमाधिराजे चोक्तं भगवता ।

अस्तीति नास्तीति उभेऽपि अन्ताः ।
शुद्धीति अशुद्धीति इमेऽपि अन्ताः ॥
तस्मादुभेऽन्त विवर्ज्जयित्वा ।
मध्येऽपि स्थानन्न करोति पण्डितः ॥

अस्तीति नास्तीति विवाद एषः
शुद्धि अशुद्धीति अयं विवादः ।
विवादप्राप्त्या न दुःखं प्रशाम्यते
अविवादप्राप्त्या न दुःखन्निरुध्यते ॥ इति ।

तस्मादसम्भवो यत्सांसारिकेण निर्व्वाणमधिगम्यत इति ।

इत्याचार्य्यचन्द्रकीर्त्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
धातुपरीचा नाम पञ्चमप्रकरणम् ।

---

अत्राह विद्यन्त एव स्कन्धा धातवः कुतः तदाश्रय संक्लेशोपलब्धेः । इह यन्नास्ति न तदाश्रय संक्लेशोपलब्धिरस्ति वन्ध्यादुहितुरिव वन्ध्यासूनोः सन्ति च रागादयः क्लेशाः संक्लेशनिवन्धनं यथोक्तं भगवता वाला भिचवोऽहं श्रुतवान् पृथग्जनः प्रज्ञप्तिमनुपपत्तितः चक्षुषा रूपाणि दृष्ट्वा सौमनस्यस्थानीयान्यभिनिवेशितः सोऽभिनिविष्टः स रागमुत्पादयति रक्तः स रागजं द्वेषजं मोहजं करोति कायेन वाचा मनसेति विस्तरः । उच्यते । स्युः स्कन्धायतनधातवो यदि रागादय एव क्लेशाः स्युः । इहायं रागः परिकल्प्यमानो वालपृथग्जनैः सत्येव रक्ते परिकल्प्येतासति वा । उभयथा च न युज्यत इत्याह ।

रागाद्यदि भवेत् पूर्व्वरक्तो रागतिरस्कृतः ।
तम्प्रतीत्य भवेद्रागो रक्ते रागो भवेत् सति ॥

तत्र रागः शक्तिरध्यवसानं सङ्गोऽभिनिवेश इति पर्य्यायः । रक्तो रागाश्रयः स यदि रक्तो रागात् पूर्व्वं रागतिरस्कृतो रक्तः स्यादर्हतामपि रागप्रसङ्गात् । यदेवं सति रक्ते न रागः असति तर्हि रक्ते रागोऽस्तु । एतदप्ययुक्तमित्याह ।

रक्तेऽसति पुनः रागः कुत एव भविष्यति ।

यदा सति रक्ते रागो नास्ति तदा कथमसति रक्ते निराश्रयो रागः सेत्स्यति । नह्यसति फले तत्पक्कता सम्भवतीति । अत्राह । यद्यपि त्वया रागो निषिद्धस्तथापि रक्तोऽस्ति प्रतिषेधाभावात् । न च रागमन्तरेण रक्तो युक्तस्तस्मादयमप्यस्तीति । उच्यते स्याद्रागो यदि रक्तः स्यात् यस्मादयरक्त इष्यमाणः सति वा रागे परिकल्प्येतासति वा । उभयथा च नोपपद्यत इत्याह ।

सतिवासति वा रागे रक्तेऽप्येष समः क्रमः ।

तत्र यदि सति रागे रक्तः परिकल्प्येत तत्राप्येष एव रागानुपपत्तिक्रमोऽनन्तरोक्तो रक्तेऽपि तुल्यः ।

रक्ताद्यदि भवेत् पूर्व्वं रागो रक्तिरस्कृतः ।

इत्यादि । अथासति रागे रक्त इष्यते । एतदप्ययुक्तं । यस्मात्, –

रागेऽसति पुनारक्तः कुत एव भविष्यति । इति ।

तस्माद्रक्तोऽपि नास्ति । रागरक्ताभावाच्च स्कन्धादयोऽपि न सन्तीति । अत्राह नैव हि रागरक्तयोः पौर्व्वापर्य्येण संभवाय तदिदं दूषणं स्यात् किं तर्हि रागरक्तयोः सहैवोद्भवः सः । चित्तसहभूतेन रागेण हि चित्तं रज्यते । तच्च रक्तमित्यतो विद्येते एव रागरक्ताविति । उच्यते एवमपि सहैव पुनरुद्भूतिर्नयुक्ता रागरक्तयोस्सहोत्पादोऽपि न युक्तो यस्माद्भवतां रागरक्तौ हि निरपेक्षौ परस्परं । सहभावात् सव्येतरगोविषाणवदित्यभिप्रायः । अपि चानयोः रागरक्तयोः सहभाव एकत्वे परिकल्प्येत पृथक्त्वे वा । तत्र यद्येकत्वे तन्न युज्यते । यस्मात् नैकत्वे सहभावोऽस्ति । कस्मात् पुन र्नास्तीत्याह नैतं नैव हि तत्सह । न हि रागस्वात्मा रागाद्व्यतिरिक्तो रागेण सहेति व्यपदिश्यते । इदानीं पृथक्त्वेऽपि सहभावाभावमाह । पृथक्त्वे सहभावोऽयं कुत एव भविष्यति । न हि पृथग्भूतयोरालोकान्धकारयोः संसारनिर्वाणयोर्वा सहभावो दृष्ट इति । किञ्चान्यत् ।

एकत्वे सहभावश्चेत् स्यात् सहायम्विनापि सः ।
पृथक्त्वे सहभावश्चेत् स्यात् सहायम्विनापि सः ॥

यद्येकत्वे सहभावः स्यात् तदा यत्र यत्रैकत्वं तत्र तत्र सहभाव इत्येकस्यापि सहभावः स्यात् । पृथक्त्वेऽपि सहभावे इष्यमाणे यत्र यत्र पृथक्त्वं तत्र तत्र सहभाव इति । अश्वादिव्यतिरिक्तस्य पृथगवस्थितस्य गोरसहायस्य सहभावः स्यात् किञ्च ।

पृथक्त्वे सहभावश्च यदि किं रागरक्तयोः।
सिद्धः पृथक् पृथग्भावः सहभावस्ततस्तयोः॥

पृथक्त्वे सहभावश्च रागरक्तयोः परिकल्प्यते। किमनयोः सिद्धः पृथक् पृथग्भावः किं रक्तानिरपेक्षो रक्तः सिद्धो यतस्तयोः सहभावः स्यात्। पृथक् पृथक् सिद्धयोरेव हि गवाश्वयोः सहभावो दृष्टः। न त्वेवं रागरक्तौ पृथक् पृथक् सिद्धाविति नास्त्यनयोः सहभावः। अथवा पृथक् पृथक् सिद्धयोर्न सहभाव इति कृत्वा सिद्धः पृथक् पृथग्भावो यदि वा तदा रागरक्तयोः परिकल्प्यते भवता किमिदानीं सहभावस्सहभावेनाकिञ्चित्करेण परिकल्पितेनेत्याह।

सहभावं किमर्थं तु परिकल्पयसे तयोः।

रागरक्तयोः सिद्ध्यर्थं सहभावः परिकल्प्यते सच पृथक्पृथगसिद्धयोर्नास्तीति पृथक् पृथक् सिद्धिरभ्युपगम्यते त्वया। नन्वेवं सति सिद्धत्वात् किमनयोः सहभावेन कृत्यं। पृथक् पृथक् न सिध्यतीति एवं सहभावं विकाङ्क्षसि। पृथक् पृथग्रागरक्तयोः सिद्धिर्नास्तीति कृत्वा यद्यनयोः सहभावमिच्छसि स च पृथक् पृथक् सिद्धयोर्नास्तीति सहभावप्रसिद्ध्यर्थं पृथक्त्वं भूय इच्छसि। नन्वेवं सति इतरेतराश्रयायां सिद्धौ स्थितायां कल्प्येतेदानीं सिद्धौ सत्यां कस्य सिद्धिरस्तु। यावता पृथग्भावाप्रसिद्धेश्च सहभावो न सिध्यति।

कतमस्मिन् पृथग्भावे सहभावं सतीच्छसि।
नास्त्येव स पृथग्भावः सहभावोऽनयोः कुतः॥

यस्मिन् पृथग्भावे सति सहभावसिद्धिः स्यादित्यसंभावयन्नाह।

कतस्मिन् पृथग्भावे सहभावं सतीच्छसि।

तदेवं यथोदितविचारपरामर्षेण रागरक्तयोरसिद्धिन्निगमयन्नाह।

एवं रक्तेन रागस्य सिद्धिर्न सह नासह॥ इति।

यथा च रागरक्तयोर्न पौर्वापर्य्येण सिद्धिर्नापि सहभावेन एवं सर्व्वभावानामपीत्यतिदिशन्नाह।

रागवत् सर्व्वधर्म्माणां सिद्धिर्न सह नासह॥ इति।

द्वेषद्विष्टमोहमूढादीनां रागरक्तवदसिद्धिर्योज्यते। अतएवोक्तं भगवता।

यो रज्यते यत्र वा रज्यते येन वा रज्यते।
य दूष्यते यत्र वा दूष्यते येन वा दूष्यते॥

यो मुह्यते यत्र वा समुह्येत येन समुह्येत स तं धर्म्मन्न समनुपश्यति तं धर्म्मन्नोपलभते स तन्धर्म्मन्न समनुपश्यन्ननुपलभमानोऽरक्तोऽदुष्टोऽमूढोऽविपर्य्यस्त-चित्तः समाहित इत्युच्यते तीर्णः पारग इत्युच्यते क्षेमप्राप्त इत्युच्यते अभयप्राप्त इत्युच्यते यावत् क्षीणास्रव इत्युच्यते निःक्लेशोऽवशीभूतः सुविमुक्तचित्तः सुवि-मुक्तप्रज्ञ आजानेयो महाभागः कृतकृत्यः कृतकरणीयः अपकृतभावोऽनुप्राप्तस्व-कार्थः परिक्षीणभवसंयोजनः सम्यगाज्ञासुविमुक्तचित्तः सर्व्वचेतोवशी परमपार-मिताप्राप्तः श्रमण इत्युच्यते। इति विस्तरः।

तथा ये रागद्वेषं तथा मोहस्वभावं ज्ञात्वा सङ्कल्पहेतुजनितं वितथप्रवृत्तं न विकल्पयन्ति न विरागमपीह तेषामाशु सर्व्वभवभावविभावितानामिति।

इत्याचार्य्यचन्द्रकीर्त्तिपादोपरचितायां प्रसन्नपदायां माध्यमकवृत्तौ
रागरक्तपरीक्षा नाम षष्ठप्रकरणम्।

---

अत्राह। विद्यन्त एव संस्कृतस्वभावाः स्कन्धायतनधातवः। उत्पादादि तत्कृतलक्षण-सद्भावात्। उक्तं हि भगवता त्रिणीमानि भिक्षवः संस्कृतस्य संस्कृतलक्षणानि। संस्कृतस्य भिक्षव उत्पादोऽपि प्रज्ञायते। व्ययोऽपि स्थित्यन्यथात्वमपि त्रितयाविद्यमानस्य खरविषाण-स्येव जात्यादिलक्षणमस्ति। तस्मात् संस्कृतलक्षणोपदेशात् विद्यन्त एव स्कन्धायतनधातव इति। उच्यते स्युः स्कन्धायतनधातवः संस्कृतस्वभावास्तावकेन मतेन यदि जात्यादिलक्षणमेव भवति। इहायमुत्पादः संस्कृतलक्षणत्वेनेष्यमाणः संस्कृतो वा तल्लक्षणत्वेनेष्यते असंस्कृतो वा। तत्र यदि संस्कृत उत्पादस्तत्र युक्ता त्रिलक्षणी। त्रयाणां लक्षणानां समाहारस्त्रिलक्षणी। इयं चोत्पादस्थितिभङ्गसमाहारस्वभावा सर्व्वसंस्कृताव्यभिचारिणीति कृत्वा यद्युत्पादः संस्कृत इति परिकल्प्यते तदोत्पादेऽपि त्रिलक्षणी प्रसज्यते ततश्च रूपादिवल्लक्ष्यते इत्युत्पादस्य स्यान्न संस्कृतलक्षणत्वम्। अथोत्पादेऽपि त्रिलक्षणी नेष्यते तदा त्रिलक्षणीरहितत्वादा-काशवत् संस्कृतलक्षणत्वमस्यावहीयत इत्याह। अथासंस्कृत उत्पादः कथं संस्कृतलक्षणत्व-मिति। नैतत् संस्कृतलक्षणमित्यभिप्रायः। अपि चेमे उत्पादादयः संस्कृतस्य लक्षणत्वेन परिकल्प्यमाना व्यस्ता वा पृथग् वा लक्षणत्वेन परिकल्प्येरन्। समस्ता वा सहभूता वा उभयथा च न युज्यत इत्याह।

उत्पादाद्यास्त्रयो व्यस्ता नालं लक्षणकर्म्मणि ।
संस्कृतस्य समस्ताः स्युरेकत्र कथमेकदा ॥

तत्र व्यस्ता लक्षणकर्म्मणि न युज्यन्ते । यद्युत्पादकाले स्थितिभङ्गौ न स्यातां तदा स्थितिभङ्गरहितस्याकाशस्येव संस्कृतलक्षणत्वेनानुपपद्यत एवोत्पादः । अथ स्थितिकाले उत्पादभङ्गौ नस्त स्तदा तद्रहितस्य स्थितिः स्यात् । उत्पादभङ्गरहितश्च पदार्थो नास्त्येवेति नास्याविद्यमानस्य खपुष्पवत् स्थितिर्युज्यते । किञ्च स्थितियुक्तस्य पश्चादनित्यतयापि भङ्गो न स्यात् तद्विरोधिधर्म्माक्रान्तत्वात् । अथ स्यात् पूर्व्वं शाश्वतो भूत्वा पश्चादशाश्वत इति ।
नचैकपदार्थः शाश्वतश्चाशाश्वतश्च युक्त इति । नोत्पादभङ्गरहितस्य स्थितिः तथा यदि भङ्गकाले स्थित्युत्पादौ न स्यातामेवमप्यनुत्पन्नस्य स्थितिरहितस्य खपुष्पस्य विनाशोऽपि नास्तीति । एवं तावदुत्पादादयो व्यस्ता नालं लक्षणकर्म्मणि । नालन्न पर्य्याप्ता इत्यर्थः । इदानीं समस्ता अपि न युज्यन्त इत्याह ।

संस्कृतस्य समस्ताः स्युरेकत्रैके कथं कदा ।

एकत्र पदार्थे एकस्मिन् काले परस्परविरुद्धत्वाद्रागवैराग्यवदालोकान्धकारवद्वा न युज्यन्त इत्यभिप्रायः । यस्मिन्नेव क्षणे पदार्थो जायते तस्मिन्नेव तिष्ठति विनश्यति चेति कः सचेताः प्रतिपद्यते । तस्मात् समस्तानामप्युत्पादादीनां संस्कृतस्य लक्षणकर्म्मणि नास्ति सामर्थ्यम् । अथ यदुक्तं यदि संस्कृत उत्पाद इत्यादि यद्युत्पादादीनां त्रिलक्षणी प्राप्ता प्रसक्ता ततः को दोषः । अथासंस्कृत एवमप्यदोष इति । उच्यते ।

उत्पादस्थितिभङ्गानामन्यत् संस्कृतलक्षणम् ।
अस्ति चेदनवस्थैवमास्ति चेत्ते न संस्कृताः ॥

ननु च पक्षद्वयेऽपि त्रिहित एव दोषस्तत्र किम्पुनरुक्ताभिधानेनेति । सत्यमुक्तो दोषः स खलु नाचार्य्येण किन्तर्हि वृत्तिकारेण ।
अथ पूर्व्वप्रतिज्ञातमेव दूषणान्तराभिधानेन स्पष्टीकरणार्थं पुनराचार्य्योऽभिहितवान् यद्युत्पादस्थितिभङ्गानामन्यदुत्पादादिकं संस्कृतलक्षणमिष्यते तदा तेषामप्यन्यस्तेषामप्यन्यदित्यपर्य्यवसानदोषः स्यात् । सति चापर्य्यवसानदोषे किं पूर्व्वं स्यात् । यत उत्तरकालमपरम्भवेदिति व्यवस्थाभावादसम्भव एवोत्पादादीनामित्यभिप्रायः॥ अथवा पूर्व्वं मुख्यत्वादुत्पादस्यैव दूषणमुक्तमधुना तु सामान्येनेति । नास्ति चेत्ते न संस्कृता इति गतार्थमेतत् । अत्राह । सांमितीयाः सन्ति वोत्पादादीनामुत्पादादयो नवानवस्थाप्रसङ्गो लक्षणानुलक्षणानां परस्परनिष्पादकत्वात् । यस्मादिह संस्कृतो धर्म्मः कुशलः क्लिष्टो वा उत्पद्यमान आत्मना पञ्चदश उत्पद्यन्ते ।

सधर्मस्तस्य चोत्पादः समन्वागमः स्थितिर्जरा अनित्यता । यद्यसौ धर्मः क्लिष्टो भवति तस्य मिथ्या विमुक्तिः । अथ शुभस्तस्य सम्यग्विमुक्तिः यदि नैर्याणिको भवति तस्य नैर्य्याणिकता । अथानैर्य्याणिकतेत्येष परिवारः । इदानीं उत्पादस्यापर उत्पादः यावदनैर्य्याणिकतेत्येष परिवारः । तत्र योऽयं मौल उत्पादः स आत्मानं विरहय्यान्यान् चतुर्द्दश धर्म्मान् जनयिष्यति । उत्पादोत्पादसंज्ञकस्त्वनुलक्षणभूत उत्पादो मौलमेवोत्पादं जनयति । एवं यावदनैर्य्याणिकता चतुर्द्दशधर्म्मान् न निर्य्याणयति न तन्निर्य्याणं प्रापयति इत्यर्थः । नैर्य्याणिकता नैर्य्याणिकतान्तु प्रापयति अनैर्य्याणिकता अनैर्य्यानिकतामेवेति । तदेवमुत्पादादीनां अनवस्थां परिहरन्नाह ।

उत्पादोत्पाद उत्पादो मौलोत्पादस्य केवलम् ।
उत्पादोत्पादमुत्पादो मौलो जनयते पुनः ॥

द्विविधो ह्युत्पाद एको मौल उत्पादः अपरश्च उत्पादोत्पादसंज्ञकः । उत्पादस्योत्पादः उत्पादोत्पाद इति कृत्वा तत्र योऽयमुत्पादोत्पादसंज्ञक उत्पादः स मूलोत्पादस्य केवलमुत्पादकः । तस्येदानीं उत्पादोपादाख्यमुत्पादं मौल उत्पादो जनयति । तदेवं परस्परनिवर्त्तनादस्ति न त्रिलक्षणी उत्पादादीनां न चानवस्थाप्रसङ्ग इति । अत्रोच्यते ।

उत्पादोत्पाद उत्पादो मूलोत्पादस्य ते यदि ।
मौलेनाजनितस्तं ते स कथं जनयिष्यति ॥

यदि तथोत्पादोत्पादस्य उत्पादो मूलोत्पादस्य जनक इति मतं । स कथमिदानीं मौलोत्पादेनानुत्पादितः । स न उत्पादो मौलं जनयिष्यति । अथ मन्यसे उत्पादादित एव मौलोत्पादेनोत्पादो मौलं जनयिष्यति । एतदप्यसदित्याह ।

स ते मौलेन जनितो मौलं जनयते यदि ।
मौलस्य तेनाजनितस्तमुत्पादयते कथम् ॥

स उत्पादो उत्पादसंज्ञक उत्पादमूलेन जनितो यदि मौलं जनयति स मौल उत्पादोत्पादेनाजनितो अविद्यमानः कथमुत्पादोत्पादं जनयिष्यति तस्मात् मौलेन जनितः सन् उत्पादोत्पादो मौलं जनयतीति न युज्यते । ततश्च परस्परनिर्वर्त्त्यनिवर्त्तकत्वाभावात् स एवानवस्थाप्रसङ्ग इति नास्त्युत्पादः । अत्राह उत्पद्यमान एव मुलोत्पाद उत्पादोत्पादं उत्पादयति स एवोत्पादोत्पाद उत्पादं जनयिष्यतीति । उच्यते ।

अयमुत्पद्यमानस्ते काममुत्पादयेदिमम् ।

यद्ययमुत्पादयितुमजातः स कुर्य्यादयं काममयं मूलोत्पाद उपपद्यमान उत्पादयेदयमेवाजातः प्रभुयात् कथमपरमजातमुत्पादयितुमुत्पद्यमानोऽनागतः । स वा जातः कथमुत्पाद-

यिष्यतीति न युक्तमेवैतदित्यभिप्रायः। एवमुत्पादोत्पादेऽपि वाच्यं। अत्राह नैव ह्युत्पादस्योत्पादाय च उत्पादोऽस्ति यतः अनवस्थाप्रसङ्गः स्यात्। किं तर्हि, —

प्रदीपः स्वपरात्मनोः सम्प्रकाशयिता यथा।
उत्पादस्य परात्मानावुभावुत्पादयेत्तथा॥

यथा प्रदीपःप्रकाशस्वभावः स्वादात्मानं प्रकाशयति घटादींश्च एवमुत्पादोऽप्युत्पादस्वभावः स्वादात्मानमुत्पादयिष्यति प्रपञ्चेति। उच्यते। स्यादेतदेवं यदि प्रदीपः स्वपरात्मानौ सम्प्रकाशयेत्। न चैवं यस्मात्।

प्रदीपे नान्धकारोऽस्ति यत्र चासौ प्रतिष्ठितः।

किं प्रकाशयति दीपः प्रकाशो हि तमोवधः इह प्रकाशो नाम तमसः वधः तमश्च प्रदीपस्यात्मनि तावन्न सम्भवति विरोधात् यत्तमोघ्नतः स्वात्मप्रकाशत्वं स्यात्। न चापि प्रदीपो यत्र देशे तिष्ठति तत्र तमोऽस्ति यत्तमो निघ्नतः प्रदीपस्य परप्रकाशकत्वं स्यात्। अतोऽपि नास्ति प्रदीपस्य स्वपरात्मप्रकाशकत्वं। यदा चैवं तदा प्रदीपवत् उत्पादस्य स्वपरात्मोत्पादकत्वं न सम्भविष्यति इति। अयुक्तमेतत्। अत्राह।

यदेतदुक्तं। प्रदीपे नान्धकारोऽस्ति इति एतदसत्यन्धकारघाते युक्तमेव वक्तुं। यस्मादुत्पद्यमानेनैव प्रदीपेन तमो निहतं तत्र प्रदीपे नान्धकारोऽस्ति। यत्र च प्रदीपोऽस्ति तत्राप्यन्धकारो नास्ति इति युज्यते। यदि प्रदीपेन नान्धकारघातः कृतस्तदानुत्पन्न इति प्रदीपे उत्पन्नेऽपि घटादयो नोपलभ्येरन्। अन्धकारघाताभावात् प्रागवस्थयोरिव तस्मादस्त्येवान्धकारघातलक्षणं प्रकाशनं प्रदीपस्य। तच्चानेनोत्पद्यमानेन प्रदीपेन कृतमित्युच्यते। कथमुत्पद्यमानेन प्रदीपेन तमो हतं नोत्पद्यमानो हि तमः प्रदीपः प्राप्नुते यदा। इहालोकान्धकारयोर्यौगपद्याभावात् प्राप्तिरभावः। यदा चैवम्प्राप्तिरभावस्तदा कथं केन प्रकारेण इदानीमुत्पद्यमानेन प्रदीपेन तमो हतमिति युक्तम्परिकल्पयितुं। यस्माच्चैवमुत्पद्यमानः प्रदीपः तमो न प्राप्नोति तस्मान्नैवाप्राप्तत्वात् प्रदीपः किञ्चिदपि प्रकाशयतीत्यवसीयतां। अथ मन्यसे यथा प्राप्तमेवाविद्या ज्ञानं निहन्ति। अप्राप्तमेवं रूपं चक्षुः पश्यति। अप्राप्तमेव योऽयमयस्कान्तो मणिराकर्षति एवमप्राप्तमेवान्धकारं प्रदीपो निहनिष्यतीति॥ एतदप्यसारमित्याह।

अप्राप्यैव प्रदीपेन यदि वा निहतं तमः।
इहस्थः सर्व्वलोकस्थं स तमो निहनिष्यति॥

यद्यप्राप्यैव प्रदीपेन तमो निहतमेवं सति इहस्थ एव प्रदीपः सर्व्वलोकस्थं तमो निहनिष्यति। अप्राप्तत्वात् समीपस्थमिवेत्यभिप्रायः। एतेन न्यायेन ज्ञानेनाविद्यातः चक्षुषो रूपदर्शनमयस्कान्तमणिना अय आकर्षणमित्येवमादिकं साध्यसमं ज्ञेयं।

अथाप्राप्तावपि सत्यामयस्कान्तमणिप्रभृतीनां योग्यदेशावस्थितानामेव स्वकार्य्यकृत्त्वं भविष्यतीति चेत् तदपि न युक्तं । अप्राप्तौ हि सत्यां विप्रकृष्टदेशावस्थितवद्व्यवहितदेशान्तरावस्थितवच्चाप्राप्तत्वात् योग्यदेशावस्थितत्वं न युक्तमिति कुतो योग्यदेशावस्थितानां कार्य्यकृत्त्वं प्रसेत्स्यति । दृष्टमेतल्लोकत इति चेन्नैतदेवं । यथाहि भवान् परिकल्पयति न तथा लोके दृष्टं । यस्मान्न लोकः प्राप्तः प्राप्ते चिन्तामेवमाशु विषयेऽवतार्य्य प्रदीपादीनां प्रकाशकत्वादिकं कल्पयति । यथोदितन्तु विचार मनवतार्य्य प्रदीपेन तमो हतं न चक्षुषा रूपदर्शनं अयस्कान्तमणिना अय आकर्षणमित्यादीच्छति । पश्यतु वा लोक एवं तत्त्वविचारकालेतु लोकस्याप्रामाण्यान्न तेन बाधा शक्यते कर्त्तुं । एवं तावदप्राप्यप्रकाशनमयुक्तं । प्राप्तावपि विषयादिग्रहणमयुक्तमेव । प्राप्तिर्हि एकत्वे सति भवति यदा चैकत्वं तदा स्वरूपदर्शनाकर्षणादिकं नास्ति । यद्यपि चेयं प्राप्त्यप्राप्यादिचिन्ता लौकिकव्यवहारे नावतरतीति निरुपपत्तिकत्वेन मृषार्थत्वादस्य तथापि तत्वविचारेऽवतार्य्या माभूत् ।

परमार्थतोऽपि निरुपपत्तिकपक्षाभ्युपगम इत्यलं प्रसङ्गेन । यदि च स्वपरात्मानौ प्रदीपः प्रकाशयतीति परिकल्प्यते त्वया तमसोऽपि तर्हि प्रतिपक्षभूतस्य स्वपरात्मनोः प्रच्छादनं प्रकल्प्यतामित्याह ।

प्रदीपः स्वपरात्मानं सम्प्रकाशयते यदि ।
तमोऽपि स्वपरात्मानौ छादयिष्यत्यसंशयम् ॥

प्रतिद्वन्द्वित्वात् प्रदीपवत्तमोऽपि स्वपरात्मगतं व्यापारं करिष्यति । ततश्च परवदात्मानमपि छादयिष्यति । यदि चात्मानं छादयेत्तमस्तस्यैवानुपलब्धिः स्यात् । घटादिवत्तमसा प्रच्छादितत्वात् अतएवोक्तमार्य्योपालिपृच्छायां ।

इह शासनी सुरमणीय प्रव्रजता गृहिलिङ्ग जहित्वा । वलवन्तु भविष्यथ श्रेष्ठा एष निदर्शयितुं कारुणिकेन प्रव्रजित्वा गृहिलिङ्गं जहित्वा । सत्यफलस्य भविष्यति प्राप्तिः पुनर्द्धर्म्मस्वभाव तुलिता सर्व्वफला न फला न च प्राप्तिः । अलभन्त फलन्त तथ प्राप्ति आश्चर्य्यं पुनर्जायति तेषां महातिकारुणिको नरसिंहो सुष्ठूपदेशित युक्ति जिनेनेति ॥

तथार्य्यरत्नकूटसूत्रे ।

यथा दीपो नयने चिरस्य हतो हि गेहे पुरुषेण केनचित् ।
तत्रान्धकारस्य न होति एवं चिरस्थितो नाहमितो गमिष्ये ॥

तमोऽन्धकारस्य न शक्तिरस्ति हते प्रदीपेन विगच्छनीयम् ।
प्रतीत्य दीपञ्च विनश्यते तम उभयं पि शून्यं न च किञ्च मन्यति ॥

ज्ञानन्तथा आर्य्यं प्रतीत्य नाश्रवं अज्ञानको क्लेशोपचित्त विगच्छति।
सम्यक्क तेषाञ्च कदाचिद्दिद्यते ज्ञानस्य क्लेशस्य च नित्यकालम्।

ज्ञानं न कस्येति अज्ञानुना भवेत् ज्ञानं प्रतीत्येव विनश्यते तमो।
भयं पि अग्राह्मखपुष्पसन्निभं ज्ञानं तथाज्ञानुभयं पि शून्यं॥ इति।

किञ्चान्यत् इष्टायमुत्पादो यद्यात्मानमुत्पादयेत्। स उत्पन्नो वा स्वात्मानमुत्पादयेदनुत्पन्नो वा। उभयथा च नोपपद्यते इत्याह।

अनुत्पन्नोऽयमुत्पादः स्वात्मानं जनयेत् कथम्।
अथोत्पन्नो जनयते जातः किं जन्यते पुनः॥

यद्यनुत्पन्न उत्पादः स्वात्मानमुत्पादयेत् मुण्डकजटाशिरोमणिरप्यात्मानमुत्पादयेत्। अथोत्पन्न उत्पादयेत् किमुत्पन्नस्यापरेण उत्पादेन प्रयोजनमिति। एवं तावदुत्पाद आत्मानं नोत्पादयति। इदानीं परमपि यथा नोत्पादयति तथा प्रतिपादयन्नाह।

नोत्पद्यमानं नोत्पन्नं नानुत्पन्नं कथञ्चन।
उत्पद्यते तथा ख्यातं गम्यमानगतागतैः॥

यदि हि किञ्चिदुत्पद्यते तदोत्पाद उत्पादयेत् न तु किञ्चिदुत्पद्यतेऽध्वत्रयेऽप्युत्पादासम्भवात्। एतच्च गम्यमानगतागतैः प्रागेवोक्तं तत्र यथा गतं न गम्यते अतीतवर्त्तमानयोर्विरोधात्। नाप्यगतं गम्यते अनागतवर्त्तमानयोर्विरोधात्। नापि गम्यमानं गम्यते गतागतव्यतिरिक्तगम्यमानानुपलम्भादित्युक्तं। एवमुत्पद्यमानो भावो नोत्पद्यते। उत्पन्नानुत्पन्नव्यतिरेकेणोत्पद्यमानाभावात्। उत्पन्नोऽपि नोत्पद्यते अतीतवर्त्तमानयोर्विरोधात् उत्पन्न इति हि उपरतोत्पत्तिक्रियं अन्यदुच्यते। उत्पद्यते इति वर्त्तमानक्रियादिष्टः। ततश्चोत्पन्न उत्पद्यते इत्युच्यमाने अतीतवर्त्तमानयोरेककालता स्यात्।

अनुत्पन्नोऽपि नोत्पद्यते अनागतवर्त्तमानयोर्विरोधात्। तस्मादुत्पादः परमुत्पादयतीति न युक्तं। अत्राह उत्पद्यमानमेवोत्पद्यते नोत्पन्नं नाप्यनुत्पन्नमिति। अथ मन्यसे उत्पन्नानुत्पन्नव्यतिरेकेणोत्पद्यमानासम्भवात् नोत्पद्यमानमुत्पद्यत इति। एतच्च नास्ति यस्मादिहोत्पत्तिक्रियायुक्तमुत्पद्यमानमिति व्यपदिश्यते तस्मादुत्पत्तौ सत्यामुत्पत्तिं प्रतीत्योत्पद्यमानसिद्धेरुत्पद्यमानमेवोत्पद्यते तच्चोत्पद्यमानमुत्पादमुत्पादयतीति उच्यते।

उत्पद्यमानमुत्पत्ताविदं न क्रमते यदा।
कथमुत्पद्यमानन्तु प्रतीत्योत्पत्तिमुच्यते॥

यदुक्तमुत्पत्तिं प्रतीत्य उत्पद्यमानं भवति तच्चोत्पद्यत इति । ननु विशेषत एतद्वक्तव्यं स्यादस्योत्पत्तिं प्रतीत्येदं नामोत्पद्यमानं भवति इति । न चैवमुच्यते न हि तदुत्पद्यमानं विशेषतो निर्धारयितुं शक्यते इदं तदुत्पद्यमानमिति । अनुत्पन्नत्वात्तन्निमित्ताग्रहणतः । तत-श्चोत्पद्यमानासम्भवात् उत्पत्तिक्रियापि नास्तीति । कथमसत्यामुत्पत्तौ तां प्रतीत्योत्पद्यमानं स्यात् । तस्मादुत्पद्यमानमुत्पद्यते तच्चोत्पादमुत्पादयतीत्ययुक्तं । अत्राह अहोवताहमतीव भवतो दृष्टादृष्टशब्दार्थनिरपेक्षादत्यन्तनास्तिकाद्बिभेमि योहि नाम भवांस्तथागतप्रवचन व्याख्यानव्याजेन दूषणमात्रकौशलमेवात्मनः प्रकटयन् परमर्षिणादितमिदं प्रत्ययताप्रतीत्य समुत्पादलक्षणं परमार्थसत्यं तथागतानां निहन्ति । इह भगवता तथागतेन प्रकृतीश्वर-स्वभावकालान् नारायणजैमिनिकणादकपिलादितीर्थकरकर्तृत्वादनिरासेन सर्व्वभावानां तत्व-मादर्शितं । यदुतास्मिन् सतीदं भवति ।

अस्योत्पादादिदमुत्पद्यते । यदुताविद्याप्रत्ययाः संस्कारा इत्याद्यविपरीतं प्रतीत्यसमुत्पादं प्रकटयता तस्य च त्वया नोत्पद्यमानं नोत्पन्नं नानुत्पन्नमित्यादिना दूषणं विदधता तथागत-जनन्याः प्रतीत्यसमुत्पत्तिमातुर्वध एवाचरित इत्यलं भवता सर्व्वनास्तिकेन त्वयेति उच्यते । नाहं सकलदशबलजननीं प्रतीत्यसमुत्पत्तिमातरं निहन्मि । भवानेव तु परमगम्भीरप्रतीत्य-समुत्पादाधिमुक्तिविरहाद्विपरीतं तदर्थमवधार्य्यास्माकमेवाधिमयं करोति । ननु चेदं प्रतीत्येदं भवतीत्येवमभिदधानेन भगवता तथागतेन निस्वभावत्वमेव सर्व्वधर्म्माणां स्पष्टमेवोदितं ।

यस्मात्, –

प्रतीत्य यद्यद्भवति तत्तच्छान्तं स्वभावतः ।

यो हि पदार्थो विद्यमानः स सस्वभावः स्वेनात्मना स्वं स्वभावमनपायिनम्बिभर्त्ति । स सम्बिद्यमानत्वात् नैवान्यत् किञ्चिदपेक्षते । नाप्युत्पद्यते इति कृत्वा सस्वभावभावाभ्युप-गमे सति कुतः प्रतीत्यसमुत्पाद इति भवतैव सस्वभावतां भावानामभ्युपगच्छता सर्व्वथा प्रतीत्यसमुत्पाद एव बाधितो भवति । ततश्च परमधर्म्मबुद्धदर्शनमपि बाधितं भवति । यः प्रतीत्यसमुत्पादं पश्यति स धर्म्मं पश्यति, सम्बुद्धं पश्यतीत्यागमात् । मया तु प्रतीत्य-वीजाख्यं कारणं यद्भवत्यङ्कुराख्यं कार्य्यं तच्चोभयमपि शान्तं स्वभावविरहितं प्रतीत्यसमुत्पन्नं प्रतिपादयता सर्व्वथा भगवतां तथागतानां प्रतीत्यसमुत्पत्तिमाता द्योतिता भवति । यत एव तस्मादुत्पद्यमानञ्च शान्तमुत्पत्तिरेव चेति स्फुटमवसीयतां । अत्राह यदुक्तं ।

उत्पद्यमानमुत्पत्ताविदं न क्रमते यदा ।
कथमुत्पद्यमानं तु प्रतीत्योत्पत्तिमुच्यते ॥ इति ।

तदयुक्तं यस्मादिदमुत्पद्यमानमित्येवं सम्भवति तथाहि घटोत्पत्तिं प्रतीत्य घट उत्पद्य-मानो भवति तथोत्पद्यमानमुत्पाद उत्पादयतीत्युच्यते ॥ एतदप्ययुक्तं यस्मात् ।

यदि कश्चिदनुत्पन्नो भावः सम्विद्यते स उत्पत्तिक्रियां प्रतीत्योत्पद्यते न चैवं कश्चिदुत्पादात् पूर्व्वं क्वचिदस्ति। तस्मिन्नसति घटे किमुत्पद्यते। अथ स्याद्यद्यप्युत्पादात् पूर्व्वं घटो नास्ति नानुत्पन्नस्य घटसंज्ञा प्रतिलप्स्यते। तद्भाविन्या संज्ञया न दोष इति। एतदप्ययुक्तं यदि ह्युत्पत्तिक्रिया वर्त्तते तदा वर्त्तमानीभूतो भावो घटाख्यां प्रतिलभते। यदा त्वनागतभावासम्बन्धेन क्रियाया अप्रवृत्तिस्तदा कुतो वर्त्तमानता। अथ घटाश्रयेन क्रिया प्रारभ्येत तद्वक्तव्यं। योऽसावघटः स किं भवितुमर्हति घट उत नैव किञ्चिद् यदि घट उत्पद्यमानः स कथं उत्पन्नघटो भविष्यतीति।

अथ नैव किञ्चित् कथं तदाश्रया क्रिया प्रवर्त्तते कथम्वा सह उत्पन्नः सन् घटो भवेदिति सर्व्वथा भावितत्वकल्पनाप्ययुक्ता। तस्मादुत्पद्यमानमप्युत्पादो नोत्पादयतीति सिद्धं। अपि चैवं न युज्यमानायामप्युत्पद्यमानस्योत्पत्तौ भवताभ्युपेत्योच्यते।

उत्पद्यमानमुत्पादो यदि चोत्पादयत्ययम्।
उत्पादयेत्तमुत्पादमुत्पादः कतमः पुनः॥

यद्यप्युत्पद्यमानं पदार्थमुत्पाद उत्पादयेत् भवन्मतेन इदन्तु वक्तव्यं। तमिदानीमुत्पादो कतमोऽपर उत्पादमुत्पादयिष्यतीति। अथ स्यादुत्पादस्यापर उत्पाद उत्पादकः परिकल्प्येत तदानवस्थादोषप्रसङ्ग इत्याह।

अथ उत्पादयत्येनं यद्युत्पादोऽनवस्थितिः।

एतच्चोक्तं अथ नासापर उत्पाद इष्यते न त्वेवं सति विनोत्पादेन उत्पाद उत्पद्यते इत्येवं प्राप्नोति ततश्चोत्पादोत्पाद्यानामपि पदार्थानां विनैवोत्पादेनोत्पत्तिरस्तु भावत्वादुत्पादवदेति प्रतिपादयन्नाह।

अथोत्पादादनुत्पन्नं सर्व्वमुत्पद्यते तथा। इति।

अपि चोत्पाद आत्मानं परांश्चोत्पादयतीत्यत्र पक्षे दूषणमेव न वक्तव्यमधुनास्माभिस्मादत्र पक्षे दूषणं।

सतश्च तावदुत्पत्तिरसतश्च न युज्यते।
न सतश्चासतश्चेति पूर्वमेवोपपादितम्॥

नैवासतो नैव सतः प्रत्ययार्थस्य युज्यते।
न सन्नासन्न सदसन् धर्म्मो निर्वर्त्तते सदा॥

इत्यादिना उत्पादो निषिद्ध एव पूर्व्वं। ततश्चैवमुत्पादे निषिद्धे उत्पद्यमानमुत्पाद उत्पादयति स्वपरात्मानौ वोत्पादयतीत्यस्या कल्पनायाः नास्त्येवावतार इति कुत एतत्प्रसेत्स्यति उत्पाद उत्पद्यते उत्पद्यमानमुत्पद्यते स्वपरात्मानौ चोत्पादयतीति। किञ्चान्यत् इहाय मुत्पादः परिकल्प्यमानो निरुध्यमानस्यानित्यतानुगतस्य वर्त्तमानस्य वा भावस्य परिकल्प्यते अनिरुध्यमानस्य वा अतीतानागतस्यानित्यताविरहितस्य। उभयथा च नोपपद्यते इत्याह

निरुध्यमानस्योत्पत्तिर्न भावस्योपपद्यते।
यश्चानिरुध्यमानस्तु स भावो नोपपद्यते॥

तत्र निरुध्यमानस्य वर्त्तमानस्य विद्यमानत्वादुत्पादो नोपपद्यते अनिरुध्यमानस्यापि विना शरहितस्यातीतानागतस्य भावलक्षणविलक्षणस्य खपुष्पस्येव नास्त्युत्पाद इति। एवं भावानामुत्पादभावं प्रतिपाद्यातःपरं स्थितिर्विचार्य्यते। अत्राह विद्यते एव भावानामुत्पादः तद्भाव भाविधर्म्मसद्भावात् नानुत्पन्नस्य स्थितिः सम्भवतीत्युत्पादभावेन स्थितेर्भावात् स्थिति रुत्पादभावभाविनी भवति तस्मादुत्पादोऽप्यस्थितभावो भाविधर्म्मसद्भावात्। इह यन्नास्ति न तद्भावभाविधर्म्मसद्भाव स्तद्यथा गगणकुसुमसौरभ्यस्येति। उच्यते स्यादुत्पादो यदि तद्भावभाविनी स्थितिरेव स्यात् यस्मान्नास्थितास्थितव्यतिरिक्तसन्तिष्ठमानाभावाच्च। अपि च कोऽनुत्पन्नस्य तिष्ठति। इहोत्पादप्रतिषेधात् कोषावनुत्पन्नः पदार्थो यस्तिष्ठेदिति। सर्व्वथ नास्ति स्थितिः। अपि चेयं स्थितिर्निरुध्यमानस्य भावस्य स्यात् अनिरुध्यमानस्य वा उभयथा च न युज्यते इति प्रतिपादयन्नाह।

स्थितिर्निरुध्यमानस्य न भावस्योपपद्यते।
यश्चानिरुध्यमानस्तु स भावो नोपपद्यते॥

निरुध्यमानस्य निरोधाभिमुखस्य तावद्भावस्य विरोधिनी स्थितिर्न सम्भवति। यश्चाप्यनिरुध्यमानः स भाव एव न भवति कुतस्तस्य स्थितिर्भविष्यति अपि च जरसा मरणेन च सर्व्व एव भावाः क्षणमपि न त्यज्यन्ते यदा चैतदेवं तदा जरामरणविरोधिन्याः स्थितेर्भावेषु प्रवृत्त्यवकाश एव नास्ति इति प्रतिपादयन्नाह।

जरामरणधर्म्मेषु सर्वभावेषु सर्वदा।
तिष्ठन्ति कतमे भावाः जरामरणं विना॥

ते हि नो जरामरणरहिता भावाः येषां स्थितिः स्यात् तस्मान्नास्त्येव स्थितिरित्यभिप्रायः। अपि चास्याः स्थितेरन्या वा स्थितिः स्थित्यर्थं परिकल्प्येत स्वयम्वा स्वात्मानं स्थापयेत उभयथा च न युज्यते इत्याह।

स्थित्यान्यया स्थितेः स्थानं तयैव च न युज्यते।
उत्पादस्य यथोत्पादो नात्मना न परात्मना॥

अनुत्पन्नोऽयमुत्पादः स्वात्मानं जनयेत् कथमित्यादिना यथोत्पादः आत्मानं न जनयति इत्युक्तमेवं स्थितिरपि नात्मानं स्थापयति इति वक्तव्यं।

अस्थिता स्थितिरेषा तु स्वात्मानं स्थापयेत् कथम्।
स्थिता चेत् स्थापयत्येषा स्थितायां स्थाप्यतेऽथ किं॥

इति योज्यं। यथाच अन्य उत्पादयत्येनं यद्युत्पादोऽनवस्थितिरित्युत्पादे व्याख्यातमेवं स्थितावपि व्याख्येयं। अस्थां न स्थापयत्येनां स्थितिर्यद्यनवस्थितिरिति। एवं स्थितिरपि न युक्ता। अतएवोक्तं भगवता।

अस्थिता हि इमे धर्माः स्थितिस्त्वेषां न विद्यते।
अस्थितिः स्थितिशब्देन स्वभावेन न विद्यते॥

न स्थितिर्नापि या जातिः लोकनाथेन देशिता।
लोकनाथं विदित्वैवं समाधिं तेन जानयाः॥

उक्तं चार्य्ये सचर्य्यगाथासु —

आकाशनिश्रितसमानुत अयस्कन्धो वहिर्निश्रिता इयं मही पृथ्वी जगच्च सत्त्वा न कर्म्म उपभोगनिदानमेवमाकाशस्य न इतचित्तं एतमर्थं यावदस्थानु अयुः स्थान जिनेन उक्ता। इति विस्तरः।

अत्राह विद्येत एव स्थित्युत्पादौ तत्सहचारिधर्म्मसद्भावात्। इहोत्पाद स्थितिलक्षण-सहचारिणी संस्कृतानामनित्यतास्ति तस्मात् स्थित्युत्पादावपि स्त इति। उच्यते स्यातां स्थित्युत्पादौ यद्यनित्यतैव स्यात् न त्वस्ति कथमिति यस्मात्।

निरुध्यते नानिरुद्धं न निरुद्धं निरुध्यते।

तथा निरुध्यमानं न निरुध्यते इत्यनेन सम्बन्धः निरुध्यमानमपि न निरुध्यते निरुध्य-मानाभावात् निरोधद्वयप्रसङ्गाच्च। यतश्चैवं त्रिष्वपि कालेषु निरोधासम्भवः तस्मान्नास्त्येव निरोधः इति। कुतस्तत्सहचारिस्थित्युत्पादसम्भवः स्यात्। अपि च प्रागुत्पादप्रतिषेधादस-म्भव एव निरोधस्येत्याह किमजातं निरुध्यते इति। अपि चायं निरोधस्थितस्य वा भावस्य स्यादस्थितस्य वा उभयथा च न युज्यते इत्याह।

**स्थितस्य तावद्भावस्य निरोधो नोपपद्यते।**

स्थितस्य निरोधः निरुद्धस्य नास्ति निरोधः।

**नास्थितस्यापि भावस्य निरोध उपपद्यते।**

अस्थितस्य भावस्याविद्यमानस्य निरोधो नास्ति इति सर्वथा नास्ति निरोधः। किञ्चान्यत् इह यदि निरोधः स्यात् स तयैवावस्थया तस्या एवावस्थायायाः स्यादन्यया वान्यस्या अवस्थायाः स्यात् सर्वथा च नोपपद्यते इति प्रतिपादयन्नाह।

**तयैवावस्थयावस्था न हि सैव निरुध्यते।**

**अन्ययावस्थयावस्था न चान्यैव निरुध्यते॥**

तयैव तावत् क्षीरावस्थया सैव क्षीरावस्था न निरुध्यते स्वात्मनि क्रियाविरोधात्। नाप्यन्यया दध्यवस्थया क्षीरावस्था निरुध्यते। यदि हि क्षीरदध्यवस्थयोर्यौगपद्यं स्यात् तयोर्विनाश्यविनाशकभावः न तु दध्यवस्थायां क्षीरावस्थास्ति यदा च नास्ति तदा कामसतीं विनाशयेत् यदि विनाशयेत् खरविषाणतीक्ष्णतामपि विनाशयेत् तस्मादन्ययाप्यवस्थया नैवान्यावस्था निरुध्यते। अत्राह यद्यपि तयैवावस्थया सैवावस्था अन्यया वावस्थया वान्या न निरुध्यते तथापि क्षीरावस्थायाः तावन्निरोधोऽस्ति। ततश्चोत्पादोऽपि स्यादित्युच्यते अस्त्येवतातिजड़तामात्मनो भावात् प्रकटयति। ननु च पूर्वोक्तेन न्यायेन यदेव सर्वधर्म्माणामुत्पादो नोपपद्यते इत्युक्तं तदेव सर्वधर्म्माणां निरोधो नोपपद्यते इति स्फुटतरमेव प्रतिपादितं भवति। अपि च निरोधो नाम यदि कश्चित् स्यात् स सतो वा भावस्य स्यादसतो वा।

तत्र –

**सतश्च तावद्भावस्य निरोधो नोपपद्यते।**

स्वभावादप्रच्युतस्य भावस्य निरोधो न युक्तो यस्मादेकत्वे न हि भावश्च नाभावश्चोपपद्यते। निरोधो हि नाम भावस्य यस्य भवति स नैव भवति ततश्चासतो भावस्य निरोध इति ब्रुवता भावाभावयोरेकाधिकरणताऽभ्युपगता भवति। एकत्वे सति उभयं न युज्यते। यदि तदानीं भावः स्यात् तदा निरोधेनाभावेनावेशोद्भावव्यपदेशो युक्तः। अभावस्याप्यस्य न युज्यते अभावनिरोधिनो भावरूपेणावियोगात्। तस्मादेकत्वे सति भावाभावयोः स पदार्थो नैव भावो नाप्यभाव इति युज्यते। अथवा परस्परविरुद्धत्वादालोकान्धकारवदेकत्वे सति न हि भावश्च नाभावश्चोपपद्यते। एवं तावत् सतो भावस्य निरोधो न युक्तः। इदानीमसतोऽपि भावस्य निरोधो नोपपद्यते। अविद्यमानस्याभावस्य न विनाशोऽस्ति वन्ध्यातनयस्य वाविद्यमानत्वात्। अतएवाह न द्वितीयस्य शिरसश्छेदनं विद्यते यथा प्रसिद्धसत्त्वस्यैव नराणां द्वितीयस्य शिरसो दृष्टान्तत्वेनोपादानात् परिपूर्णतानिर्देशः सति नोपात्तं। तदेवमसतो भावस्य निरोधो न सम्भवति। सतोऽपि न यतश्चोभयथापि न सम्भवति। स केनात्मना स्थितः नास्त्येव निरोध इति प्रतीयतां। किञ्चान्यत् यदि निरोधो नाम भावानां निरोधक इति कल्प्यते तस्येदानीं किमन्यो निरोध इष्यते उत न यदीष्यते तन्न युज्यते।

न स्वात्मना निरोधोऽस्ति निरोधो न परात्मना ।

कथं पुनर्नास्ति इति प्रतिपादयन्नाह । न तत्र यथा, –

उत्पादस्य यथोत्पादो नात्मना न परात्मना ।

अनुत्पन्नोऽयमुत्पादः स्वात्मानं जनयेत् कथम् ॥

इत्यादिनोत्पादः स्वात्मानं नोत्पादयति । एवं निरोधेऽपि स्वात्मानं न निरोधयति । कथमित्युच्यते ।

अनिरुद्धो निरोधोऽयं स्वात्मानं नाशयत्ययम् ।

अथ नष्टो नाशयति नष्टे किं नाश्यते पुनः ॥ इति ।

समुत्पादेन समं वक्तव्यं । एवञ्च स्वात्मना न निरोधोऽस्ति निरोध इदानीं परात्मनापि नास्ति । कथं तत्र यथोत्पादे गदितमन्य उत्पादयत्येनमित्याद्येवं निरोधेऽपि वक्तव्यं ।

अन्यो विनाशयत्येनं नान्यो यद्यनवस्थितिः ।

अथाविनाशो नष्टोऽयं सर्व्वं नश्यतु ते तथा ॥ इति ।

तदेवं परात्मनापि निरोधो न सम्भवतीति नास्ति निरोधस्य निरोधः । अथ मन्यसे नास्ति निरोधस्य निरोध इति तदयुक्तं । यदि हि निरोधस्य निरोधो न स्यात् तदा निरोध-रहितत्वात् संस्कृतलक्षणमवहीयते । तदेवं यदि विनाशस्य विनाशः परिकल्प्यते । तथापि न युक्तो विनाशः अथ न परिकल्प्यते तथापि न युक्त इति कथंत्विदानीं विनाशो योज्यते परस्परं । अथ स्यात्तथाप्येवमेव विचारे सति विनाशो न युज्यते मतयोः समत्वेनैकस्योद्यो भवति इत्युच्यते । नैवेदं चोद्यं समापतति किं कारणं । यस्मात्मना निस्वभावा भावास्ते च निस्वभावा एव सन्तो वालानां इदं सत्याभिनिवेशि व्यवहारपथमुपयान्ति । अविचार-प्रसिद्धैव न्यायेनेति तेषु नास्ति यथोदितविचारावतारोऽस्माकं । मायास्वप्नगन्धर्व्वनगरा-दिकन्तु लौकिकाः पदार्थाः निरुपपत्तिका एव सन्तः सर्व्वलोकस्याविद्यातिमिरोपहत-मलिनचेतसः प्रसिद्धिमुपगता इति । परस्परापेक्षयैवं केवलं प्रसिद्धिमुपगता वा तैरभ्युप-गम्यते । यथोक्तं शतके ।

अलातचक्रनिर्म्माणस्वप्नमायाम्बुचन्द्रकैः ।

धूमिकान्तःप्रतिश्रुत्का मरीच्यभ्रैः समो भव ॥ इति ।

तस्मात् सत्युत्पादे उत्पादः सत्युत्पादे उत्पाद्यं सति निरोधे निरोधः सति निरोध्ये निरोध्यं । यथा निरोधे सति निरोध इत्येवं लौकिकव्यवहारस्याभ्युपगमात् कुतोऽस्मत्पक्षे समप्रस-क्तिता भवितुमर्हति । यस्तु विनाशस्याहेतुकत्वमभ्युपेत्य क्षणिकतां संस्काराणामाह तस्य निर्हेतुकत्वात् खपुष्पवद्विनाशाभावात् कुतः क्षणिकत्वं भावानां सेत्स्यति । कुतो विनाश-

रहितानां संस्कृतत्वमपीति सर्वमेवासमञ्जसं तस्य जायते । जातिप्रत्ययं जरामरणं संस्कृतलक्षणानाञ्च संस्कारस्कन्धान्तर्भावं वर्णयता भगवता ननु सहेतुकत्वं स्पष्टमादर्शितं । विनाशस्य जातिमात्रापेक्षत्वात् चास्य क्षणभङ्गोऽपि सुखसाध्य इति सर्वं सुस्थं जायते । अथ स्याद्विनाशो हि नामाभावो यश्चाभावः किं तस्य हेतुना कर्त्तव्यं । अतो निर्हेतुको विनाश इति । ननु च भावेऽपि हेत्वभावप्रसङ्गो भवतो भावो हि नाम विद्यमानो यश्च विद्यमानस्तस्य च हेतुना प्रयोजनं । न हि जातं पुनरपि जन्यते । तस्मात् सर्वत्रैव हेत्वभावप्रसङ्गादयः । युक्तमेतत् । अपि च यथोत्पादः सहेतुकः पूर्वभावात् पश्चाच्च भावात् एवं विनाशोऽपीष्यतां विनाशोऽपि न सर्वदा भवति । उत्पादात् पूर्वं सहभावात् पश्चाच्च भावात् । यच्चोच्यते यश्चाभावस्तस्य किं हेतुना कर्त्तव्यमिति तदयुक्तं । यस्मान्न वयं विनाशस्य हेतुना किञ्चित् क्रियमानं इच्छामः । किं तर्हि विनाश एव क्रियत इति वर्णयामः न त्वेवं सति क्रियमानत्वाद्विनाशोऽपि भावः प्राप्नोतीति चेदिष्यत एवैतद्विनाशो हि स्वरूपापेक्षयाभावो रूपादिधर्म्मनिवृत्तिस्वभावत्वात्तु न भावः । अपि च मरणमपि विविधकार्य्यप्रत्युपस्थानसंस्कार विध्वंसनं करोति । अपरिज्ञानं यच्चेदं चेत्यागमात् कथं सहेतुको विनाशः । अपि च कल्पिताभावाभावलक्षणायाश्च शून्यतायाः परेण भावरूपतामभ्युपगच्छता कथमभावस्य भावत्वं नाभ्युपगतं भवति भावत्वाच्च कथमसंस्कृतत्वं शून्यतायाः स्यात् अतः सर्वमभ्युपेतं विहीयते भवता । अतएव वक्ष्यते, –

भवेदभावो भावस्य निर्व्वाणमुभयं कथम् ।
न संस्कृतं हि निर्व्वाणं भावाभावौ च संस्कृतौ ॥

इत्यलं प्रसङ्गेन प्रकृतमेव व्याख्यास्यामः । अत्राह यद्युत्पादस्थितिभङ्गाः संस्कृतस्य निषिद्धाः तथापि संस्कृतमस्ति विशेषलक्षणमयुक्तं । तथाहि काठिन्यादिकञ्च तस्य विशेषलक्षणमुपदिश्यते, तस्मात् संस्कृतस्य सद्भावात् तल्लक्षणमप्यस्तीति उच्यते । स्यादेवं यदि संस्कृतमेव वस्तु स्यात् कुतो यस्मात्

उत्पादस्थितिभङ्गानामसिद्धेर्नास्ति संस्कृतं ।

यदा यथोक्तेन न्यायेनोत्पादस्थितिभङ्गाः एव निषिद्धाः तदा कुतः संस्कृतं वस्तु तद्विशेषणलक्षणमप्यस्तीति । अत्राह । विद्यत एव संस्कृतं तत्प्रतिपक्षासंस्कृतसद्भावात् उच्यते । स्यादेतदेवं । यद्यसंस्कृतमेव स्यात् यस्मात्

संस्कृतस्याप्रसिद्धौ च कथं सेत्स्यत्यसंस्कृतं ।

अत्रैकेत्वाकाशप्रतिसंख्यानिरोधनिर्व्वाणानि असंस्कृतानीति कल्पयन्ति । अपरे शून्यतां तथतालक्षणामसंस्कृतां परिकल्पयन्ति तदेतत् सर्वं संस्कृतस्याप्रसिद्धौ सत्यां नास्त्येवेति स्पष्टमादर्शितं । अत्राह । यद्युत्पादस्थितिभङ्गा न सन्तीत्यवधारितं । तर्हि दमनावरणज्ञानिना मुनिना संस्कृतस्य भिक्षव उत्पादोऽपि प्रज्ञायते व्ययोऽपि स्थित्यन्यत्वमपि इत्युदाहृतं तत् कथं नेदितव्यमित्युच्यते ।

यथा माया यथा स्वप्नो गन्धर्व्वनगरं यथा।
तथोत्पादस्तथा स्थानं तथा भङ्ग उदाहृतम्॥

यथा मायादयः स्वभावेनानुत्पन्ना अविद्यामायादिशब्दवाच्याः मायादिविज्ञानगम्याश्च लोकस्य एवमेतेऽपि लोकप्रसिद्धिमात्रेणोत्पादादयः स्वभावेनाविद्यमाना अपि भगवता विधविनेयजनानुग्रहचिकीर्षुणा निर्द्दिष्टा इति। अतएवोक्तम्।

कृष्णायुमांसास्थिसमुच्चये च उत्पाद्यसंज्ञा समुपत्तिरेषाम्।
मूढा हि बाला जनयन्ति रागस्त्रियो न जानन्ति यथैव मायाम्॥

यथा कुमारी सुखिनान्तरेस्मिन् सारिपुत्र जातञ्च मृतञ्च पश्यति।
जातेऽतितुष्टा मृते दौर्मनस्थिता तथोपमान् जानत सर्व्वधर्म्मान्॥

यथैव गन्धर्व्वपुरं मरीचिका यथैव माया सुपिनं यथैव।
स्वभावशून्या तु निमित्तभावना तथोपमान् जानत सर्व्वधर्म्मान्॥

तथा संस्कृतासंस्कृतधर्म्मविविक्ता नास्ति विकल्पेन तेषामृषीणाम्।
सर्वगतीषु असंस्कृतप्राप्तो दृष्टिगते हि सदैव विविक्ता॥

नित्यमरक्त अदृष्ट अनुढास्तस्य स्वभाव समाहितचित्ता।
एष समाधि वली वलवन्तो यो इमु जानति शून्यकधर्म्मान्॥ इति।

इत्याचार्य्यचन्द्रकीर्त्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
संस्कृतपरीक्षा नाम सप्तमं प्रकरणम्॥

---

अत्राह विद्यन्त एव संस्कृतस्वभावतो विज्ञानादयः संस्कृता धर्म्मास्तद्धेतुककर्म्मकारक सद्भावादुक्तं हि भगवता अविद्यानुगतोऽयं भिक्षवः पुरुषपुद्गल पुण्यानपि संस्कारानभिसंस्करोति अपुण्यानपि अनिञ्ज्यानपि संस्कारानभिसंस्करोतीत्यादिना कर्म्मणां कारको व्यपदिष्टः तत्कर्म्मफलञ्च विज्ञानादिकं संस्कृतमुपदिष्टं यस्य च कारकोऽस्ति तदस्ति यथा घटः। यन्नास्ति न तस्य कारकः तद्यथा कूर्म्मरोमप्रावरस्येति। उच्यते स्याद्विज्ञानादिकं संस्कृतं यदि तस्य निष्पादककर्म्मकारकौ स्यातां नतु स्तः यस्मात्, —

सद्भूतः कारकः कर्म्म सद्भूतं न करोत्ययम्।
कारको नाप्यसद्भूतः कर्म्मासद्भूतमिष्यते॥

तत्र करोति इति कारकः कर्त्ता। कुर्व्वाणस्यैव किञ्चित् कारकव्यपदेशो नाकुर्व्वाणस्य। तच्च कारणं सद्भूतस्य वा कर्त्तुः परिकल्प्येतासद्भूतस्य वा सदसद्भूतस्य वा क्रियते इति कर्म्म कर्त्तुरीप्सिततमं तदपि त्रिविधं सद्भूतमसद्भूतं सदसद्भूतञ्च। तत्र सद्भूतः कारकः क्रियायुक्तः सद्भूतं क्रियायुक्तं कर्म्म न करोति इत्येका प्रतिज्ञा। इदानीमसद्भूतोऽपि क्रियारहितोऽसद्भूतं क्रियारहितं कर्म्म न करोतीत्यपरा प्रतिज्ञा। तत्राद्यां प्रसाधयितु-काम आह।

सद्भूतस्य क्रिया नास्ति कर्म्म च स्यादकर्त्तृकम्।

क्रियानिबन्धनत्वात् कारकव्यपदेशस्य करोतिक्रियायुक्त एव कश्चित् सद्भूतः कारक-व्यपदेशं लभते ततश्च तस्यैवम्बिधस्य क्रियाहेतुकलब्धकारकव्यपदेशस्यापरा क्रिया नास्ति। यया कर्म्म कुर्य्यात् क्रियाभावाच्च यदा कारकः कर्म्म न करोति तदा कारकनिरपेक्षमकर्त्तृकं कर्म्म स्यात्। न चाकर्त्तृकं कर्म्म सम्भवति बन्ध्यासूनुरेव घटकरणमिति। एवं तावत् सद्भूतस्य क्रिया नास्ति कर्म्म च स्यादकर्त्तृकमिति दोषप्रसङ्गात् सद्भूतः कारकः कर्म्म न करोति। इदानीं सद्भूतमपि कर्म्म कारको न करोति इति प्रतिपादयन्नाह।

सद्भूतस्य क्रिया नास्ति कर्त्ता च स्यादकर्म्मकः।

सद्भूतं नाम कर्म्म क्रियायुक्तं तस्येदानीं क्रियानिबन्धनलब्धकर्म्मव्यपदेशस्यापरा क्रिया नास्ति। यया कर्म्म क्रियते इति। एवं तावत् सद्भूतस्य कर्म्मणः क्रिया नास्ति। यदा नास्ति परा क्रिया तदा कारकस्तत् सद्भूतं कर्म्म नैव करोति। यदा च न करोति कर्म्मणो द्वितीयक्रियाभावात्। तदा अकर्म्मक एवाविद्यमानकर्म्मक एवाकर्म्मण एव तस्य कर्म्मणः कारकः स्यात्। न चैतत् युक्तं। न ह्यकृतानन्तर्य्यकर्म्मणः आनन्तर्य्यकर्म्मकारकत्वं दृष्टमित्येवं सद्भूतकारकः सद्भूतं कर्म्म न करोति इति संसाध्येदानीं यथाऽसद्भूतमपि कर्म्म सद्भूतः कारको न करोति तथा प्रतिपादयन्नाह।

करोति यद्यसद्भूतोऽसद्भूतं कर्म्म कारकः।
अहेतुकं भवेत् कर्म्म कर्त्ता चाहेतुको भवेत्॥

असद्भूतः कारको यः क्रियारहितः क्रिया च कारकव्यपदेशे हेतुरिति क्रियारहितः कारकोऽपि निर्हेतुकः स्यात्। कर्म्माप्यसद्भूतं निर्हेतुकं स्यात्। सति चाहेतुकवादाभ्युपगमे कार्य्यञ्च कारणञ्च सर्वमयोजितं स्यात्। इत्याह,—

हेतावसति कार्य्यञ्च कारणञ्च न विद्यते।

सत्येव हि हेतोरभ्युपगमे हेतुना यन्निष्पाद्यते तत्कार्य्यं तस्य च यो निष्पादकः तत्कार्य्य-कारणमिति युज्यते तद्यथा घटस्य मृदा हेतुर्घटः कार्य्यं तस्य च चक्रादयः सहकारि-कारणानि। अहेतुकवादाभ्युपगमे तु मुण्डको जटाशिरोमणिरयं घटवन्न स्यात्। अयं घटः सति घटे कूटस्तत्कारणमिति।

एवं – हेतावसतिकार्य्यञ्च कारणञ्च न विद्यते।

ततश्च — तदभावे क्रिया कर्त्ता करणञ्च न विद्यते॥

तदभावे कार्य्यकारणाभावे किं कुर्व्वाणस्य क्रिया सम्भवेत् कस्यां वा क्रियायां कुम्भकारस्य स्वातन्त्र्यात् कर्तृत्वं स्यात्। न चापि मृदान्तावदल्पप्रवृत्त्या साधकतमत्वेन करणत्वं युज्यते इत्येवं तावत्।

तदभावे क्रिया कर्त्ता कारणञ्च न विद्यते।

ततश्च धर्म्माधर्म्मनिर्विद्यते क्रियादीनामसम्भवे इह यदा देवदत्तप्राणातिपातविरति क्रियास्वातन्त्र्यात् कर्त्ता सन् स्वतन्त्रकार्य्येन करणभूतेन प्राणातिपातविरतिक्रियां करोति तदास्य कर्म्म उपजायते। एवं दशस्वपि कुलेषु कर्म्मपथेषु कुशलक्रियानिष्पाद्येषु रत्नत्रय मातापितृपूज्यपूजादिलक्षणेषु च कुशलधर्म्मप्रारम्भेषु योज्यम्।

एवमधर्म्मोऽपि प्राणातिपातादिलक्षणे कुशलविपर्य्ययेण क्रियाकर्तृकरणानामभावे सति कर्म्मणामभावप्रसङ्ग उद्भावनीयः। यदा चैवं धर्म्माधर्म्मौ न सम्भवतः तदा तत्फलमपि नास्त्येवेति प्रतिपादयन्नाह।

धर्म्मे चासत्यधर्म्मे च फलं तस्य न विद्यते।

धर्म्माधर्म्मजनितनिष्टानिष्टफलं सुगतिदुर्गत्योरभावे सति न स्यात् ततश्च फले सति न मोक्षाय न स्वर्गायोपपद्यते मार्गः। यदि हि फलनिष्टानिष्टस्यालौकिकस्य मार्गस्य ध्यानारूप्यसमाधिसमापत्तिलक्षणां स्वर्गस्तदानीं लौकिकमार्गभावना ज्यायसी स्यात्। कु-गतिगमनकर्म्मपथविरतिसाफल्यञ्च स्यात्। यदि चेतोक्तलक्षणं निर्व्वाणफलं स्यात् तदर्थं लोकोत्तरार्य्याष्टाङ्गमार्गभावनासाफल्यं स्यात्। यदा तु फलं नास्ति तदा फले सति न मोक्षाय न स्वर्गायोपपद्यते मार्गः। किञ्चैवं फलाभावे सति सर्व्वक्रियाणाञ्च नैरर्थक्यं प्रसज्यते। या अपि ह्येताः कृषिवाणिज्यवलगतादिकाः क्रियाः फलार्थं प्रालभ्यन्ते ता अपि सर्व्वाः फलाभावे सति नोपपद्यन्ते इति। एवं सर्व्वक्रियाणां नैरर्थक्यं प्रसज्यते भवतां। न चासां नैरर्थक्यं तस्मान्निरवद्यपदोपक्षिप्तवृत्ताकारभूतोऽयं सन्मार्गापवर्गादिनरकादिमहापायप्रपातवत् न हेतु-दृष्टादृष्टपदार्थविरोधीति कृत्वा सद्भिरसद्भूतः कारकोऽसद्भूतं कर्म्म करोतीति पक्षे निकृष्ट एवेत्याहुः। तदेवं प्रतिज्ञाद्वयं संशोध्येदानीं उभयरूपमपि कर्म्म न करोतीत्याह।

कारकः सदसद्भूतः सदसत् कुरुते न हि।

तत्र यदेतत् सदसद्भूतं कर्म्म क्रियायुक्तमक्रियायुक्तञ्च तत् सदसद्भूतः कारको न करोतीति।

यस्मात्—परस्परविरुद्धं हि सच्चासच्चैकतः कुतः।

एकपदार्थः एकस्मिन्काले क्रियायुक्तश्चाक्रियायुक्तश्चेति न युज्यत एवैतत्। ततश्च सदसद्भूतोऽपि कारकः सदसद्भूतं कर्म्म न करोति अविद्यमानत्वादित्यभिप्रायः। एवं समे पक्षे दोषमुद्भाव्य विषमपक्षस्यापि निराचिकीर्षया आह।

सता च क्रियते नासन् नासता क्रियते च सन्।

कर्त्रा सता सद्भूतेन तावत् क्रियाप्रयुक्तोऽसद्भूतमसत्क्रियायुक्तं कर्म्म न क्रियते। यस्मात् सर्व्वैः प्रसज्यते दोषस्तत्र तत्रैव हि सद्भूतस्य क्रिया नास्ति कर्म्म यस्मादकर्तृकं इत्येव तावत् सद्भूतः कारकः कर्म्म न करोति नाप्यसद्भूतं कर्म्म क्रियते असद्भूतं हि कर्म्माहेतुकं भवेत्। ततश्च,—

हेतावसति कार्य्यञ्च कारणञ्च न विद्यते।

इत्यादिना सर्व्वं दूषणमापद्यते। तस्मात् पूर्व्वोक्तैरेव हेतुभिर्दूषितत्वात् अस्य विषमपक्षस्य न पुनर्हेतोरुपादानमनुच्चीयते तथा चैतत् सता कर्त्रा सत्कर्म्म न क्रियते इति प्रतिपादितमेवमसता कर्त्राऽक्रियायुक्तेन सत्कर्म्म न क्रियते इति व्याख्येयमुक्तपथानुसारेण। एवं तावत् विषमपक्षे एकैकपदपरामर्शेन दूषणमभिधायेदानीमेकैकस्य पदस्य पदद्वयपरामर्शेन दूषणाभिधानमाह।

नासद्भूतं न सद्भूतं सदसद्भूतमेव वा।
करोति कारकः कर्म्म पूर्व्वोक्तैरेव हेतुभिः॥

स कारकः सद्भूतोऽसद्भूतं कर्म्म सदसद्भूतमेव वा न करोतीति कथमित्याह पूर्व्वोक्तैरेव हेतुभिरिति। तत्र सद्भूतस्य क्रिया नास्ति इत्यादिना सद्भूतः कारको न करोति असद्भूतमपि कर्म्म न क्रियते। अहेतुकं भवेत् कर्म्म हेतावसति कार्य्यं चेत्यादिना विहितदोषात्। सदसद्भूतमपि कर्म्म न क्रियते परस्परविरुद्धं हि सच्चासच्चैकतः कुतः इति वचनात्। एवं तावत् सद्भूतः कारकोऽकरणोऽसद्भूतञ्च कर्म्म न करोति। इदानीमसद्भूतोऽपि कारकः सद्भूतं कर्म्म सदसद्भूतञ्च कर्म्म न करोतीत्याह।

नासद्भूतोऽपि सद्भूतं सदसद्भूतमेव वा ।
करोति कारकः कर्म्म पूर्व्वोक्तैरेव हेतुभिः ॥

असद्भूतः कारको निर्हेतुको भवेत् हेतावसति कार्य्यञ्च इत्यादिनोक्तदोषात् । असद्भूतकारको न करोति सद्भूतस्य क्रिया नास्ति कर्त्ता च स्यादकर्म्मक इति प्रसङ्गात् । सदसद्भूतोऽपि कर्म्म न क्रियते परस्परविरुद्धं हि सच्चासच्चैकतः कुत इति वचनात् । इदानीं सदसदसद्भूतोऽपि कारकः एकैक एवोभयरूपः सन् यथा सद्भूतमसद्भूतञ्च भिन्नसङ्केतं कर्म्म करोति तथा प्रतिपादयन्नाह ।

करोति सदसद्भूतो न सन्नासन्न कारकः ।
कर्म्मकन्तु विजानीयात् पूर्व्वोक्तैरेव हेतुभिः ॥

परस्परविरुद्धं हि सच्चासच्चैकतः कुतः इति वचनात्,–
सदसद्भूतः कारको न करोति सद्भूतस्य क्रिया नास्ति कर्त्ता च स्यादकर्म्मक इति प्रसङ्गात् । सद्भूतं कर्म्म न क्रियते असद्भूतमिति कर्म्माहेतुकं हेतावसति कार्य्यञ्चेत्यादिनोक्तदोषात् न क्रियते । यतश्चैवं समपक्षेषु विषमपक्षेषु च कर्त्तुः कर्म्मणश्च सर्वथा सिद्धिरयुक्ता तस्मात् यदुक्तं विद्यन्त एव विज्ञानादयः संस्कृता धर्म्माः संस्कृतस्वभावास्तद्धेतुक-कर्म्मकारक सद्भावादिति तदयुक्तं । अत्राह किमवधारितमेतद्भवता न सन्ति भावा इति न हि भवतस्तु सस्वभावभाववादिनः स्वभावस्य भावानां वैधुर्य्यात् सर्वभावापवादः सम्भाव्यते । वयन्तु प्रतीत्योत्पन्नत्वात् सर्वभावानां स्वभावमेवं नोपलभामहे । तत् कस्यापवादं करिष्यामः । यथोक्तमार्य्यरत्नावल्यां ।

परिच्छिन्नोऽयमित्येतदिति मत्वा गतोऽत्र सन् ।
यदि नास्तीति तत्त्वोऽयं गृह्णीयान्मूढ़ एव सः ॥

मरीचिप्रतिमं लोकमेवमस्तीति गृह्णतः ।
नास्तीति चापि मोहाय सति मोहो न मुच्यते ॥

अज्ञानाकल्पितं पूर्व्वं पश्चात्तत्त्वार्थनिर्णये ।
यदा न लभ्यते भाव अभावस्तु तदा कुह ॥ इति ।

तदेवं निस्स्वभावानां कुतो यथोक्तप्रकारसिद्धिः । तस्माल्लौकिकं विपर्य्यासमभ्युपेत्य साम्वृतानां पदार्थानां मरीचिकाजलकल्पानां इदम्प्रत्ययतामात्राभ्युपगमेनैव प्रसिद्धिर्नान्यथेत्याह ।

प्रतीत्य कारकः कर्म्म तं प्रतीत्य च कारकम् ।
कर्म्म प्रवर्त्तते नान्यत् पश्यामः सिद्धिकारणम् ॥

इहाकुर्व्वाणस्य कर्म्मनिरपेक्षस्य कारकत्वाभावात् कर्म्मापेक्षकारकस्य कारकत्वं भवति कारणेन वा क्रियमाणस्य कस्यचित् कर्म्मत्वाभावात् । क्रियमाणस्यैव कर्म्मव्यपदेशात् तं कारक प्रतीत्य कर्म्म प्रवर्त्तते इत्येवं कर्म्मकारकयोः परस्परापेक्षकत्वमुक्त्वा नान्यत् सिद्धिकारणं पश्याम यथाच कर्म्मकारकयोः परस्परापेक्षिकी सिद्धिरेवमन्येषामपि भावानामित्यतिदिशन्नाह ।

एवं विद्यानुपादानव्युत्सर्गादिति कर्म्मणः ।

कर्त्तुश्च । एवमित्यनेनान्तरा कर्म्मकारकप्रक्रियां दर्शयति । उपात्तिरुपादानं अनेन चोपात्ति-क्रियामाह । सा च स्वसाधनं कर्त्तारमुपादातारं कर्म्म चोपादानं सन्निधापयति तयोश्चोपा-देयोपादात्रोः परस्परापेक्षयोः कर्म्मकारकवदेव सिद्धिर्न स्वाभाविकी । कस्मात् पुनः स्वाभा-विकी न भवति इत्याह व्युत्सर्गादितिकर्म्मणः कर्त्तुश्चेति । इति शब्दो हेतु परामर्शिव्युत्सर्गो-व्युदासः । ततश्चायमर्थ उपपद्यते यैरेव हेतुभिः कर्त्तुः कर्म्मणश्च व्युत्सर्गः सोऽस्माभिरुक्तः तैरेव हेतुभिरुपादाता उपादेयश्च प्रतिषिद्धं वेदितव्यं । ननु केवलमनयोरन्योन्यापेक्षिकी सिद्धिः कर्त्तुश्च कर्म्मणश्च प्रतिषेधनावसेयापि च कर्म्मकर्तृभ्यां शेषान् भावान् विभावयेत् प्राज्ञ इति वाक्यशेषः । कर्म्मकारकोपादेयोपादातृव्यतिरिक्ता येऽन्ये भावा जन्यजनक गन्तृगमन द्रष्टव्य-दर्शन लक्ष्यलक्षणोत्पाद्योत्पादकाः । अथावयवाचयविगुणगुणीप्रमाणप्रमेयादयो निरवशेषा भावास्तेषां कर्तृकर्म्मविचारेण स्वभावतोऽस्तित्वं प्रतिषिध्य परस्परापेक्षिकीमेव सिद्धिं प्राज्ञो निर्मुमुक्षुर्जराजातिमरणादिबन्धनेभ्यो मोक्षाय विभावयेत् । एषाञ्च विस्तरेण विचारो मध्यमकावतारादिभ्योऽवसेयः । ननु च शेषान् भावान् विभावयेदित्यनेनैवोपादानोपा-दात्रोरपि गतत्वादुपादानोपादानं पुनरयुक्तं सत्यमेतत्तथापि तत्त्वविचारे प्राधान्यख्यापनार्थं उपादानोपादात्रोर्भेदेनोपादानं तथा ह्युत्तरेषु प्रकरणेषु भूयसानयोरेव विचारयिष्यतीति । अतएवोक्तं भगवताचार्य्योपालिपृच्छायां ।

भयदर्शित नैरयिकं मे सत्त्व सहस्र सम्बजित
नैकेन च विद्यति कश्चिह सत्त्वो यो व्युत्त गच्छति ।
घोरुय पापं नरकारक कारण सन्ति येहि हता
अस्थितो मरण ग्रस्ता कल्पवशेन तु पश्यति तत्र ॥

काय पतन्ति अपायित ग्रस्ताः
चित्त मनोरम संस्थित श्रेष्ठाः ।

स्वर्ण विमान भ्रमन्ति मनोज्ञाः
तेष्वपि कारकु नास्तिह कश्चित् ॥

तेऽपि च स्थापित कल्पवशेन
सङ्ज्ञयवशेण विकल्पितु बालः।
भो च गृहोऽगृहोऽसभूतो
माय मरीचि समो हि विकल्प इति॥

इत्याचार्य्यचन्द्रकीर्त्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
कर्म्मकारकपरीक्षा नाम प्रकरणमष्टम्।

---

अत्राह यदुक्तमेवं विद्यादुपादानव्युत्सर्गादिति कर्म्मणः कर्त्तुश्चेति तदयुक्तं यस्मात्।

दर्शनश्रवणादीनि वेदनादीनि चाप्यथ।
भवन्ति यस्य प्रागेभ्यो सोऽस्तीत्येके वदन्त्युत॥

यस्योपादानादर्शनश्रवणघ्राणरसनादीनि वेदनास्पर्शसंस्कारादीनि च भवन्ति स उपादाता पूर्वमेभ्य उपादानेभ्यः अस्तीति सम्मितीया वदन्ति। किं कारणं यस्मात्।

कथं ह्यविद्यमानस्य दर्शनादि भविष्यति।
भावस्य यस्मात् प्रागेभ्यः सोऽस्ति भावो व्यवस्थितः॥

इह विद्यमान एव देवदत्तो धनोपादानं कुरुते नाविद्यमानो बन्ध्यातनयः। एवं यदि तावत् पुद्गलो दर्शनादिभ्यः पूर्वं व्यवस्थितो न स्यात् नासौ दर्शनादिकस्योपादानमकरिष्यत्। तस्मादस्त्यसौ धनात् प्रागेव स्थितदेवदत्तवत् दर्शनादिभ्यः पूर्वं पुद्गलो योऽस्योपादानं करिष्यतीत्युच्यते।

दर्शनश्रवणादिभ्यो वेदनादिभ्य एव च।
यः प्राग्व्यवस्थितो भावः केन प्रज्ञायतेऽथ सः॥

योऽसौ पुद्गलोदर्शनादिभ्यः पूर्वमस्तीति व्यवस्थाप्यते स केन प्रज्ञाप्यतां पुद्गलप्रज्ञप्तया हि दर्शनादिकं कारणं स यदि तेभ्यः प्राग्व्यवस्थितो ऽस्तीति कल्प्यते तदा दर्शनादिनिरपेक्षः स्यात् घटादिवत् पटः। यश्च स्वकारणनिरपेक्षः स निर्हेतुको धनादिनिरपेक्षधनिकवत् नास्तीत्यभिप्रायः। किञ्चान्यत्।

विनापि दर्शनादीनि यदि चासौ व्यवस्थितः ।
अमून्यपि भविष्यन्ति विना तेन न संशयः ॥

यदि मन्यसे दर्शनादिभ्यः पूर्वं पुद्गलो नामास्ति दर्शनादिकमुपादानमुपादत्त इति नन्वेवं सति निरस्तं संशयममून्यपि दर्शनादीनि विना पुद्गलेन भविष्यन्ति । तथा हि देवदत्तो धनसम्बन्धात् पूर्वं धनव्यतिरिक्तो व्यवस्थितः सन् अर्थान्तरभूतमेव पृथक्सिद्धं धनमुपादत्ते एवमुपादातुरपि स्वात्मव्यतिरेकेणार्थान्तरभूतं दर्शनादिकमुपादानं स्यात् न तु सम्भवति इत्याह ।

अज्ञाते केनचित् कश्चिन् कश्चित् पूर्व्वो विद्यते ।
कुतः किञ्चिद्विना कश्चित् किञ्चित् कञ्चिद्विना कुतः ॥

इह वीजाख्येन कारणेन किञ्चित्कार्य्यमभिव्यज्यतेऽङ्कुराख्यं । तेन च कार्य्येन किञ्चित्-कारणमभिव्यज्यते वीजाख्यमस्येदं कारणमिदमस्य कार्य्यमिति । एवं यदि केनचिद्दर्शना-दिकेनोपादानेन कश्चिदात्मस्वभावोऽभिव्यज्यते अस्यायमुपादातेति केनचिच्चात्मना किञ्चि-दुपादानं दर्शनादिकमभिव्यज्यते इदमस्योपादानमिति तदानीं स्यात् परस्परापेक्षयोरुपादानो-पादात्रोः सिद्धिः । यदा तूपादातारं विना पृथक् सिद्धं दर्शनादिकमभ्युपगम्यते तदा तन्निरा-श्रयमसदेव तस्मान्नास्त्युभयोरपि सिद्धिरिति न युक्तमेतत् दर्शनादिभ्यः पृथगवस्थित उपादा-तेति । अत्राह । यदुक्तं दर्शनश्रवणादिभ्य इत्यादि अत्रोच्यते यदि सर्वेभ्यो दर्शनादिभ्यः प्रागवस्थितः इत्युपेतं स्यात् स्यादेष दोषः । यदा तु सर्वेभ्यो दर्शनादिभ्यः कश्चित् पूर्वो न विद्यते । किन्त्वेकैकस्मात् पूर्वो विद्यते यदा चैवं तदा व्यज्यते दर्शनादिनामप्येवं पुनरन्यदा दर्शनेन दृष्टेत्यभिव्यज्यते न तदा श्रवणादीनुपादाय प्रज्ञायते ततश्च पूर्वोक्तदोषानवसर इति । एतदपि न युक्तं दर्शनादिरहितस्य निरुपादानस्य निर्हेतुकस्य निरञ्जनस्यास्तित्वासम्भवात् ।

सर्व्वेभ्यो दर्शनादिभ्यः यदि पूर्व्वो न विद्यते ।

इति परिकल्प्यते एवमपि ।

एकैकस्मात् कथं पूर्व्वो दर्शनादेः स विद्यते ।

यो हि सर्वेभ्यः पूर्वो न भवति स एकैकस्मादपि न भवति तद्यथा सर्वेभ्यो वृक्षेभ्यः प्राक् वनं-नास्ति तदा एकैकस्मादपि नास्ति सर्वेषाञ्च सिकतानां तैलजननाभावे सति एकैकस्या-अपि सिकतायास्तैलं नास्ति अपि च यो ह्येकैकस्मात् पूर्वो भवति न स सर्वेभ्योऽपि पूर्व एवेत्यभ्युपगतं भवति एकैकव्यतिरेकेण सर्वस्याभावात् तस्मान्न युक्तमेकैकस्मात् पूर्वो विद्यते इति । इतश्च न युक्तं यस्मात् ।

द्रष्टा स एव स श्रोता स एव यदि वेदकः ।
तदेकैकस्माद्भवेत् पूर्व्वं न च युक्तं वक्तुम् ॥(?)

स एव द्रष्टा स एव श्रोतेति यदि स्यात् तदा दर्शनक्रियारहितस्यापि श्रोतुर्द्रष्टृत्वं स्यात् श्रवणक्रियारहितस्यापि द्रष्टुः श्रोतृत्वं स्यात् न चैवं दृष्टं यत् दर्शनक्रियारहितोऽपि द्रष्टा स्यात् श्रवणक्रियारहितश्च श्रोतेति । अत एवाह एवञ्चैतन्न युज्यते इति प्रतिक्रियञ्च कारकभेदात् कुत एतदेवं भविष्यतीति प्रतिपादयन्नाह एवञ्चैतन्न युज्यते इति ॥ आचार्य्यबुद्धपालितस्तु व्याचष्टे एकत्वे ह्यात्मन इन्द्रियान्तरगमनप्रसङ्गः पुरुषस्य स्यात् वातायनरजोपगमनवदिति । अस्याचार्य्यभावविवेको दूषणमाह सर्वगतस्यात्मनो नेन्द्रियान्तरगमनमस्तीत्युक्तदोषप्रसङ्ग इति । तदेतदयुक्तं स्वयूथ्यापरिकल्पितं पुद्गलवादनिरासस्य प्रस्तुतत्वात् तस्य च सर्वगतत्वाप्रतिज्ञानात् तस्मादयुक्त एव प्रसङ्गदोषः । अथापि यथोक्तदोषपरिजिहीर्षया द्रष्टान्य एव श्रोतान्यो वेदकान्यः पुनर्यदि कल्प्यते तदपि न युक्तं एवं हीष्यमाणे सति स्यात् द्रष्टरि श्रोतावस्थत्वं वात्मनां भवेत् तद्यथा गोरन्यो अश्वो न हि गवि सति न भवति यौगपद्यं एवं यदि द्रष्टुरन्यः श्रोता स्यात् स द्रष्टर्य्यपि सति स्यात् यौगपद्येन । न चैव मिष्यते इति नास्त्यन्यत्वं । अपि चैवं सति बहव एवात्मानः प्राप्नुवन्ति द्रष्टृ श्रोतृ वेदनादीनां पृथक् पृथक् सिद्ध्युपगमात् । तस्मादेकैकस्मात् दर्शनादेः पूर्वो नास्ति पुद्गलो नाम कश्चित् । अत्राह । विद्यत एव पूर्व्वं स सर्वेभ्यो दर्शनादिभ्य आत्मा । अथ मतं यद्यस्ति केन प्रज्ञाप्यतेऽयं स इति यद्युच्यते इह दर्शनादिभ्यः पूर्व्वं नामरूपव्यवस्थायां चत्वारि महाभूतानि सन्ति यतः नामरूपप्रत्ययं षडायतनमिति दर्शनश्रवणादीन्युत्पद्यन्ते तस्मात् दर्शनादिभ्यः पूर्व्वं चतुर्म्महाभूतोपादानमेवास्तीति । एवमपि, –

दर्शनश्रवणादीनि वेदनादीनि वाप्यथ ।
भवन्ति येभ्यः स्तेष्वेव भूतेष्वपि न विद्यते ॥

येभ्यो महाभूतदर्शनादिकमुत्पद्यते तेष्वपि महाभूतोपादाननिमित्तकोऽप्येष न युज्यते पूर्व्वेणैव हेतुनेत्यभिप्रायः । तत्र यथापूर्व्वमुक्तम् ।

कुतः किञ्चिद्विना कश्चित् किञ्चित् कश्चिद्विना कुतः । इति

इहापि तथैव वक्तव्यं । महाभूतोपादानात् यश्चात्मा पूर्व्वसिद्धः स्यात् स महाभूतान्युपादाय स्यात् । न चैवं निर्हेतुकत्वात् यश्च नास्ति स कथं महाभूतान्युपादास्यतीति दर्शनोपादानवत् भूतोपादानेऽपि दूषणमुक्तमेवेति न पुनरुच्यते । अत्राह यद्यप्येवमात्मा प्रसिद्धस्तथापि दर्शनादिकमस्त्यप्रतिषेधात् । न चानात्मस्वभावानां घटादीनां दर्शनादिसम्बन्धोऽस्ति तस्मात् सम्बन्धी विद्यत एवात्मेति । उच्यते स्यादात्मा यदि दर्शनादीन्येव स्युः न सन्ति यस्य दर्शनादीन्युपादानं स यदा नास्तीति प्रतिपादितं तदा तस्मिन्नात्मन्युपादातर्य्यसति कुतो दर्शनादीनामुपादानभूतानामस्तित्वमित्याह ।

दर्शनश्रवणादीनि वेदनादीनि वाप्यथ ।

न विद्यते चेत् यस्य न विद्यन्ते इमान्यपि यस्य दर्शनादीनि परिकल्प्यन्ते स यदा नास्तीत्युक्तं ननु तदेव दर्शनादिकमपि नास्तीति स्पष्टमादर्शितम् भवति । ततश्च दर्शनाद्यभावात् नास्त्येवात्मेति । अत्राह किं खलु भगवतो निश्चितं नाम तन्नास्त्यात्मेति केनैतदुक्तं । ननु चानन्तरमेवोक्तं दर्शनाद्यभावादात्मापि नास्तीति उक्तमेतदस्माभिः । नत्वस्यार्थो भवता सम्यक् निश्चितो यतो भावरूप आत्मेति परिकल्पितः सर्व्वस्वभावतो न विद्यते तस्य च मया स्वभावाभिनिवेशनिवर्त्तकमेव वचनमुक्तमसद्भिपर्य्यासप्रतिपत्तेश । न त्वस्याभावः परिकल्पितः । द्वयं ह्येतत् परित्याज्यं यश्च भावेष्वभिनिवेशो यश्चाभावेष्वभिनिवेश इति । यथोक्तमार्य्यदेवेन ।

यस्य वात्मा ममानात्मा तेनात्मा नियमान्न सः ।
न स्वनित्येषु भावेषु कल्पना नाम जायते ॥ इति ।

एतदेव प्रतिपादयन्नाह, –

प्राक्क्यां दर्शनादिभ्यः साम्प्रतं चोर्द्धमेव च ।
न विद्येतेति नास्तीति निवृत्तास्तत्र कल्पनाः ॥

प्राक् तावद्दर्शनादिभ्य आत्मा नास्ति तत्र हि तस्यास्तित्वाभावात् दर्शनादिसहभूतोऽपि नास्ति पृथक् पृथक् सिद्धयोः सहभावादर्शनात् शशशृङ्गयोरिवात्मोपादानयोश्च परस्परनिरपेक्षयोः पृथक् पृथक् सिद्धत्वात् । साम्प्रतमपि नास्ति ऊर्द्धमपि । यदि हि पूर्व्वं दर्शनादीनि स्युः उत्तरकालमात्मा स्यात् तदानीमूर्द्धं सम्भवेत् न चैवं अकर्त्तृकस्य कर्म्मणोऽसिद्धत्वात् यश्चैवमात्मा दर्शनादिभ्यः प्राक् पश्चात् युगपच्च परीक्ष्यमाणो नास्ति तस्येदानीमनुपलभ्यस्वभावस्यास्तित्वं वा कः परिकल्पयेत् प्राज्ञः । तस्मात् कर्म्मकारकवदेवोपादानोपादात्रोः परस्परापेक्षयोश्च सिद्धिर्न स्वाभाविकीति स्थितं । अतएवोक्तं भगवताचार्य्यसमाधिराजभणके ।

तहि कालिणो दशबलोऽनघो
जिनु भापते इमु समाधिवरम् ॥
स्वप्नोपमा भगवती सकला
न हि कश्चि जायति न चो म्रियते ॥

न च सत्व लभ्यति न जीवु नरो
इमु धर्म्मफलेन कदलीसदृशाः ॥

मायोपमो गगनविद्युसमो-
दकचन्द्रसन्निभ मरीचिसमाः ॥

न च अस्मि लोकि मृत्यु कश्चि नरो
परलोकि संक्रमि गच्छति वा
न च कर्म्म नश्यति कदाचि कृतं
फल देवि विक्षण शुभ संसरतो
न च शाश्वतं न च उच्छेद पुनो
न च कर्म्मसञ्चय न चापि स्थिति ॥

न च सोऽपि कृत्व पुनरस्पृशती
न च अन्यकृत्व पुर वेदयते
न च संक्रमो न च पुनरागमनं
न च सर्वमस्ति न च नास्ति पुनः
न च दृष्टि स्थान गति शुद्धिरिहा
नरसत्त्व चारु सुप्रशान्तगति ॥

अनुपादशून्यमनिमित्तपदं
सुगता न गोचर जिनानुगुणाः।
बलधारणी दशबला न चलं
बुद्धानियं वृषभिता परमेति विस्तरः ॥

इत्याचार्य्यचन्द्रकीर्त्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
पूर्व्वपरीक्षा नाम नवमं प्रकरणम् ॥

अत्राह यदिदमुक्तं तस्मात् कर्म्मकारकवदेवोपादानोपादात्रोरपि न स्वाभाविकी सिद्धिरिति तदयुक्तं सापेक्षाणामपि पदार्थानां सस्वाभाव्यदर्शनात् ।। तथा ह्यग्निरिन्धनमपेक्ष्य भवति न च निःस्वभावोऽग्निः तस्य प्रदाहकत्वादिस्वभावकार्य्योपलम्भात् । एवमग्निमपेक्ष्येन्धनम्भवति न च तन्निःस्वभावं वाह्यमहाभूतचतुष्टयस्वभावत्वात् । एवमुपादानसापेक्षोऽपि उपादाता नास्वभावतो भविष्यति उपादातृसापेक्षश्चोपादानमित्यग्नीन्धनवदेतौ भविष्यत उपादानोपादातारावित्युच्यते । स्यादेतदेवं यद्यग्नीन्धने एव स्यातां न तु स्तः । कथं । इह यद्यग्नीन्धने स्यातां नियतं ते एकत्वेन वा स्यातामन्यत्वेन वा उभयथा च न युज्यते इत्याह ।

यदिन्धनं स चेदग्निरेकत्वं कर्त्तृकर्म्मणोः ।
अन्यश्चेदिन्धनादग्निरिन्धनादप्यृते भवेत् ॥

तत्रेध्यते यत्तदिन्धनं दाह्यं काष्ठादिकं सद्भूतं तस्य दग्धा कर्त्ताग्निस्तत्र यदि तावत् यदिन्धनं स एवाग्निरिति परिकल्प्यते तदा कर्तृकर्म्मणोरेकत्वं स्यात् । न चैवं दृष्टं घटकुम्भकारयोश्छेत्तृच्छेत्तव्ययोश्चैकत्वप्रसङ्गात् । तस्य चानभ्युपगमात् । अथान्यत्वमेवमपि यदीन्धनादन्योऽग्निः स्यात् तदेन्धननिरपेक्षस्याग्नेरुपलम्भः स्यात् । न हि घटादन्यः पटः तन्निरपेक्षो न दृष्टः । न चैवमिन्धननिरपेक्षोऽग्निरिति न युक्तमेतत् अपि च यदीन्धनादन्योऽग्निः स्यात् तदानीं नित्यप्रदीप्त एव स्यात् अप्रदीपनहेतुकः पुनरालम्बवैयर्थ्यमेवं कर्म्मणः स्यात् ॥ इन्धनात् पृथग्भूतोऽग्निरिष्यमानो नित्यप्रदीप्त एव स्यात् अप्रदीपनहेतुकश्च स्यात् पुनरालम्भवैयर्थ्यञ्च स्यात् एवञ्च सत्यकर्म्मक एव स्यात् । अमुमेवार्थं प्रतिपादयितुकाम आह ।

परत्र निरपेक्षत्वादप्रदीपनहेतुकः ।
पुनरारम्भवैयर्थ्यं नित्यदीप्तं प्रसज्यते ॥ इति ।

तत्र प्रदीप्यते तदिति प्रदीपनमिन्धनं प्रदीपनं हेतुरस्येति प्रदीपनहेतुकः न प्रदीपनहेतुकः अप्रदीपनहेतुकः । यदि प्रदीपनादन्योऽग्निः स्यात् तदेन्धननिरपेक्षः स्यात् यो हि यस्मादन्यः न तन्निरपेक्षो दृष्टः घटादिवत् पटः ततश्च यत्र निरपेक्षत्वादप्रदीपनहेतुकः स्यात् प्रदीपनसापेक्षस्य ह्यग्नेस्तद्भावे स्यान्निर्व्वाणं यदा तु प्रदीपननिरपेक्षस्तदा निर्व्वाणप्रत्ययवैफल्यात् नित्यप्रदीप्त एव भवेत् नित्यप्रदीप्ते चाग्नौ सत्यग्नेः अपरिनिर्व्वाणार्थश्चास्योपादानं धुक्षणादिकं व्यर्थमेव स्यात् । एवञ्च सत्यकर्म्मकोऽग्निः कर्त्ता स्यात् न चाविद्यमानकर्म्मकस्य कर्तृत्वं वन्ध्यासुतस्य च तस्मादिन्धनादग्नेरन्यत्वमिति न युज्यते । अत्राह यदेतदुक्तमन्यश्चेदिन्धनादग्निरिन्धनादप्यृते भवेदिति तदयुक्तं । इहान्यत्वे सत्यग्नीन्धनयोरपि नेन्धने नाग्नेरस्तित्वं यस्मात् ज्वालापरिगलितोऽर्थो दाह्यलक्षण इन्धनं तदाश्रयेण चाग्निरुपलभ्यते पृथक् । यदा चैतदेवमग्निसम्बन्धादेवेन्धनव्यपदेशो भवति इन्धनाश्रयेण चाग्निरुपलभ्यते न पृथक् तदा अन्यश्चेदिन्धादग्निरित्यादिदोषप्रसङ्गस्य नास्त्येवावसर इति । अस्य पक्षस्याप्ययुक्ततामुद्भावयन्नाह ।

तत्रैकस्मादिध्यमानमिन्धनं भवतीति चेत् ।
केनेध्यतामिन्धनं तत्तावन्मात्रमिदं यदा ॥

यदि मन्यसे ज्वालापरिगतोऽर्थो दाह्यलक्षण इन्धनं तदाश्रयश्चाग्निरिति । एवमपि परिकल्प्यमाने इन्धनमग्निर्दहतीति नोपपद्यते तस्मात् केनेध्यतामिन्धनं तत् तावन्मात्रमिदं यदा । इहेन्धनमग्निर्दहतीति परिकल्प्यमाने ज्वालापरिगतं दाह्यमिन्धनमिति । न चैतद्व्यतिरेकेणापरमग्निं पश्यामो येनेन्धनं दह्यते यस्मादेतावन्मात्रमिदमुपलभ्यते । यदुत ज्वालापरिगतं दाह्यमात्रं यदा चैतद्व्यतिरिक्तो नास्त्यग्निः तदा केन तदिन्धनं दाह्यतां । तावन्मात्रमिदं यदा इध्यमानमात्रमिदं यदेत्यर्थः तस्मान्नाग्निरिन्धनं दहति तद्व्यतिरिक्ताग्न्यभावात् । यदा चैवं तदा कुतः कस्यचित् ज्वालापरिगत इति स एव दोषो न वेपते । अपि चान्यत्वाभ्युपगमेऽग्नीन्धनयोरिध्यमानव्यपदेशाभावात् कुत इध्यमानमिन्धनं कुतो वेन्धनमग्निर्दहतीति प्रतिपादयन्नाह ।

अन्यो न प्राप्स्यतेऽप्राप्तो न धक्ष्यत्यदहन् पुनः ।
न निर्व्वास्यत्यनिर्व्वाणः स्थास्यते वा स्वलिङ्गवान् ॥

यदीन्धनादन्योऽग्निः स्यात् सोऽन्यत्वात् अन्धकारमिवेन्धनं न प्राप्नुयात् न च धक्ष्यत्यप्राप्तत्वात् विप्रकृष्टदेशावस्थितमिवेत्यभिप्रायः । एवञ्चेध्यमानमिन्धनं भवतीति नोपपन्नमेव । ततश्चाग्नेर्निर्वाणं न स्यात् अनिर्व्वाणश्च स्वलिङ्गवानेव स्थास्यति प्रदीप्त इत्यर्थः । वाशब्दोऽवधारणे द्रष्टव्यो विकल्पार्थो वा स्वलिङ्गवानेवाग्निः स्थास्यति यदि वा नास्त्यन्यत्वमग्नेरिन्धनादिति समुच्चये वा अन्यो न प्राप्स्यति न धक्ष्यति न च निर्व्वास्यति स्वलिङ्गवांश्च स्थास्यति तस्मादयुक्तमिन्धनादन्यत्वमग्नेः । अत्राह अयुक्तमग्नीन्धनयोरन्यत्वं । यस्मान्न प्राप्स्यतेऽप्राप्तो न धक्ष्यत्यदहन् पुनरित्यादि तदयुक्तं । दृष्टा ह्यन्यत्वे स्त्रीपुरुषयोः प्राप्तिरेवमग्नीन्धनयोरपि भविष्यतीत्युच्यते ।

अन्यच्च वेन्धनादग्निरिन्धनं प्राप्नुयाद्यदि ।
स्त्री सम्प्राप्नोति पुरुषं पुरुषश्च स्त्रियं यथा ॥

स्यादेतदेवं यदि स्त्रीपुरुषवत् परस्परानपेक्षाग्नीन्धनयोः सिद्धिः स्यात् न त्वस्तीत्याह

अनेन वेन्धनादग्निरिन्धनं काममाप्नुयात् ।
आग्नीन्धने यदि स्यातामन्योन्येन तिरस्कृतः ॥

न त्वेवं सम्भवति यदिन्धनानपेक्षोऽग्निः स्यात् अग्निनिरपेक्षं चेन्धनमिति तस्मात् दृष्टान्तवैयर्थ्यं अन्योन्यापेक्षयोर्न जन्मना । सत्यन्यत्वे येषांप्राप्तिः सिद्धा तेषामेव दृष्टान्तत्वेनोपादानं न्याय्यं स्यात् तच्च न सम्भवतीति न युक्तमेतत् अन्यत्वे सति प्राप्तिरस्ति इति । अत्राह ।

यद्यप्यग्नीन्धनयोः स्त्रीपुरुषवत् परस्परापेक्षा सिद्धिर्नास्ति तथापि परस्परापेक्षया वदन्ति तत-
श्चास्त्येवाग्नीन्धनयोः स्वरूपसिद्धिः परस्परापेक्षत्वात् न ह्यविद्यमानयोर्वन्ध्यापुत्रदुहित्रोः पर-
स्परापेक्षा दृष्टेत्युच्यते । एवमपि ।

यदीन्धनमपेक्ष्याग्निरपेक्ष्याग्निं यदीन्धनम् ।
कतरत् पूर्व्वनिष्पन्नं यदपेक्ष्याग्निरिन्धनम् ॥

अस्येन्धनस्यायमग्निर्दाहकः कर्त्तेत्येवं यदीन्धनमपेक्ष्याग्निर्व्यवस्थाप्यते अस्याग्नेरिदमिन्धनं कर्म्मेत्येवमग्निमपेक्ष्य यदीन्धनं तत्कतरदेनयोः पूर्व्वनिष्पन्नं किमिन्धनं यदपेक्ष्याग्निः स्यात् अतोऽग्निर्यमपेक्ष्येन्धनं स्यात् तत्र यदीन्धनं पूर्व्वनिष्पन्नमिति कल्प्यते तदयुक्तमग्निनिरपेक्ष-स्यानिध्यमानस्येन्धनत्वाभावात् तृणादेः सर्व्वस्य चैवेन्धनत्वप्रसङ्गात् । अथ पूर्व्वमग्निः पश्चादि-न्धनमिति तदप्ययुक्तमिन्धनात् पूर्व्वसिद्धस्याग्नेरसद्भवात् निर्हेतुकत्वप्रसङ्गात् । यच्चापेक्ष्याग्निः प्र-योजनत्वात् तस्मात् नास्त्यत्र किञ्चित् पूर्व्वसिद्धं यदपेक्ष्येतरस्य सिद्धिः स्यात् । अथापि मन्यसे पूर्व्वमिन्धनमपश्चादग्निरिति एवमपि यदीन्धनमपेक्ष्याग्निरग्नेः सिद्धस्य साधनम्भविष्यति । यदी-न्धन मपेक्ष्याग्निर्भविष्यतीति परिकल्प्यते एवन्तर्हि सिद्धस्य सतोऽग्नेः पुनरपि साधनं स्यात् विद्यमानस्यैव पदार्थस्य सिद्धरूपस्यापेक्षा युज्यते । न ह्यविद्यमानो देवदत्तो गृहे कञ्चिद-पेक्षते एवं यद्यग्निर्विद्यमानो न स्यात् नासाविन्धनमपेक्षते । तस्मादस्तित्वमग्नेरभ्युपेयं तदा च किमस्येन्धनस्यापेक्षया पुनः कर्त्तव्यं न हि सिद्धोऽग्निः पुनरिन्धनेन कर्त्तव्यो यदर्थमिन्धनापेक्षा-साफल्यं स्यात् तस्मादिन्धन मपेक्ष्याग्निर्भवतीति न युक्तं । अपि च ।

यदीन्धन मपेक्ष्याग्निर्भवतीति प्रकल्प्यते ।
एवं सतीन्धनस्यापि भविष्यति निरग्निकं ॥

यदीन्धनमसिद्धं स्यात् नैव तदग्निनापेक्ष्यते असिद्धस्यापेक्षायोगात् तस्मान्निरग्नि-कस्येन्धनस्य सिद्धिरभ्युपेया न चैवमेतदिति न युक्तमेतदिति । अथ मतं यौगपद्येनैवेन्धन-सिद्ध्याग्निसिद्धिरग्निसिद्ध्या चेन्धनसिद्धिः ततश्च एकस्यापि पूर्व्वसिद्ध्यनभ्युपगमात् तत्र यदुक्तं कतरत् पूर्व्वनिष्पन्नं यदपेक्ष्याग्निरिन्धनमिति तदयुक्तमित्युच्यते । एवमपीष्यमाणे उभय-स्यापि नास्ति सिद्धिः । यस्मात्

योऽपेक्ष्य सिध्यते भावस्तमेवापेक्ष्य सिद्ध्यति ।
यदि योऽपेक्षितव्यः स सिध्यतां कमपेक्ष्य कः ॥

तत्र यदि यो अग्न्याख्यो भावोऽयमिन्धनाख्यभावमपेक्ष्य सिध्यति इन्धनाख्यश्च भावो योऽग्निना आत्मसिद्ध्यर्थमपेक्षितव्यः स यदि तमेवाग्न्याख्यं पदार्थमपेक्ष्य सिध्यति कथ्यता-मिदानीं सिध्यतां कमपेक्ष्य क इति । यदा चाग्न्यभावे सतीन्धनस्य सिद्धिरेव नास्ति तदा

अकारणस्येन्धनस्याभावात् कुतस्तद्धेतुकाग्निः प्रसेत्स्यति । एवं य इन्धनाख्यो भावो यमग्न्याख्यं भावमपेक्ष्य सिध्यति अग्न्याख्यश्च भावो य इन्धनाख्येन सिद्ध्यर्थमपेक्षितव्यः । स यदि तमेवेन्धनाख्यं भावं अपेक्ष्य सिध्यति कथ्यतां किमिदानीं सिध्यतां कमपेक्ष्य क इति । यदा हीन्धनाभावे सत्यग्नेः सिद्धिर्नास्ति तदा निष्कारणस्याग्नेरभावात् कुतस्तद्धेतुकमिन्धनं । इतश्चाग्नीन्धनयोः परस्परापेक्षयोरपि सिद्धिरसती सिद्धासिद्धयोरपेक्षाभावादिति प्रतिपादयन्नाह ।

योऽपेक्ष्य सिध्यते भावः सोऽसिद्धोऽपेक्ष्यते कथं ।

अथापेक्षते सिद्धत्वापेक्षास्य न युज्यते । यो ह्यग्न्याख्यो भावः इन्धनाख्यं भावमपेक्ष्यसिध्यति सोऽसिद्धो वेन्धनमप्यपेक्षते सिद्धोवा । यद्यसिद्धस्तदासिद्धत्वात् खरविषाणवन्नेन्धनमपेक्ष्य । अथ सिद्धः सिद्धत्वात् किमस्येन्धनापेक्षया न हि सिद्धं पुनरपि साध्यते वैयर्थ्यात् । एवमिन्धनेऽपि वाच्यं तस्मात् नाग्नीन्धनयोः परस्परापेक्षया यौगपद्येन वा सिद्धिरिति । यतश्चैवं यस्मादपेक्ष्येन्धनमग्निर्न अथ स्यादनपेक्ष्याग्निस्तर्हि भविष्यतीति एतदपि न युक्तमित्याह न चापेक्ष्याग्निरिन्धनं अन्यत्वप्रतिषेधादहेतुकत्वप्रसङ्गाच्च । यथा चाग्निमपेक्ष्य वानपेक्ष्य वेन्धनं न सम्भवति एवमिन्धनमपीत्याह –

अपेक्ष्येन्धनमग्निं न नानपेक्ष्याग्निमिन्धनम् ।

एतच्चानन्तरमेव गतार्थत्वान्न पुनरुच्यते । अत्राह – किमनयास्माकमतिसूक्ष्मिकया प्रयोजनं । ये भावन्त वयं क्रमो यस्मादग्निनेध्यमान मिन्धनं प्रत्यक्षत उपलभ्यते तस्मात् तएवाग्नीन्धने इत्युच्यते स्यादेतदेवं यद्यग्निरिन्धनं दहेत् यदीन्धनेऽग्निः सम्भवेत् स इन्धनं दहेत् न तु सम्भवति इत्याह ।

आगच्छत्यन्यतो नाग्निरिन्धनेऽग्निर्न विद्यते ।

इन्धनव्यतिरिक्ताभावात् कुतश्चिदन्यतोऽग्नेरागमनं नास्ति तस्माद् दृष्टत्वात् निरिन्धनस्य चाहेतुकस्याग्नेरागमनाभावात् सेन्धनस्यवागमनप्रयोजनाभावात् । तत्रापि चेन्धने तुल्यपर्य्यनुयोगात् अनवस्थाप्रसङ्गाच्च आगच्छत्यन्यतो नाग्निस्तथेन्धनेप्यग्निर्न सम्भवति तत्रानुपलभ्यमानत्वात् । अथ स्याद्विद्यमानस्यापि भूलोकादिवदभिव्यञ्जनप्रत्ययवैफल्यात् पूर्व्वमनुपलभ्यमानत्वं अरणिनिघर्षणादभिव्यञ्जकप्रत्ययसम्भवात् पश्चादुपलब्धिरिति । इदमेव तावत् सम्प्रधार्य्य किं पुनः मलोदकादीनामभिव्यञ्जकैः प्रत्ययैः क्रियत इति ।

तत्र स्वरूपं तावन्न क्रियते विद्यमानत्वात् । अभिव्यक्तिः क्रियत इति चेत् केयमभिव्यक्तिर्नाम प्रकाशतेति चेत् एवं तर्हि सैव क्रियते पूर्व्वमविद्यमानत्वादस्यासत्कार्य्यवादत्यागश्चैव जायतेऽभिव्यक्तेः पूर्व्वमविद्यमानत्वात् पश्चाच्च भावात् स्वरूपस्य चोत्पत्तिप्रत्ययनिरपेक्षत्वात् खपुष्पवदभिव्यक्तिप्रत्ययसापेक्षतापि न स्यात् । अपि चेयमभिव्यक्तिरभिव्यक्तस्य

वा भावस्य परिकल्प्येतानभिव्यक्तस्य वा तत्र तावद्वुयदभिव्यक्तं तन्नाभिव्यज्यते तस्याभिव्यक्ति वैयर्थ्यात् । अनिष्टादोषप्रसङ्गाच्च । अनभिव्यक्तमपि नाभिव्यज्यते खपुष्पवदभिव्यक्तत्वादित्येवमभिव्यक्तिर्न सम्भवति । अथापि स्याद्विद्यमानस्यैव प्रत्ययैः स्थौल्यं क्रियत इति एवमपि तदेव स्थौल्यं पूर्व्वं नास्तीति तदेव क्रियत इति कुतः स्थौल्योपादानमभिव्यक्तिः । स्थौल्यस्य निर्हेतुकस्यासम्भवात् कस्य स्थूलतापादनादभिव्यक्तिः स्यादिति । तदेवं सर्व्वथा इन्धनेऽग्निर्न सम्भव इति । इन्धनेऽग्निर्न विद्यते न चाविद्यमानाग्निनेन्धनस्य दहनमुपजायते इति असत्यमेवैतदुपलभते भवान् । अपि च यथा पूर्व्वकृतागतगम्यमानानां दूषणमुक्तमत्रेन्धने शेषमुक्तं गम्यमानगतागतैः अग्निनेन्धनं दह्यमानमुपलभ्यते इत्यत्रेन्धनप्रस्तावि शेषं दूषणं गम्यमानगतागतदूषणेन समं वेदितव्यं उक्तपाठ विपर्य्ययेन, –

दग्धं न दह्यते तावददग्धं नैव दह्यते ।
दग्धादग्धविनिर्मुक्तं दह्यमानं न दह्यते ॥

इत्यादिना एतदेव सतो नास्त्यग्निनेन्धनस्य दहनमिति वेदितव्यं । इदानीं यथोपपादितमर्थं निगमयन्नाह ।

इन्धनं पुनरग्निर्न नाग्निरन्यत्र चेन्धनात् ।
नाग्निरिन्धनवान् नाग्नाविन्धनानि न तेषु सः ॥

तत्र यदिन्धनं स चेदग्निरेकत्वं कर्तृकर्म्मणोर्भवेदित्यनेनाग्नीन्धनयोरेकत्व प्रतिषेधादिन्धनमग्निर्न ।

अन्यश्चेदिन्धनादग्निरिन्धनादप्यृते भवेत् ।

इत्यादिना अन्यत्वस्य प्रतिषेधात् ।

नाग्निरिन्धनवान्नाग्नाविन्धनानि न तेषु सः ।

तत्र यदिन्धनं स चेदग्निरेकत्वं कर्तृकर्म्मणोः भवेदित्यनेनाग्नीन्धनयोरेकत्वप्रतिषेधादिन्धनमग्निर्न अन्यश्चेदिन्धनादग्निरिन्धनादप्यृते भवेदित्यादिना अन्यत्वस्य प्रतिषेधान्नाग्निरन्यत्र चेन्धनात् । तस्मान्यत्वोभयपक्षप्रतिषेधादेव तद्वत् पक्षाधाराधेयपक्षाणामप्यर्थतः प्रतिषेधात् तामपि गमयन्नाह नाग्निरिन्धनवान्नाग्नाविन्धनानि न तेषु स इति । तत्राग्निरिन्धनवान्न भवति इन्धनमस्यास्मिन् वा विद्यत इति व्यतिरेकेण वा व्युत्पादेनाव्यतिरेकेण वा । तत्र व्यतिरेकेण तद्वुयथा गोमान् देवदत्तः अव्यतिरेकेण बुद्धिमान् देवदत्तः रूपवानित्यादिरग्नीन्धनयोश्च पक्षद्वयस्यापि प्रतिषिद्धत्वादिन्धनवानग्निरिति प्रतिषेधो विहितः । अन्यस्व कुण्डाद्दध्नः आधारतां प्रतिपद्येत् न चेन्धनादन्यत्वमग्नेरस्तीति नाग्नाविन्धनानीत्युच्यते नापीन्धनेऽस्त्यग्निरन्यत्वप्रतिषेधादिति । एवमाधाराधेयताप्रतिषेधोऽप्यर्थत उपपादित एव । यथाचाग्निः पञ्चधा विचार्य्यमानो न सम्भवति एवमात्मापीत्यतिदिशन्नाह ।

अग्नीन्धनाभ्यां व्याख्यात आत्मोपादानयोः क्रमः ।

सर्व्वो निरवशेषेण तत्रोपायो यत इत्युपादानं यश्चोपादानस्कन्धांस्तानुपादाय प्रज्ञाप्यते स उपादाता ग्रहीता निष्पादकः आत्मेत्युच्यते अहंकारविषयत्वादादितः उत्पादितोऽहं मानोऽस्मिन्निति । तदस्यात्मनः उपादानस्य च यः क्रमः सिद्धः स सर्व्वोऽग्नीन्धनाभ्यां व्याख्यातोऽवगन्तव्यो निरवशेषेण । क्व पुनः सर्व्वस्य निरवशेषस्य सर्व्वग्रहणेन च पञ्च पक्षाः समनन्तरप्रक्रान्ता अभिसम्बध्यन्ते सर्व्वे एते पञ्चापि पक्षा अग्नीन्धनवदात्मोपादानयोरप्यविकला ढौकनीयाः । यश्चैषां प्रतिपादने उपपत्तिक्रमः प्रागुपवर्णितस्तेन निरवशेषेणात्मोपादानयोः प्रतिषेधो वेदितव्यः। इत्यनेन सर्व्वात्मना प्रतिषेधसाम्यमग्नीन्धनाभ्यामात्मोपादानयोः वेदितव्यमित्युपदर्शनार्थं सर्व्वो निरवशेषेणेत्याह । तत्र यदेवोपादानं स एवात्मेत्येवं कर्तृकर्म्मणोरेकत्वप्रसङ्गान्न युज्यते। नाप्यन्यदुपादानमन्य उपादाता स्कन्धव्यतिरेकेणाप्यात्मोपलब्धिप्रसङ्गात् परत्र निरपेक्षत्वादित्यादिप्रसङ्गाच्च। एकत्वान्यत्वप्रतिषेधाच्च स्कन्धवानप्यात्मा न भवति अन्यत्वाभावाच्च नात्मनि स्कन्धाः न स्कन्धेष्वात्मा । एतदेवं पञ्चसु प्रकारेष्वात्मनो न सत्त्वं तस्मात् कर्म्मकारकवदेवात्मोपादानयोः परस्परापेक्षिकी सिद्धिरिति स्थितं । यश्चायमात्मोपादानयोः क्रमः समानयोः एवन्तर्हि सार्द्धं घटपटादिभिः निरवशेषैः पदार्थैः सर्व्वे व्याख्याता वेदितव्याः घटादयो हि कार्य्यकारणभूता अवयवावयवीभूता लक्ष्यलक्षणभूता गुणगुणिभूता वा स्युः तत्र मृदण्डचक्रसूत्रसलिलकुलालव्यायामादयो घटस्य कारणभूता घटः कार्य्यभूतो कपालादयो नीलादयो वा अवयवभूता घटो अवयवी पृथुबुघ्न-लम्बौष्ठ-दीर्घग्रीवत्वादीनि लक्षणानि घटो लक्ष्यः श्यामत्वादयो गुणाः घटो गुणी इत्येवं व्यवस्थाप्याग्नीन्धनवत् क्रमो योज्यः। एषाञ्च घटादीनां आत्मोपादानयोश्च मध्यमकावतारप्रकरणे व्याख्यानमवसेयं । तदेवं कर्म्मकारकवदात्मोपादानयो र्घटादीनाञ्च परस्परापेक्षिक्यां सिद्धौ व्यवस्थितायां तथागतवचनाविपरीतार्थव्याख्याभिमानितायां तीर्थमतोपकल्पितपदार्थव्यवस्था सौगतप्रवचनार्थत्वेनोपनीयातिमूढतया ।

आत्मनश्च सतत्त्वं ये भावानाञ्च पृथक् पृथक् ।
निर्द्दिशन्ति न तान्मन्ये शासनस्यार्थकोविदान् ॥

तत्र सह तेन वर्त्तत इति सतत् सततो भावः सतत्त्वं अपृथक्त्वमनन्यत्वमेकत्वमित्यर्थः । तदेतत् सतत्त्वं ये वर्णयन्ति न तानाचार्य्यः शासनार्थपण्डितान् मन्यते तद्यथा आत्मा उपादानेन प्रज्ञाप्यते येन सहैव तेनोपादानेन सम्भवति स न पृथक् अव्यतिरेकेणैव भवतीत्यर्थः । एवं येन कारणेन मृदादिना घटः प्रज्ञाप्यते तद्व्यतिरेकेणैव सम्भवति न पृथक् एवमात्मनो भावानाञ्च सतत्त्वं ये वर्णयन्ति न ते परमगम्भीरस्य प्रतीत्यसमुत्पादस्य शाश्वतोच्छेदरहितस्योपादाय प्रज्ञप्त्यभिधानत्वं पश्यन्ति पृथक् पृथक् च ते निर्द्दिशन्ति। पृथगित्यात्मानं पृथगुपादानं पृथक् कार्य्यं पृथक् कारणमित्यादिनानात्वं पश्यन्ति अमूनपि न शासनस्यार्थकोविदान् आचार्य्यो मन्यते । । यथोक्तं, —

एकत्वान्यत्वरहितं प्रतिश्रुत्कोपमं जगत् ।
संक्रान्तिमासाद्य गतं बुद्धवांस्त्वमनिन्दितः ॥ इति ॥

एवञ्चाग्नीन्धनपरीक्षयाधिगतधर्म्मतत्वपरमस्य योगिनः कल्पनाकारालिप्तैरपि नैव च पूर्दह्यते रागद्वेषमोहहुताशनैरपि चेति । यथोक्तं भगवता –

यथ गगणु न जातु दग्धपूर्व्वं
सुबहुकल्पशतैर्हि दह्यमानं ।
गगनसम विजानमान धर्म्मा
स्ते न दह्यते जातु साग्निमध्ये ॥

सचिहे ज्वलमाणि बुद्धक्षेत्रे
प्रणिधान करोति समाधि हे ।
शिथिला ज्वलन्त आयु प्रशाम्यता
सशेष पृथ्वि विनश्वरेवास्यान्यथात्वं ॥

तथा, –
अरणिं यथाचोत्तरारणिं
हस्तव्यायामु त्रयति संगती: ।
इति प्रत्ययतोऽग्नि जायते
यातु कृतुकार्य्य लघु निरुध्यते ॥

अथ पण्डितु कश्चि मार्गते
कुत अय मार्गतु कुत याति च ।
विदिशो दिश सर्व्वि मार्गतो
न गति नास्यागतिश्च लभ्यति ॥

स्कन्धायतना विधातवः
शून्याध्यात्मिक शून्यवाह्यिनाः ।
सत्वात्म विविक्ता नालयो
धर्म्म आकाशस्वभावलक्षणाः ॥

इमु ईदृश धर्मलक्षणा
वुद्धदीपङ्करदर्शने त्वया ।
अनुवुद्ध यथा त्वयात्मना
तथा वोधेहि सदेव मानुषान् ॥

विपरीत अभूतकल्पितैः
रागदोषैः परिदह्यते जगत् ।
चयमद्य शमाम्बुशीतलां
मुञ्च धारमनृतस्य नायकेति विस्तरः ॥

इत्याचार्य्यचन्द्रकीर्त्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
अग्नीन्धनपरीक्षा नाम दशमं प्रकरणम् ॥

---

अत्राह विद्यत एवात्मा संसारसद्भावात् । यदिह्यात्मा न स्यात् कस्य पञ्चगतिके संसारे आजठंज वीजाभावेन जन्ममरणपरम्परया संसरणं स्यात् । उक्तं हि भगवता अनवराग्रोहि भिक्षवो जातिजरामरणं संसार इति । अविद्याविवरणानां सत्वानां तृष्णासंगो जनानां तृष्णारज्जुवद्धानां संसरतां संधावतां पूर्व्वा कोटिर्न प्रज्ञायते इति । यथाच भगवदुपदेशात् संसारोऽस्ति तदा संसर्त्ताप्यस्ति सचात्मा उच्यते इति ।

उच्यते स्यादात्मा यदि संसार एव स्यात् कथं यस्मादस्य पूर्व्वा प्रज्ञायते कोटिर्नेत्युवाच महामुनिः । संसारानवराग्रोहि नास्यादि र्नापि पश्चिमा कोटिर्भागोदेश इति पर्य्यायाः पूर्व्वा कोटिः पूर्व्वो देश इत्यर्थः यदिहि संसारो नाम कश्चित् स्यात् पश्चिममपि घटादीनामिव । उक्तञ्च भगवता अनवराग्रोहि भिक्षवो जातिजरामरणं संसार इति यदेव सतः संसारस्या नवराग्रवचनात् संसार एव नास्तीति ननु स्पष्टमादेशयामास स भगवान् । तस्मादस्ति संसारः पूर्व्वापरकोट्यनुपलम्भात् चक्रवदतिष्ठितं । अत्रेदं विचार्य्यते यदि पूर्व्वमपरं च संसारस्य निषिद्धं भगवता कथं पुनरिदमाह तस्मात्तर्हि संसारक्षयाय प्रतिपत्स्यामहे इत्येवं वो भिक्षवः शिक्षितव्यमित्युच्यते । अविद्याविवरणानां सत्वानामित्यादि विशेषणोपादानात् तेषामेवायमनवराग्रः संसार इति प्रतीयते न पुनस्तत्वज्ञानेनैव च न वलात् समुन्मूलिता विद्याविवरणतृष्णानां तेषान्तु लोकोत्तरमार्गज्ञानाग्निना दग्धाशेषक्लेशवासनामूलनिःशेषपादपानां भवत्येवान्त इति विज्ञेयं । कथं पुनरादिरहितानामेकोपदेश इति यावत् दृष्टमेतद्वाद्येषु वृक्षादिष्वाद्यभावेपि दहनादिसंप्रकाशतः सद्भावः । यथोक्तमार्य्यदेवपादैः ।

यथा वीजस्य दृष्टान्तो न चादिस्तस्य विद्यते।

तथा कारणवैकल्यजन्मनोपि च सम्भव इति॥

स चान्तोपदेशालौकिक एवाव्यवहारे स्थित्वा संसारचारकस्य बुद्धानामुत्साहनार्थं सत्वानां देशितो लौकिकज्ञानोपेक्षया अवस्तुकचिन्तायान्तु संसार एव नास्तिकतोऽस्य परीक्षयः प्रदीपावस्थायां रज्जूरगपरीक्षयवत्। अत्राह यद्येवं लौकिकज्ञानापेक्षया अन्तवदादिरपि किं नोच्यते। उच्यते अहेतुकदोषप्रसङ्गात् लौकिकज्ञानापेक्षयापि संसारस्यादेरभाव इति उभयथाप्यादेरभाव एवेति विज्ञेयं। अत्राह यद्यप्यनवराग्रे न स्तः संसारस्य तथापि मध्यमस्य प्रतिषेधात्। ततश्चास्ति संसारो मध्यसद्भावादिह यन्नास्ति न तस्य मध्यमस्ति तद्यथा कुर्म्मरोमप्रावरणस्येति। हास्यः खल्वसि। ननु च भोः

नैवाग्रं नावरं यस्य तस्य मध्यं कुतो भवेत्।

अग्रमिति आदिः पूर्व्वं प्रथममुच्यते अवरमिति अवसानमन्तो व्यवच्छेद उच्यते। यस्य संसारस्यादिरन्तश्च प्रतिषिद्धः तस्य कुतो मध्यं भविष्यति ततश्च संज्ञामात्रकमेव विपर्य्यासपरवशमानसानां संसारस्यादिमध्यावसानविरहितत्वात् आकाशवदलातचक्रादिवदिति भावः। संसाराभावाच्च नास्त्यात्मेति। यतएवं संसारस्यादिमध्यावसानानि न सन्ति अतएव संसाराणामभावात् जातिजरामरणादीनां पूर्व्वापरसहक्रमा अपि नैव सन्तीत्याह।

तस्मान्नात्रोपपद्यन्ते पूर्व्वापरसहक्रमाः।

यथाच नोपपद्यन्ते तथा प्रतिपादयन्नाह।

पूर्व्वं जाति र्यदि भवेत् जरामरणमुत्तरं।

निर्जरामरणा जातिर्भवेज्जायेत चामृतः॥

यदि पूर्व्वं जातिर्भवेत् तदा मरणरहिता स्यान्न च जरादिरहिता जातिर्युज्यते असंस्कृतत्वप्रसङ्गात्। जरामरणरहितस्य भावस्य जातौ परिकल्प्यमानायामन्यत्राम्रतस्यैव देवदत्तस्य प्रथममिह जातिः परिकल्प्यमाना स्यात्। ततश्चादिमान्न संसारः स्यादहेतुकदोषश्च। अभूवमतीतमध्वानमित्येवं पूर्व्वान्तकल्पना च न स्यात्। अभूत्वा च पूर्व्वं पश्चादिहोत्पादः स्यात्। अथ स्यादङ्कुरादीनां यथा पूर्व्वं विनापि जरामरणसम्बन्धात् प्रथममेवोत्पादो दृष्ट एवमात्मनोऽपीति नैवं साध्यसमत्वात्। अत्रादीनामपि हि स्ववीजनिरोधे समुत्पद्यमानत्वात् नान्यत्राविनष्टानामुत्पाद इति सममेतत् पूर्व्वेण। अथ स्यादन्यदेव वृक्षाद्वीजमतोऽन्यत्र विनाशपूर्व्वकमेव वृक्षस्योत्पाद इति। नैवं। कार्य्यकारणयोरन्यत्वस्यासिद्धत्वात्। तथाच वक्ष्यति।

प्रतीत्य यद्यद्भवति न हि तावत्तदेव तत्।

न चान्यदपि तत्तस्मान्न च्छिन्नं नापि शाश्वतम्॥ इति।

न च बीजाङ्कुरसम्बन्धवदेतत्, साध्यसममेतत्। यतस्मान्यत्राप्युत्पादो नास्ति इति न पूर्व्वं जातिरतोऽभ्युपेया। अथ पूर्व्वं जरामरणं पश्चाज्जातिरेवमपि।

पश्चाज्जातिर्यदि भवेत् जरामरणतादितः।

अहेतुकमजातस्य स्याज्जरामरणं कथम्॥

जातिप्रत्ययं जरामरणमिति वचनात् जातिहेतुकं जरामरणमुक्तं भगवता। यद्यत् पूर्व्वं स्यात् तत्तत् निर्हेतुकं स्यात् तस्मान्न युक्तमेतत्। यत्राप्युक्तं।

यथा उच्छित्तिरत्रास्ति उच्छेदस्य न कारणं।

नास्ति चागतिके चार्थे नान्यदस्ति च कारणादिति॥

अत्राप्यत्र पक्षे। यत् न कारणं नान्यत् एवमिहापि जातिरेव कारणत्वेन विनाशस्य वर्ण्यमानान्यदिति नास्त्यहेतुकता विनाशस्य जातिहेतुकत्वाच्चास्योद्गमनहेतुरिति कृत्वा एषापि गाथा सूचिता भवति।

एवं मे संख्याता धर्म्माः सम्भवन्ति सत्कारणाः।

स्वभाव एव धर्म्माणां यं विदन्ति समुद्गता इति।

इदानीं सहभावेनापि जातिजरामरणानामसद्भावं प्रतिपादयन्नाह।

न जरामरणं नैव जातिश्च सह युज्यते।

म्रियते जायमानश्च स्याच्चाहेतुकतोभयोः॥

यदि सहभावो जातिजरामरणानां स्यात् तदा जायमानस्य मरणं स्यात्। न चैतद्युक्तं न च परस्परविरुद्धत्वादालोकान्धकारवदेककालता युक्ता। न चैवं लोके दृष्टं यज्जायमान एव म्रियत इति। अपि चाहेतुकत्वं जात्यादीनां सहभावकल्पनायां स्यात् न हि सहभूतयोः सव्येतरगोविषाणयोरन्योन्यहेतुकता दृष्टेति न युक्तमेतत् तदेवं।

यत्र न प्रभवन्त्येते पूर्व्वापरसहक्रमाः।

प्रपञ्चपतितां जातिं तज्जरामरणञ्च किं॥

यस्यां जातौ यत्र जरामरणे एते पूर्व्वापरसहक्रमाः न सन्ति तां जातिमनुपलभमाना आर्य्याः किम्प्रपश्यन्ति। किं शब्दो सम्भवे। नैव प्रपश्यन्तीत्यर्थः। अथ चैवमविद्यमानेषु जात्यादिषु तां जातिमविद्यमानां वालाः किं प्रपश्यन्ति तच्च जरामरणं यन्न सम्बिद्यते तस्मादवस्तुक एव चात्मनां प्रपञ्च इत्यभिप्रायः। यथाच संसारस्य पूर्व्वा कोटिर्नास्ति एवमन्येषामपि भावानामित्याह।

कार्य्यञ्च कारणञ्चैव लक्ष्यं लक्षणमेव च।

वेदना वेदकश्चैव सन्त्यर्थाश्चैव केचन॥

पूर्व्वा न विद्यते कोटिः संसारस्य न केवलम्।
सर्व्वेषामपि भावानां पूर्व्वा कोटी न विद्यते॥

तत्र यदि पूर्व्वं कारणं पश्चात्कार्य्यं स्यादकार्य्यकं कारणं निर्हेतुकं स्यात्। अथ पूर्व्वं कार्य्यं पश्चात्कारणमेवमपि कारणात् पूर्व्वं कार्य्यं निर्हेतुकमेव स्यात्। अथ युगपत्कार्य्यकारणे स्याता मेवमुभयमप्येकं स्यात्। एवं लक्ष्यलक्षणे वेदनावेदकौ च योज्यौ। न च केवलं संसारस्य व्याख्यानेन कार्य्यकारणादिकं व्याख्यातं वेदितव्यं। अपि च येऽप्यन्ये पदार्था ज्ञानज्ञेयप्रमाण-प्रमेय साध्यसाधनावयवावयविगुणगुण्यादयस्तेषामपि पूर्व्वा कोटी न विद्यते इति योज्यं। अतएवार्य्यरत्नमेघसूत्रे आर्य्यसर्व्वनीवरणविष्कम्भिना महाबोधिसत्त्वेन भगवान् स्तुतः।

आदिशान्ता ह्यनुत्पन्ना प्रकृत्यैव च निर्वृताः।
धर्म्मास्ते विवृता नाथ धर्म्मचक्रप्रवर्त्तने॥ इति।

तथा,—

आदित शून्य अनागत धर्म्मा
अनागत अस्थित स्थान विविक्ताः।
नित्यमसारक मायस्वभावाः
शुद्ध विशुद्ध नभोपम सर्व्वि॥

पश्च प्रभाषति धर्म्म जनस्यो
तञ्च न मन्यति सोऽचयताप:।
आदि निरात्मनि सर्व्विनि धर्म्मा-
स्ताश्च प्रभाषति नो च चयेति॥

कल्पित वुच्चति कल्पितमात्रं
अन्तु न लभ्यति संसरमाणे।
कोटि असन्नण व्यापुरि आसी
देति अनागति प्रत्ययताय॥

कर्म्म क्रिया च प्रवर्त्तति एवं
हीन उत्कृष्टतया समुद्यन्ति।

जन्तुके धर्म्म सदा प्रकृतीये
शून्य नैरात्म्यवीजानथ सर्व्वानित्यादि ॥

इत्याचार्य्यचन्द्रकीर्त्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
पूर्व्वापरकोटिपरीक्षा नामैकादशमं प्रकरणम् ॥

---

अत्राह विद्यत एवात्मा तत्सम्बन्धिदुःखसद्भावात्। इह हि यच्चोपादानो न स्कन्धा दुःखमित्युच्यते तच्चास्ति तेन च दुःखेन कस्यचिद्भवितव्यं न निराश्रयेणेत्यतो विद्यत एव दुःखस्याश्रयः स चात्मेति। उच्यते स्यादात्मा यदि दुःखमेव स्यात् तद्धि भवेत् स्वयं कृतं वा भवेत् परकृतम्वा उभयकृतम्वा हेतुरहितम्वा। सर्व्वथा चेष्यमाणं तत्कार्य्यमेव नास्तीति प्रतिपादयन्नाह।

स्वयं कृतं परकृतं द्वाभ्यां कृतमहेतुकम्।
दुःखमित्येक इच्छन्ति तच्च कार्य्यं न युज्यते ॥

तत्रैके वादिनः स्वयं कृतं दुःखमिति प्रतिपादयन्नाह। अपायं पुनः परकृतमन्ये चोभयकृतं केचिदहेतुसमुत्पन्नमेव दुःखमिति प्रतिपन्नाः। सर्व्वथा च तद्दुःखमिष्यमाणं कार्य्यं कर्त्तव्यं न युज्यते तदेतत्प्रतिज्ञामात्रकमिति तत्प्रतिपादयन्नाह।

स्वयं कृतं यदि भवेत् प्रतीत्य न ततो भवेत्।
स्कन्धानिमानमी स्कन्धाः सम्भवन्ति प्रतीत्य हि ॥

यस्मादिमान् मरणान्तिकान् स्कन्धान् प्रतीत्य औपपत्त्यंशिकाः स्कन्धा उपपद्यन्ते तस्मात् स्वयं कृतं दुःखमिति नोपपद्यन्ते। इदानीं परकृतमपि दुःखं यथा न सम्भवति तथा प्रतिपादयन्नाह।

यद्यमीभ्य इमेऽन्ये स्युरेभ्यश्चामी परे यदि।
भवेत् परकृतं दुखं परैरभिरमी कृताः ॥

यद्यमीभ्यो मरणान्तिकेभ्यः स्कन्धेभ्यः औपपत्त्यंशिकाः स्कन्धा अन्ये स्युरेभ्यो वा औपपत्त्यंशिकेभ्य इमे मारणान्तिकाः स्कन्धाः परे स्युः। स्यात्तदानीं परकृतं दुःखं। न चैषामन्यत्वं दृष्टं हेतुफलसम्बन्धावस्थानात्। वक्ष्यति हि,—

प्रतीत्य यद्यद् भवति न हि तावत्तदेव तत्।
न चान्यदपि तत्तस्मान्न छिन्नं नापि शाश्वतम्॥ इति।

अपरकृतमपि दुःखं न सम्भवति यदि ह्यन्यत्वं स्यात् तदा सत्यन्यत्वे एतैः परभूतैः स्कन्धैरमी परभूताः कृता इति युक्तं वक्तुं स्यात्। न चैतदेवमिति परकृतमपि दुःखं न सम्भवति। अथ स्यान्न कुतो यस्मात् दुःखेनैव दुःखं कृतमतः स्वयं कृतमिति किन्तर्हि पुद्गलेन। यस्मात् स्वयमेव कृतं नापरेण कृत्वा दत्तमित्यतः स्वयं कृतं दुःखमिति ब्रूमः। उच्यते,—

स्वपुद्गलकृतं दुःखं यदि दुःखं पुनर्विना।
स्वपुद्गलः स कतमो येन दुःखं स्वयं कृतम्॥

यदेतन्मनुष्यः दुःखं पञ्चोपादानस्कन्धलक्षणं स्वयं पुद्गलेन कृतमिति परिकल्प्यते कल्प्यतामसौ पुद्गलो येन तद्दुःखं स्वयंकृतं। यदि तावद्येन दुःखेन स्वपुद्गलः प्रज्ञाप्यते तदेव दुःखं तेन कृतमिति स देहेन कथ्यतामिदं तद्दुःखमयमस्य कर्त्तेति। तथापि मनुष्य दुःखोपादानेन पुद्गलेन तदेव दुःखं कृतं स्यात्। न तर्हि स्वपुद्गलकृतं तत् परपुद्गलकृतमेव स्यात्। अथोपादानभेदेऽपि पुद्गलभेद इष्यते एतच्च नास्ति उपादानव्यतिरिक्तस्य भिन्नस्य पुद्गलस्य दर्शयितुमशक्यत्वात्। एवं तावत् स्वपुद्गलकृतं दुःखं न भवति तत्राह क एवमाह। स्वपुद्गलकृतं दुःखमिति किं तर्हि परपुद्गलजं दुःखमन्यदेव देवदुःखान्मनुष्यपुद्गलः मनुष्यपुद्गलश्च देवदुःखं कृत्वा यस्माद्देवपुद्गलाय ददाति तेन च देवदुःखेन देवपुद्गलः प्रज्ञाप्यते तस्मात्तस्य पुद्गलस्य कृतं दुःखं परपुद्गलजमेव भवति। उच्यते,—

परपुद्गलजं दुःखं यदि यस्मै प्रदीयते।
परेण कृत्वा यद्दुःखं स दुःखेन विना कुतः॥

यदि देवदुःखं मनुष्यपुद्गलकृतं तेन न मनुष्यपुद्गलेन तद्दुःखं कृत्वा परस्मै देवपुद्गलाय प्रदीयते इति सन् देवपुद्गलो देवदुःखविनिर्मुक्तः कुतो यस्मै प्रदीयते इति। एवन्तावत्परपुद्गलो यस्य दुःखस्य प्रतिग्राहक एव नास्ति। इदानीं यश्च ददाति असावपि नास्तीत्याह।

परपुद्गलजं दुःखं यदि कः परपुद्गलः।
विना दुःखेन यत्कृत्वा परस्मै प्रहिणोति तत्॥

येनोपादानेन पुद्गलः प्रज्ञाप्यते स मनुष्योपादानव्यतिरिक्तः कतमो यो देवपुद्गलाय स देवदुःखं कृत्वा प्रदास्यति तस्मात्परपुद्गलजमपि दुःखं न सम्भवति। ततश्च,—

स्वयं कृतस्याप्रसिद्धेः दुःखं परकृतं कुतः।
परो हि दुःखं यत् कुर्यात्तत्तस्य स्यात् स्वयं कृतम्॥

यदि देवपुद्गलदुःखं मनुष्यपुद्गलेन कृतत्वात् परकृतम्भवति ननु मनुष्यपुद्गलस्य स्वयं कृतमेव तद्भवति एतच्च नास्तीत्युक्तं ततः स्वयं कृतस्याप्रसिद्धेर्यथा मनुष्यपुद्गलेन स्वयं कृतं दुःखं न कृतं तदा कुतः परपुद्गलस्य देवाख्यस्य ते दुःखं परकृतम्भविष्यतीति । अतोऽपि परकृतं दुःखं न सम्भवति । इदानीं प्रकारान्तरेणापि पक्षद्वयासम्भवं प्रतिपादयन्नाह ।

न तावत् स्वकृतं दुःखं नहि तेनैव तत्कृतम् ।
परो नात्मकृतश्च स्यात् दुःखं परकृतं कथम् ॥

इतश्च स्वपराभ्यां दुःखस्य करणं न युज्यते तस्मान्न तावत् स्वकृतं दुःखं । किं कारणं यस्मात् न तेनैव हि तत् कृतं स्वात्मनि वृत्तिनिरोधादतः स्वकृतं नास्ति परकृतमपि । यस्माद्योऽसौ परः करोतीति परिकल्प्यते स एव तावन्नात्मना कृतो नात्मना निष्पन्नः तस्यापि हेत्वन्तरापेक्षणात् । यश्च स्वात्मना न निष्पन्नः स कथमविद्यमानस्वभावः सन् परं करिष्यतीति न युक्तमेतत् । इदानी मुभयकृतमपि दुःखमसदित्याह ।

स्यादुभाभ्यां कृतं दुःखं स्यादेकैककृतं यदि ।

यदि ह्येकैकेन दुःखस्य कारणं स्यात् तदानीं उभाभ्यां कृतं दुखं नचैकैककृतं तदुक्तदोषात् न येन केन प्राणातिपातेन कृतेन द्वाभ्यां कृतमिति व्यपदेशो दृष्टः । इदानीं निर्हेतुकमपि दुःखं नास्ति तथा प्रतिपादयन्नाह ।

पराकारा स्वयंकारं दुःखमाहेतुकं कुत इति ।

परेणाकारोऽकरणमस्येति पराकारं स्वयंकारोऽस्येति स्वयंकारं । यदि दुःखं स्वयं कृतं नास्ति परकृतमपि नास्ति यथोक्तेन न्यायेन तदिदानीं कुत एव निर्हेतुकम्भविष्यति खपुष्पसौगन्धवत् । दुःखाभावात् कुतस्तस्याश्रयभूत आत्मा यथा च चतुर्धा विचार्य्यमाणं दुःखम तदेवं वाह्या अपि वीजाङ्कुरघटपटादयो भावा वेदितव्या इति प्रतिपादयन्नाह ।

न केवलं हि दुःखस्य चातुर्विध्यं न विद्यते ।

सर्व्वेषां वाह्यानामपि भावानां चातुर्विध्यं न विद्यते पूर्व्ववत् सर्व्वं समं योज्यं । यदि खल्वेषां दुःखादीनां चातुर्विध्यासम्भवस्तत् कतमेन तर्हीदानीं प्रकारेणैषां सिद्धिरियुच्यते स्वभावतो यद्येतानि दुःखादीनि स्युः न कतमेषां चतुर्णां प्रकाराणामन्यतमेन प्रकारेण सिद्धिः स्यात् नत्वस्ति तस्मात् स्वभावतो न सन्ति दुःखादीनि इत्यवसीयते । अथ विपर्य्यासमात्रलब्धात्मसत्ताका या दुःखादिसम्वृतः प्रतीत्यसमुत्पादव्यवस्था मृग्यते तदा कर्म्मकारकपरीक्षाप्रकरणविहितविधिना यथोदितपक्षचतुष्टयतिरस्कारेणेदं-प्रत्ययतामात्राया प्रतीत्यसमुत्पादसिद्धर्या सिद्धिरभ्युपेया । यथोक्तं, –

स्वयं कृतं परकृतं द्वाभ्यां कृतमहेतुकम्।
तार्किकैरिष्यते दुःखं त्वया तूक्तं प्रतीत्यजम्॥ इति।

उक्तञ्च भगवतार्य्योपालिपरिपृच्छायां,—

एष दर्शित नैरयकं भे
सत्त्वसहस्र सम्बजित नैके।
न च विद्यति कश्चिह सत्त्व यो
व्युत्त गच्छति घोरमपायम्॥

न च कारक कारण सन्ति
ये हि कृता असितो मरणस्ताः।
कल्पवशेन तु पश्यति तत्र
कायि पतन्ति अपायित शस्त्राः॥

चित्रमनोरम सज्जित श्रेष्ठाः
स्वर्णविमान ज्वलन्ति मनोज्ञाः।
तेष्वपि कारकु नास्ति ह कश्चि-
त्तेऽपि च स्थापितकल्पवशेन॥

कल्पवशेन विकल्पितु लोकः
सञ्ज्ञग्रहेण विकल्पितु वालः।
सो च गुह्योऽगुह्योऽसम्भूतो
मायमरीचिसमा हि विकल्पाः॥ इति विस्तरः।

तथा—सम्बृति भाषितु धर्म्म जिनेन
संस्कृत पश्यथ एव नास्तीह।
भूत तु आत्मनरो वा
एतु कुलक्षण सर्व्वजगस्य॥

कृष्णशुभं च न पश्यति कर्म्म
आत्मन कृत्व च वेदयितव्यम्।

नोऽपि तु संक्रम कर्म्मफलस्यो
नो च अहेतुक प्रत्यनुभोति ॥

सर्व्वि भवा अलिका वशिकाचो
रिक्तकतुच्छकफेनसमाश्च ।
मायमरीचिसमा सदशून्या
देशितु सम्वृतु ते च विविक्ताः ॥

शैलगुहागिदुर्गनदीषु
यद्वतृपतिश्रुत्कजायि प्रतीत्य ।
एवमसंस्कृत सर्व्वि विजाने
मायमरीचिसमं जगु सर्व्वमित्यादि ॥

इत्याचार्य्यचन्द्रकीर्त्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
दुःखपरीक्षा नाम द्वादशमं प्रकरणम् ।

---

यतश्चैवं समनन्तरातिक्रान्तं प्रकरणविधिना स्वपरोभयकृतमहेतुसमुत्पन्नत्वञ्च निरूप्यमाणां भावानामसदन्यश्चोत्पादको विधिरसन् उत्पन्नरूपत्वेन चेत् भावा अविद्यातिमिरोपहतमति-नयनानां वालपृथग्जनानां ख्यान्ति ॥ तस्मान्निःस्वभावा एव सन्तो वालानां विसम्वादे कामाय करितुरगादिवत्तदभिज्ञानां न तु विज्ञानां । अतएव सर्व्वधर्म्मस्वभावापरोक्ताधीनः । येन समुन्मूलिताशेषाविद्यावासनश्च विपर्य्यासविपर्य्यस्ता त्राणसत्त्वपरित्राणो यो विपरीतनैः-स्वाभाव्योदेशतत्परो बुद्धो जगद्विबोधको महाकारुणिकः, तन्मृषा मोषधर्म्मः यद्भगवानित्य-भाषत ।

सर्व्वे च मोषधर्म्माणः संस्कारास्तेन ते मृषा ।
सूत्रोक्तं तन्मृषामोषधर्म्म यदिदं संस्कृतम् ॥

एतदधि खलु भिक्षवः परमं सत्यं यदिदममोषधर्म्मनिर्व्वाणं सर्व्वसंस्काराश्च मृषा मोष-धर्म्माण इति । तथामोषधर्म्मकमप्येतत् प्रलापधर्म्मकमप्येतदिति तदनेन न्यायेन यन्मोष-धर्म्म तन्मृषेत्येवं तस्मादुक्तवान् तथागतो भगवान् सर्व्वे च मोषधर्म्माणः संस्कारास्तस्मा-मोषधर्म्मकत्वेन तेषां संस्कारा मृषा भवन्ति । चित्रकरयन्त्रदारिकावत् ।

लक्षणोपेतमन्तस्वभावारणवस्थितोदयमवत्सराजवत्। तत्र विषम्वादकमोषधर्मकवितथ-ख्यात्यालातचक्रवत्॥

अतः स्वभावत्वेन मृषा सर्व्वसंस्कारा मोषधर्म्मकत्वात् मरीचिकादिजलवदिदन्तु सत्यं न तन्मोषधर्म्मकं। तद्यथा। निर्व्वाणमेकं ततश्च विहितथोपपत्त्याऽस्याचागमात् सिद्धं सर्व्व-भावानां नैःस्वाभाव्यं शून्याः सर्व्वधर्म्माणः स्वभावयोगेनेति च प्रज्ञापारमिता अर्द्धशतिका पाठात्। अत्राह। यद्येवं मोषधर्म्मकत्वेन सर्व्वसंस्काराणां मृषात्वं प्रतिपादितं भवता। न त्वेवं सति न सन्ति सर्व्वे भावा इति॥ सर्व्वपदार्थापवादिनी मिथ्यादृष्टिरेव स्यादुच्यते। सत्यं मोषधर्म्मकाः सर्व्वसंस्काराः येऽद्यापि भवन्तं मुष्णन्ति। ननु च भोः तन्मृषामोषधर्म्मः स्याद्यदि किन्तत्र मुष्यते। यदास्माभिस्तन्मृषा मोषधर्म्मकमित्युक्तं तदा किन्तत्र मुष्यते किन्त-त्राभावी भवति॥ कश्चिद्यदि पदार्थो भविष्यति तस्यापवादादभावदर्शनात् मिथ्यादृष्टिः। यदा तु पदार्थमेव कञ्चिन्न पश्यामस्तदा किन्तत्र मुष्यते। नैव किञ्चिदभावी भवतीति। अयुक्तोऽयमुपालम्भो भवतः। अत्राह। यद्यभावदर्शनमपि न प्रतिपाद्यते। किम्पुनरने-नागमेन प्रतिपाद्य मित्युच्यते। एतदुक्तं भगवता शून्यतापरिदीपकं यदेतदुक्तं भगवता तन्न भावो नाम भावपरिदीपकं किन्तर्हि शून्यतापरिदीपकं स्वभावानुत्पादपरिदीपकमित्यर्थः। यथोक्तमनवतप्तहृदापसंक्रमणसूत्रे॥

यः प्रत्ययैर्जायति स ह्यजातो
न तस्य उत्पादस्वभावतास्ति।
यः प्रत्ययादीन स शून्य उक्तो
यः शून्यतां जानाति सोऽप्रमत्तः॥ इति।

अत्राह नायमागतोभावस्वभावानुत्पादं परिदीपयति किन्तर्हि निस्वभावत्वं स्वभावस्या-नवस्थायित्वं विनाशित्वमिति। कुतः एतदिति चेत्।

भावानां निःस्वभावत्वमन्यथा भावदर्शनात्।

विचार्य्यमानानामन्यथात्वविपरिणामदर्शनादित्यर्थः। एतदुक्तं भवति। यदि भावान निःस्वभावो न स्यात्तदानीं नैवेषामन्यथात्वमुपलभ्यते। उपलभ्यते च परिणामः तस्मात् स्वभावानवस्थायित्वमेव सूत्रार्थ इति विज्ञेयं॥ इतश्चैतदेवं यस्मात्।

नास्वभावश्च भावोऽस्ति भावानां शून्यता यतः।

यो ह्यस्वभावो भावः स नास्ति भावानां च शून्यता नाम इष्यते। न चासति धर्म्मिणि तदाश्रितो धर्म्म उत्पद्यते। न ह्यसति बन्ध्यातनये तच्छ्यामतोपपद्यत इति। तस्मादस्त्येव भावानां स्वभाव इति।

अपि च।

कस्य स्यादन्यथाभावः स्वभावश्चेन्न विद्यते।

यदि भावानां स्वभावो न स्याद्योऽयं विपरिणामलक्षणोऽन्यथाभावः स कस्य स्यादिति। अत्रोच्यते। एवमपि परिकल्प्यमाने।

कस्य स्यादन्यथाभावः स्वभावो यदि विद्यते।

इह यो धर्म्मो यं पदार्थं न व्यभिचरति। स तस्य स्वभाव इति व्यपदिश्यते अपरप्रतिबद्धत्वोदग्नेः रौद्रं हि लोके तदव्यभिचारित्वात् स्वभाव इत्युच्यते। तदेवौष्णमस्यूपलभ्यमान परप्रत्ययसम्भूतत्वात्। कृतिमत्त्वान्न स्वभाव इति। यदाचैवमव्यभिचारिणा स्वभावेन भवितव्यं तदास्याव्यभिचारित्वादन्यथाभावः स्यादभावः न ह्यग्नेः शैत्यं प्रतिपद्यते एवं भावानां सति स्वभावाभ्युपगमेऽन्यथात्वमेव न सम्भवेत्॥ उपलभ्यते चैषामन्यथात्वमतो नास्ति स्वभावः। अपि चायमन्यथाभावो भावानां नैव सम्भवति। यद्दर्शनात् सस्वभावता स्यात्। यथा च न सम्भवति तथा च प्रतिपादयन्नाह।

तस्यैव नान्यथाभावो नाप्यन्यस्यैव युज्यते।
युवा न जीर्य्यते यस्माद्यस्माज्जीर्णो न जीर्य्यते॥

तस्यैव तावत् प्राग्वत् प्रागवस्थायां वर्त्तमानस्य भावस्यान्यथात्वं नोपपद्यते। तथा हि यूनो युवावस्थायामेव वर्त्तमानस्य नास्त्यन्यथात्वं। अथाप्यवस्थान्तरप्राप्तस्यैवान्यथात्वं परिकल्प्येत तदपि नोपपद्यते। अन्यथात्वं नाम जरायाः पर्य्यायः तद्यदि यूना नेष्यतेऽन्यस्यैव जीर्णस्य भवतीति तदापि न युज्यते यस्मान्न हि जीर्णस्य पुनर्जरसा सम्बन्धो नः प्रयोजनत्वात्॥ किं हि जीर्णस्य पुनर्जरायाः सम्बन्धः कुर्य्यात्। ता गमनान्तरेण जीर्णत्वाभावात्। जीर्णो जीर्य्यत इति न युज्यते। अथ यून एवान्यथाभावस्तदयुक्तं अप्राप्तजरावस्थस्य युवेति व्यपदेशादवस्थाद्वयस्य च परस्परविरुद्धत्वात्॥ अपि च।

तस्य चेदन्यथाभावः क्षीरमेव भवेद्दधि।

अथास्य क्षीरावस्थापरित्यागेन दध्यवस्था भवति।

अथ न क्षीरमेव दधि भवतीत्युच्यते। यदि क्षीरं दधि भवतीति नेष्यते। परस्परविरोधात्।

क्षीरादन्यस्य चार्थस्य दधिभावो भविष्यति।

किमुदकस्य दधिभावो भवतु। तस्मादसम्बद्धमेव तदन्यस्य दधिभावो भविष्यतीति तदेव मन्यथात्वासम्भवात्। कुतस्तद्दर्शनात्सस्वभावता भावानां प्रसेत्स्यतीति न युक्तमेतत्। यथोक्तमार्य्यरत्नाकरमहायानसूत्रे।

यो नपि जायति नो व्युपपद्यी
न च्यवते नपि जीर्य्यति धर्म्मः।
तं जिनु दर्शयते नरसिंह-
स्तत्र निवेशयि सत्त्वसहर्षी॥

यस्य स्वभाव न विद्यति कश्चि
नोपरतो न तु केनचि लब्धः।
नान्तरतो नपि बाहिरतो वा
लभ्यति तत्र निवेशयि नाथः॥

शान्तगती कथिता सुगतेन
नो च गती उपपद्यति काचि।
तत्र च व्यवहरसी गतिमुक्तो
मुक्त कुमो वयसी बहुसत्त्वान्॥

सर्व्वि वदामि निरात्मकधर्म्मान्
सर्व्वतु गाहतु मोचसि लोकम्।
मुक्तस्वयं गतितो गतिमुक्तो
तेनसि पारगतो न च तीर्णो॥

पारगतासि भवार्णवतीर्णः
पारगतो न च लभ्यति कश्चित्।
पारु न विद्यति नापि अपारं
पारगतोऽस्मिति देशि च वाक्यम्॥

पार न विद्यति याव च देशि
यंपि वदसि न विद्यति तंपि।
यस्य वदसि न विद्यति सोऽपि
योपि जानति सोऽपि असन्ता॥

तत्र प्रनष्टु जगं इमु सर्व्वि
वितथविकल्पनिवेशवशेन ।
शान्त विजानति येन च धर्म्मा-
स्तेहि तथागतु दृष्ट स्वयम्भूः ॥

शान्त प्रजानति धर्म्मप्रणीतान्
प्रीति स विन्दति तोषति सत्वान् ।
सो भवती जिनु जित्व च क्लेशा-
न्नाम जिनो च अरामस्थितश्च ॥

तेन विजानित बोधिजिनानां
पुष्यिय बाधयते स जगत्प्रीत्यादि ॥

यच्चोक्तमस्वभावो भावो नैवास्ति शून्यता च भावानामिष्यते ॥ तस्मादस्ति शून्यताश्रयो भावस्य भाव इति । एतदपि न युज्यत इत्याह ॥

यद्यशून्यं भवेत् केचित् स्यात् शून्यमिति किञ्चन ।
न किञ्चिदस्त्यशून्यञ्च कुतः शून्यं भविष्यति ॥

यदि शून्यता नाम काचित् स्यात्तदाश्रयो भावस्वभावः स्यात् नत्वेवं । इहहि शून्यता नामेति सर्व्वधर्म्माणां सामान्यलक्षणमित्यभ्युपगमादशून्यधर्म्माभावादशून्यतैव नास्ति यदा चाशून्याः पदार्था न सन्ति अशून्यताच नास्ति प्रतिपक्षनिरपेक्षत्वात् शून्यता खपुष्पमालावन्नास्तीत्यवसीयतां । यदा च शून्यता नास्ति तदा तदाश्रया अपि पदार्था न सन्तीति स्थित मविकलं । अत्राह ।

त्रीणि विमोक्षमुखानि शून्यतानिमित्ताप्रणिहिताख्यानि विमुक्तये विनेयेभ्यो भगवता निर्द्दिष्टानि सर्व्वतीर्थिकपारमितासाधारणानि सौगत एव प्रवचने समुपलभ्यन्ते। येषामुपदेशार्थमेव बुद्धा भगवन्तोऽशेषतीर्थ्यवादमहामोहान्धकारानुगते जगति जगदेकप्रदीपा नैरात्म्योपदेशाविच्छिन्नशिखा उत्पद्यन्ते। स भगवांस्तथागतप्रवचनव्याख्यानव्याजेनेदानीं तामेव शून्यतां प्रतिक्षेप्तुमालब्धवानित्यलम्भवता स्वर्गापवर्गमार्गसमुच्छेदकेनेति उच्यते । अहोवत भवानत्युन्मुखइवात्यन्तविपर्य्यासानिर्व्वाणपुरगामिनं शिवमृजुं परमं पन्थानमवधूय भावाभिनिवेशव्याकुलितं संसारकान्तारानुगममेव मार्गं मोक्षपुरगामित्वेन समाश्रितो निर्म्मुमुक्षुः स संसाराटवीकान्तारः सद्भिरुपालभ्य एव सन्नभिमानाभिनिवेशग्रहपरवशतया तानेवोपालभते ॥ ननु भो निरवशेषक्लेशव्याधिविचिकित्सकैर्महावैद्यराजैः ।

शून्यता सर्व्वदृष्टीनां प्रोक्ता निःसरणं जिनैः।
येषान्तु शून्यतादृष्टिस्तानसाध्यान् वभाषिरे ॥

इह सर्व्वेषामेव दृष्टिकृतानां सर्व्वग्रहाभिनिवेशानां यन्निःसरणमप्रवृत्तिः सा शून्यता न च दृष्टिकृतानां निर्वृत्तिमात्रं भावो येतु तस्यामपि शून्यतायां भावाभिनिवेशिनस्तान् प्रत्युवाच कारयमिति। कुतोऽस्मदुपदेशात् सकलकल्पनाव्यावृत्त्या मोक्षो भविष्यति। यो न किञ्चिदपि ते पश्यन् दास्यामीत्युक्तः सर्व्वं देहि भोस्तदेव मह्यं न किञ्चिन्नापश्यमिति प्रियात्मकेनोपायेन शक्यः यस्याभावं ग्राहयितुं। एवं येषां शून्यतायामपि भावाभिनिवेशः केनेदानीं स तेषां तस्यां भावाभिनिवेशो निषिध्यतामिति। अतो महाभैषज्येऽपि दोषसङ्कल्पा त्परमचिकित्सकैः महावैद्यैस्तथागतैः प्रख्याता एव ते। यथोक्तं भगवतार्य्यरत्नकूटसूत्रे।

यन्न शून्यतया धर्म्माः शून्यान् करोति। अपि तु धर्म्मा एव शून्याः यया निमित्तेन धर्म्माननिमित्तान् करोति। अपि तु धर्म्मा एवानिमित्ताः। यन्ना-प्रणिहितेन धर्म्मानप्रणिहितान् करोति धर्म्मा एवाप्रणिहिताः। येवं प्रत्यवेक्षा इयमुच्यते काश्यप मध्यमा प्रतिबध्यमाना भूतप्रत्यपेक्षा। येहि काश्यप शून्य-तोपालम्भेन शून्यतां प्रतिसरन्ति तानहं नष्टप्रनष्टानिति वदामि। इति प्रवच-नात् ॥ वरं खलु काश्यप सुमेरुमात्रा पुद्गलदृष्टिराश्रिता नत्वेवाभावाभिनिवे-शिकस्य शून्यतादृष्टिः। तत्कस्य हेतोः सर्व्वदृष्टिकृतानां हि काश्यप शून्यतानिः-सरणं। यस्य खलु पुनः शून्यतैव दृष्टिस्तमहमचिकित्स्यमिति वदामि। तद्यथा काश्यप ग्लानः पुरुषः स्यात्तस्मै वैद्यो भैषज्यं दद्यात् तस्य तद्भैषज्यं सर्व्वदोषा-नुच्चार्य्य स्वयं कोष्ठगतं न निःसरेत्। तत् किं मन्यसे काश्यप अपि तु स पुरुष-स्ततो ग्लान्युन्मुक्तो भवेत्। नोहीदं भगवन् गाढ़तरं तस्य पुरुषस्य ग्लानं भवेत् यस्य तद्भैषज्यं सर्व्वदोषानुच्चार्य्य कोष्ठगतं न निःसरेत्। भगवानाह। एवमेव काश्यप सर्व्वदृष्टिकृतानां शून्यतानिःसरणं। यस्य खलु पुनः शून्यतैव दृष्टिः तमहमचिकित्स्यमिति वदामि ॥

इत्याचार्य्यचन्द्रकीर्त्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ संस्कारपरीक्षा नाम त्रयोदशमं प्रकरणम् ॥

---

अत्राह। अस्त्येव भावस्वभावस्तत्संसर्गोपदेशात्। इह यन्नास्ति न तस्य संसर्गस्तद्यथा। वन्ध्यासुतदुहित्रोः। अस्ति च संस्काराणां संसर्गोपदेशः। चक्षुः प्रतीत्य रूपाणि चोत्पद्यते चक्षुर्विज्ञानं त्रयाणां सन्निपातः स्पर्शः स्पर्शसहजा वेदनेति विस्तरः। तथा संज्ञा च वेदना च संसृष्टावेतौ धर्म्मौ न संसृष्टाविति तदेवं संसर्गोपदेशाद्विद्यत एव भावस्वभाव इत्युच्यते। स्यादेतदेवं यदि संसर्ग एव भगवतो भवेत्। यस्मात्।

द्रष्टव्यं दर्शनं द्रष्टा त्रीण्येतानि द्विशो द्विशः।
सर्व्वशश्च न संसर्गमन्योन्येन व्रजन्त्युत॥

तत्र द्रष्टव्यं रूपं दर्शनं चक्षुः द्रष्टा विज्ञानं एषां त्रयाणां द्विशो द्विशः संसर्गो नास्ति चक्षुषा रूपस्य च चक्षुषो विज्ञानस्य च विज्ञानस्य रूपस्य च संसर्गो नास्तीत्येवं द्विशोद्विशः संसर्गो न भवति। सर्व्वशोऽपि त्रयाणामप्येषां युगपच्च संसर्गो नास्ति यथा च द्रष्टव्यदर्शन-द्रष्टॄणां द्विशोद्विशः सर्व्वशश्च संसर्गाभावः।

एवं रागश्च रक्तश्च रञ्जनीयश्च दृश्यताम्।

रागस्य रक्तस्य च संसर्गो नास्ति। रागस्य रक्तस्य रञ्जनीयस्य च त्रयाणामपि युगपत्संसर्गो नास्ति यथा चैषामेवं त्रैधेन शेषाः क्लेशाश्च शेषाण्यायतनानि चान्योन्येन संसर्गं न व्रजन्ति। त्रयः प्रकारास्त्रिधा त्रिधाभाव स्त्रैधं तेन त्रैधेन शेषाः क्लेशाः द्वेषमोहादयस्तत्र ते द्वेषद्विष्ट-द्वेषणीयादिना त्रैधेन श्रोत्र श्रोतृ श्रोतव्यादिना च। कस्मात् पुनरेषां संसर्गो नास्तीत्याह॥

अन्येनान्यस्य संसर्गस्तच्चान्यत्वं न विद्यते।
द्रष्टव्यप्रभृतीनां यन्न संसर्गं व्रजन्त्यतः॥

यदित्ययं यस्मादर्थे। यदि द्रष्टव्यादीनां परस्परमन्यत्वं स्यात् तदा क्षीरोदकयोरिवान्ये-नान्यस्य संसर्गः स्यात्। तच्चान्यत्वं यस्मादेषां द्रष्टव्यप्रभृतीनां न सम्भवत्यनेनैत।संसर्गं व्रजन्ति। अपि च,—

न च केवलमन्यत्वं द्रष्टव्यादेर्न विद्यते।
कस्यचित् केनचित् सार्द्धं नान्यत्वमुपपद्यते॥

न च केवलं कार्य्यकारणभावस्थितानां द्रष्टव्यादीनामन्यत्वं सम्भवति। घटपटादीनामपि पदार्थानां सर्व्वेषां नैव सम्भतीत्यवसीयतां। यथा चैषां द्रष्टव्यप्रभृतीनां परस्परतोऽन्यत्वमसत्तथा प्रतिपादयन्नाह।

अन्यदन्यत् प्रतीत्यान्यन्नान्यदन्यदृतोऽन्यतः।
यत्प्रतीत्य च यत्तस्मात्तदन्यन्नोपपद्यते॥

इह यदेतत् पटाख्यं वस्तु घटादन्यदिति व्यपदिश्यते । सदेतदन्यत् प्रतीत्यान्यद्भवति । अन्यत्तस्तु ह्येभ्योऽन्यतो विनान्यदन्यन्न भवति । यच्च घटाख्यं वस्तु अन्यत् पटाख्यं वस्तु प्रतीत्यान्यद्भवति । तस्मात् पटाख्याद्वस्तुनस्तद्घटाख्यं वस्तु नान्यद्भवतीत्यवसीयतां यस्मात् यत्प्रतीत्य यद्भवति तस्मात्तदन्यन्न भवति सापेक्षत्वाद्बीजाङ्कुरवत् ह्रस्वदीर्घवच्चेति । तथाच वक्ष्यति ।

प्रतीत्य यद्यद्भवति न हि तावत्तदेव तत् ।
न चान्यदपि तत्तस्मान्नोच्छिन्नं नापि शाश्वतम् ॥ इति ।

अत्राह यदि घटादन्यः पटः स्यात्तस्य पृथग्भूतं पटमपेक्ष्यान्यो घटः स्यात्तदा को दोष इति । उच्यते ।

यदन्यदन्यदन्यस्मादन्यस्मादप्यृते भवेत् ।
तदन्यदन्यदन्यस्मादृते नास्ति च नास्त्यतः ॥

एकोऽत्रान्यशब्द उपदर्शने । अपरश्चार्थान्तरपरामर्शी अन्यश्च प्रसिद्धोच्चारणमिति अन्यशब्दत्रयोपादानं । यदि ह्येतत् घटाख्यं वस्तु पटादन्यस्मात्तद्घटाख्यं वस्तु अन्यस्मादपि घटाख्याद्दृतेऽन्यद्भवेत् तदा च पटनिरपेक्षस्यैव एककस्य घटस्यान्यत्वं भवेत् । यद्धि यस्मादन्यत्तत्तेन विनापि सिद्ध्यति । तद्यथा । स एव घटो न स्वरूपनिष्पत्तावन्यं घटमपेक्षते । एवमन्यत्वमपि घटस्यान्यस्माद्घटाद्भवेत् तदानीं घटनिरपेक्षस्य पटस्यापरत्वं स्यात् । न त्वेककस्य निरपेक्षस्य घटस्यान्यत्वं दृष्टं तस्मादन्यद्भवतीति ब्रुवता यदपेक्ष्य यदन्यत्ततस्तदन्यन्न भवतीति स्फुटमभ्युपेतं भवति । अत्राह । यदि खल्वन्यत्वमेवं कुतश्चित् कस्य चिन्नास्ति । नन्विदमपि तदा न सम्भवति वस्तु यस्मादन्यत् प्रतीत्यान्यदन्यद्भवतीति । तस्मादेव तदन्यदन्यन्न भवतीत्युच्यते यत एव हि परस्परापेक्षिकी भावानामन्यत्वसिद्धि रतएवान्यदित्युच्यते लौकिके व्यवहारे स्थित्वा । वस्तुतस्तु परीक्ष्यमाणमन्यत्वं न सम्भवतीति ब्रूमः । यदि तर्ह्येवमपि विद्यमानेऽप्यन्यत्वे लोकसम्वृत्या पटादन्यो घट इति व्यपदिश्यते । अथ कस्माद्बीजाङ्कुरयोरप्येवमन्यत्वं न व्यपदिश्यते । उच्यते । नैव हि लोको घटपटयोरिव बीजाङ्कुरयोरन्यत्वं प्रतिपद्यते । घटपटयोरिव जन्यजनकत्वाभावप्रसङ्गात् । यौगपद्याभावप्रसङ्गात् । अपि च यस्माद्बीजमात्रमुप्त्वा बीजकार्य्यं वृक्षमुपदर्शयति पुमान् । लोकोऽयं वृक्षो मयोप्त इति तस्माल्लोकेऽपि कार्य्यकारणभूतानां नास्त्येव परत्वमिति व्यवस्थाप्यते ॥ अत्राह । यदि पदार्थान्तरं पदार्थान्तरसापेक्षापरबुद्धिः स्यात् स्यादेष दोषः । तस्मात्तदन्यन्न भवतीति न त्वेवं ब्रूमः । किन्तर्हि इहान्यत्वं नाम सामान्यविशेषोऽस्ति । तद्यत्र समवेतं स पदार्थान्तरनिरपेक्षयापि पर इत्युच्यते । तस्मादुक्तदोषानवसरोऽस्मिन् पक्षे इत्युच्यते । स्यादेतदेवं यद्यन्यदेव स्यात् न त्वस्ति । इहेदमन्यत्वं कल्प्यमानमन्यस्मिन् वा कल्प्येतानन्यस्मिन् वा उभयथा च नोपपद्यते इति प्रतिपादयन्नाह ।

नान्यस्मिन् विद्यतेऽन्यत्वमनन्यस्मिन् न विद्यते।

तत्रान्यस्मिन्नन्यत्वमस्तीति कल्प्यते किन्त्विदानीमन्यत्वमपि परिकल्प्येतान्यव्यपदेशसिद्ध्यर्थं हि भगवतोऽन्यत्वं परिकल्प्यते स चान्यव्यपदेशे विनाप्यन्यत्वेन सिद्ध एव। तस्माल्लब्धान्यव्यपदेश एव पदार्थ अन्यस्मिन्नन्यत्वं कल्प्यत इत्येवं तावदन्यस्मिन्नन्यत्वं न सम्भवति। इदानीमनन्यस्मिन्नपि अन्यत्वं नास्ति। यस्मादनन्य उच्यते एकस्तत्र चान्यत्वविरुद्धमेकत्वमस्तीति। अतो विरोधादनन्यस्मिन्नप्यन्यत्वं न सम्भवति। यच्चेदानीं नान्यस्मिन्नानन्यस्मिन् विद्यते। तद्व्यतिरिक्तस्य पदार्थान्तरस्यासम्भवादेतद्व्यतिरिक्तेऽपि पदार्थे न सम्भवति। तन्नैवास्ति अविद्यमाने चान्यत्वे यदा चैवमन्यत्वमेव नास्ति तदान्यत्वसमवायनिबन्धनोऽन्यबुद्धिर्ध्वनिप्रवृत्तिहेतुरन्योऽपि पदार्थो नास्तीति सिद्धं। अत्राह यद्यप्यन्यत्वं नास्ति तथाप्यन्यस्तावदस्ति न चासत्यन्यत्वेऽन्यो भवितुमर्हति। अतोऽन्यत्वं भविष्यतीत्युच्यते।

अविद्यमाने चान्यत्वे नास्त्यन्यद्वा तदेव च।

यदान्यत्वमेव नास्तीति प्राक् प्रतिपादितं तदा कुतोऽसत्यन्यत्वेऽन्यद्वा तदेव वा भविष्यति। तदेवेति अनन्यत्वमित्यर्थः तस्मान्नास्त्यन्यद्वा तदेव वा। अत्राह। विद्यन्त एव दर्शनादयः संसर्गसद्भावात्। इह दर्शनादीनां यद्यप्यन्यत्वं नास्तीति प्रतिपादितन्तथापि त्रयाणां सन्निपातसङ्गतिस्पर्श इति संसर्गोऽस्ति ततश्च संसर्गसद्भावाद्विद्यन्त एव दर्शनादय इत्युच्यते। स्युरेवं यदि तेषां संसर्ग एव स्यान्न त्वस्ति यथा च नास्ति तथा प्रतिपादयन्नाह।

न तेन तस्य संसर्गो नान्येनान्यस्य युज्यते।

इह यदि दर्शनादीनां संसर्गः स्यात् स एकत्वेन वा परिकल्प्येतान्यत्वेन वा। तत्रैकत्वे नास्ति संसर्गो नह्येककं क्षीरमुदकनिरपेक्षमुदकेन संसृज्यते इत्युच्यते। पृथक्त्वेऽपि परसंसर्गो नास्ति। नह्युदकात् पृथगवस्थितं क्षीरमुदकेन संसृज्यत इति कथ्यते। एवं दर्शनादीनां यद्येकत्वे सति संसर्गः परिकल्प्यते सोऽनुपपन्नः। एककस्यापि चक्षुषः संसृष्टिप्रसंगात्। अथ पृथक्त्वमेवमप्यनुपपन्न एककस्यापि चक्षुषो रूपादिभ्यः पृथग्भूतस्य संसृष्टिप्रसङ्गात्। असति संसर्गे नास्ति दर्शनादिकमिति सिद्धं। अत्राह॥ यद्यपि संसर्गो नास्ति तथापि संसृज्यमानं संसृष्टं संस्रष्टा चास्ति तदप्रतिषेधात्। न च संसर्गमन्तरेण संसृज्यमानं संसृष्टं संस्रष्टा च सम्भवति। तस्मात्। संसर्गोऽपि भविष्यतीत्युच्यते। एतदपि न युक्तं। यस्माद्यदा संसर्ग एव नास्ति प्रतिपादितमसति च संसर्गे तदा कुतः संसृज्यमानादिकं। तत्र वर्त्तमानसंसर्गक्रियासाधनकर्मभूतं संसृज्यमानं संसृष्टं निष्पन्नसंसर्गक्रियः संस्रष्टा कर्त्ता क्रियानिष्पत्तौ स्वातन्त्र्येणावस्थितः। तदत्र संसर्गाभावादेव संसृज्यमानादिकमपश्यंस्तत्प्रतिषेधं निगमयन्नाह। संसृज्यमानं संसृष्टं संस्रष्टा न च विद्यत इति। यथोक्तं भगवता।

सर्व्वसंयोग तु पश्यति चक्षु-

स्तच्च न पश्यति प्रत्ययहीनम्।

चक्षुः प्रपश्यति नैव कदाचित्
तेन संयोगवियोगविकल्पः ॥

आलोकसमाश्रित पश्यति चक्षू
रूप मनोरम चित्रविशिष्टम् ।
येन च योग समाश्रित चक्षु-
स्तेन न पश्यति चक्षु कदाचित् ॥

ये परिनिर्वृत लौकिकशूरा
ये हि स्वभावत जातिनिधर्माः ।
कामगुणेर्हि चरन्ति असङ्गाः
संसर्ग विवर्जिय सत्त्व विनेन्ति ॥

न च सत्त्व न जीविह कश्चित्
सत्त्वहितं च करोन्ति जिनेन्द्राः ।
ईमु दृष्टु नु ते च महान्त सत्त्वेन
अस्ति करोति च अर्थ सगुण ॥

सङ्गु न विद्यति अत्र कदाचि-
द्देवमसंगतयो धिकमुक्ति ।
तस्य न विद्यति वेदन लोके

तथा

भावितु मार्गप्रवर्त्तितु ज्ञान
शून्यकधर्म्म निरात्मक सर्व्वि ।
येन विभावित भोन्ति मि धर्म्मा-
स्तस्य भवेत् प्रतिभानमनन्तमित्यादि ॥

इत्याचार्य्यचन्द्रकीर्त्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
संसर्गपरीक्षा नाम चतुर्दशमं प्रकरणम् ।

अत्राह । विद्यत एव भावानां स्वभावस्तन्निष्पादकहेतुप्रत्ययोपादानात् ॥ इह यन्नास्ति न तस्य निष्पादकहेतुप्रत्ययोपादानमस्ति यथा खपुष्पस्य । उपादीयन्ते च बीजाविद्यादयो हेतुप्रत्ययाः अङ्कुरसंस्कारादीनां निष्पादका इत्यतो विद्यते एव भावस्वभाव इत्युच्यते ॥ यदि भावानां संस्कारांकुरादीनां स्वभावोऽस्ति किमिदानीं विद्यमानानां हेतुप्रत्ययैः प्रयोजनं । यदा वर्त्तमानीभूतानां संस्काराङ्कुरादीनां भूयोनिष्पत्तयो नाविद्याबीजादीनामुपादानं क्रियते । एव मन्यदपि तदुत्पत्तये न कर्त्तव्यं स्यात्तत्स्वभावस्य विद्यमानत्वादिति प्रतिपादयन्नाह ।

न सम्भवः स्वभावस्य युक्तः प्रत्ययहेतुभिः ।

अथ स्यान्नैवोत्पादपूर्व्वं कस्यचिद्भावस्य भावोऽस्ति यतोऽस्य विद्यमानत्वादुत्पत्तिवैयर्थ्यं स्यात् किन्तर्हि उत्पादात् पूर्व्वमविद्यमानस्यैव स्वभावस्य हेतुप्रत्ययान् प्रतीत्य पश्चादुत्पादो भवतीति । एवमपीष्यमाणे हेतुप्रत्ययसम्भूतः स्वभावः कृतको भवेत् । अथ स्यादिष्यत एव हेतुप्रत्ययसम्भूतत्वात् स्वभावस्य कृतकत्वं कस्मात् कृतकस्यैव स्वभावस्याभ्युपगमात् । कृतकत्वप्रसङ्गो नास्माकं बाधक इति । एतदपि न युक्तमित्याह ।

स्वभावः कृतको नाम भविष्यति पुनः कथम् ।

कृतकश्च स्वभावश्चेति । परस्परविरुद्धत्वादसङ्गतार्थमेव तत् ॥

इति स्वोभावः स्वभाव इति लोकव्यवहारे व्यवस्थिते वयमिदानीं ब्रूमो यदेतदौष्ण्यमग्नेः स्वभाव इति व्युत्पत्तये कृतकः पदार्थः स लोकेनैव स्वभाव इति व्यपदिश्यते तद्यथा अपानोत्थं धातु यश्च प्रयत्ननिष्पादितः कर्केतनादीनां पद्मरागादिभावश्च यत् स कृतकः स स्वभावस्तद्यथा । अग्नेरौष्ण्यं जातानां पद्मरागादीनां पद्मरागादिस्वभावश्च स हि तेषां पदार्थान्तरसम्पर्कजनितत्वात् स्वभाव इत्युच्यते । तदेवमकृतकः स्वभाव इति लोकव्यवहारे व्यवस्थिते वयमिदानीं ब्रूमो यदेतदौष्ण्यं तदग्नेः स्वभावो न भवतीति गृह्यतां कृतकत्वात् । इह मणीन्धनादिसमागमादरणिनिघर्षणादेश्चाग्नेः हेतुप्रत्ययसापेक्षतैवोपलभ्यते न चाग्निव्यतिरिक्तमौष्ण्यं सम्भवति । तस्मादौष्ण्यमपि हेतुप्रत्ययजनितं ततश्च कृतकं कृतकत्वाच्चापमौष्ण्यवत् स्वभावो न भवतीति स्फुटमवसीयते । ननु च गोपालाङ्गनाजनप्रसिद्धमेतदग्नेरौष्ण्यं स्वभाव इति । किं खल्वस्माभिरुक्तं न प्रसिद्धमिति । एतत्तु वयं ब्रूमो नायं स्वभावो भवितुमर्हति स्वभावलक्षणवियुक्तत्वादविद्याविपर्य्यासानुगमात्तु लोको निःस्वभावमेव भावजातं सस्वभावत्वेन प्रतिपन्नः यथाहि तैमिरिकास्तिमिरप्रत्ययादसन्तमेव केशादिस्वभावं सस्वभावत्वेनाभिनिविष्टाः । एवमविद्यातिमिरोपहतमतिनयनतया बालाः निःस्वभावं भावजातं सस्वभावत्वेनाभिनिविष्टाः । यथाभिनिवेशलक्षणमाचक्षते । अग्नेरौष्ण्यं स्वलक्षणं ततोऽन्यत्रानुपलम्भात् । असाधारणत्वेन स्वमेव लक्षणमिति कृत्वा बालजनप्रसिद्ध्यैव च भगवता तदेवैषां संवृत्तं स्वरूपमभिधर्म्मेव्यवस्थापितं साधारणस्त्वनित्यत्वादिकं समान्यलक्षणमिति

चोक्तं । यदा तु विगताविद्यातिमिरावदातप्रज्ञा चक्षुषां दर्शनमपेक्षते तदा वितिमिरैस्तैमिरिकोपलब्धकेशादर्शनवद्बालजनमिति परिकल्पितानुपलब्धस्वभावैरार्य्यैरुच्यते परहितव्यापारैर्नायं स्वभावो भावानामिति । यथोक्तं आर्य्यलङ्कावतारसूत्रे ।

केशोन्तकं यथा मिथ्या गृह्यते तैमिरिकैर्जनैः ।
तथा भावविकल्पोऽयं मिथ्या बालैर्विकल्प्यते ॥

न स्वभावो न विज्ञप्तिर्नैच वस्तु न वा लयः ।
बालैर्विकल्पिता ह्येते शवभूतैः कुतार्किकैः ॥ इति ।

तथा स्वभावानुत्पत्तिं सन्धाय महामते मया ।
सर्व्वधर्म्मा अनुत्पन्ना इत्युक्ता इति विस्तरः ॥

अत्राह यदि खल्विदमग्नादेरौष्ण्यादिकं हेतुप्रत्ययं सम्भूतत्वे कृतकत्वान्निःस्वभावमित्युच्यते । किमिदानीं तत्स्वभावस्य लक्षणं कस्मासौ स्वभाव इति वक्तव्यं । उच्यते । अकृत्रिमस्वभावो हि निरपेक्षः परत्र च । इह स्वभाव इति यस्य पदार्थस्य यदात्मीयं रूपं तत्तस्य स्वभाव इति व्यपदिश्यते । किञ्च कस्यात्मीयं यद्यस्याकृत्रिमं यत्तु कृत्रिमं न तत्तस्यात्मीयं तद्यथा यदौष्ण्यं यच्च यस्यायत्तं तदपि तदात्मीयं तद्यथा स्वभृत्याः स्वानि धनानि । यत्तु यस्य परायत्तं न तत्तस्यात्मीयं । तद्यथा तावत्कालिकायाचितकमस्वतन्त्रं यतश्चैवं कृत्रिमस्य परसापेक्षस्य स्वभावत्वं नेष्टं अतएवौष्ण्यमग्नेः हेतुप्रत्ययप्रतिबद्धत्वात् सर्व्वमभूत्वा पश्चादुत्पादेन कृतकत्वाच्च न स्वभाव इति युज्यते । यतश्चैतदेवमतो यदेवाग्नेः कालत्रयेऽप्यव्यभिचारिनि यद्रूपमकृत्रिमं पूर्व्वं भूत्वा पश्चात् यन्न भवति यच्च हेतुप्रत्ययसापेक्षं न भवत्युपामोद्यवत्पारावारवत् दीर्घह्रस्ववद्वा तत्स्वभाव इति व्यपदिश्यते । किं खलु तदित्थं स्वरूपमस्ति न चापि नास्ति स्वरूपतः यद्यप्येवं तथापि श्रोतृणां उत्त्रासपरिवर्ज्जनार्थं सम्वृत्या समारोप्य तदस्तीति ब्रूमः । यथोक्तं भगवता ।

अनक्षरस्य धर्म्मस्य श्रुतिः का देशना च का ।
श्रूयते यस्य ते चापि समारोपादनक्षर इति ॥

इहापि च वक्ष्यति ।

शून्यमिति न वक्तव्यमशून्यमिति वा भवेत् ।
उभयं नोभयं चेति प्रज्ञप्त्यर्थं तु कथ्यते ॥ इति ।

यदि खलु तदध्यानोपेक्षा भवद्भिरस्तीत्युच्यते कीदृशं तत् । या सा धर्म्माणां धर्म्मता न सैव तत्स्वरूपं । अथ केयं धर्म्माणां धर्म्मता धर्म्माणां स्वभावः कोऽयं स्वभावः प्रकृतिः । काचेय

ः येयं शून्यता केयं शून्यता नैःस्वाभाव्यं। किमिदं नैःस्वाभाव्यं। तथता। केयं तथता।
वो विकारित्वं सदैव स्थायिता सर्व्वदा अनुत्पाद एव हि वस्त्वादीनां परनिरपेक्षत्वा-
त्वात् स्वभाव इत्युच्यते। एतदुक्तं भवति। अविद्यातिमिरप्रभावोपलब्धं भावजातं
विगताविद्यातिमिराणामाचार्य्याणां अदर्शनयोगेन विषयत्वमुपयाति तदेव
ं स्वभाव इति व्यवस्थाप्यते। तस्य चेदं लक्षणं। अकृत्रिमः स्वभावो हि निर-
चेति व्यवस्थापयाम्बभूवुराचार्य्या इति विज्ञेयं। स चैष भावानामनुत्पादात्मकः
भावो किञ्चित्त्वेनाभावमात्रत्वादस्वभाव एवेति कृत्वा नास्ति भावस्वभाव इति विज्ञेयं।
ोक्तं भगवता।
भावानभावानिति यः प्रजानति स सर्व्वभावेषु न जातु सज्जते। स आनिमित्तं स्पृशते
समाधिमिति। अत्राह। यद्यपि स्वभावो नास्ति भावानान्तथापि व्यवहारस्तावदस्ति तद-
प्रतिषेधात्। सति च परभावे स्वभावोऽपि भविष्यति। स्वभावमन्तरेण परभावाप्रसिद्धे-
रिति। उच्यते।

कुतः स्वभावस्याभावे परभावो भविष्यति।
स्वभावः परभावस्य भाव एव हि कथ्यते॥

इह स्वभाव एव हि लोके कश्चित् स्वभावान्तरापेक्षया पर इति व्यपदिश्यते। यदि
नाग्नेरौष्ण्यं स्वभावः स्यात् द्रवस्वभावसलिलसापेक्षया परभाव इति व्यपदिश्येत। यदा तु
मुमुक्षुभिः विचार्य्यमाणस्य कस्यचित् स्वभाव एव नास्ति तदा कुतः परत्वं स्यात्। परभावाच्च
स्वभावोऽपि नास्तीति सिद्धं। अत्राह यद्यपि स्वभावपरभावौ न स्तः तथापि भावस्ताव-
दस्त्यप्रतिषेधात्। स च भावो भवेत् स्वभावो वा भवेत् परभावो वा। तस्मात् स्वभावपर-
भावावपि भविष्यत इति॥ उच्यते।

स्वभावपरभावाभ्यामृते भावः कुतः पुनः।
स्वभावः परभावस्य सति भाव हि सिध्यति॥

भावो हि परिकल्प्यमानः स्वभावो वा भवेत् परभावो वा। तौ च पूर्व्वोक्तविधिना न स्त
इति। तयोरभावाद्भावोऽपि नास्तीत्यवसीयतां। अत्राह। यद्यपि भवतो भावः प्रतिसिद्ध-
स्तथाप्यभावोऽस्ति प्रतिषेधाभावात्। ततश्च भावोऽपि भविष्यति प्रतिसिद्धस्तद्भावादभाव-
वदित्युच्यते स्याद्भावो यद्यभाव एव स्यान्न त्वस्तीत्याह।

भावस्य चेदप्रसिद्धिरभावो नैव सिध्यति।
भावस्य ह्यन्यथाभावमभावं ब्रुवते जनाः॥

इह हि यदि भावो नाम कश्चिदभविष्यत् स्यात्तस्यान्यथाभावादभावः। घटादयो विवर्त्त-
मानावस्थायाः प्रच्युताः सन्तोऽन्यथाभावमापन्ना अभावध्वनिवाच्या भवन्ति। लोके यदा
त्वमी घटादयो भावरूपत्वेन वा सिद्धास्तदा कुतोऽविद्यमानस्वभावानामन्यथात्वमिति।

अतोऽभावोऽपि नास्ति। तदेवं सर्व्वथा स्वभावपरभावभावाभावेष्वनुपपद्यमानेष्वविद्यातिमिरोपहतमतिनयनतया विपरीतं ।

स्वभावं परभावञ्च भावञ्चाभावमेव च ।
ये पश्यन्ति न पश्यन्ते तत्वं हि बुद्धशासने ॥

यदि तथागतप्रवचनाविपरीतव्याख्यानाभिमानितया पृथिव्याः काठिण्यं स्वभावो वेदनाया विषयानुभवः। विज्ञानस्य विषयं प्रति विज्ञप्तिः स्वभाव इत्येवं स्वभावं भावानां वर्णयन्ति। अन्यद्विज्ञानमन्यत्र परमन्यैव वेदनेत्येवं परभावं वर्णयन्ति। वर्त्तमानावस्थयाञ्च विज्ञानादिकं भावत्वेन ये वर्णयन्ति विज्ञानादिकमेव चातीततामापन्नमभाव इति न ते परमगम्भीरस्य प्रतीत्यसमुत्पादस्य तत्वं वर्णयन्ति। यस्माद्यथोदितोपपत्तिविरुद्धं स्वभावपरभावादीना मस्तित्वं नचोपपत्तिविरुद्धं पदार्थं स्वभावमेव वर्णयन्ति तथागताः स्वयमविपरीताशेषपदार्थतत्वसम्बोधात्। अतएव बुद्धानामेव भगवतां वचनं प्रमाणमित्युपवर्णयन्ति विचक्षणाः। सोपपत्तिकत्वेनाविसम्वादकत्वात्। अतएव च। अर्हद्भ्यः प्रहीणाशेषदोषेभ्यः आगतत्वात् आगमयतीति समन्तात्तत्वं गमयतीति वाभिमुख्यागमनाद्वा तदाश्रयेण लोकस्य निर्व्वाणागमसंबुद्धगमनस्यैवागमत्वं व्यवस्थाप्यते। तदन्यमतानांतूपपत्तिवियुक्तत्वान्न प्रामाण्यमागमाभासत्वञ्च व्यवस्थाप्यते। यस्माच्चैतानि स्वभावपरभावभावाभावदर्शनानि युक्तिविधुरत्वान्न तत्वानि। अतएव मुमुक्षूणां विनेयजनानां कात्यायनाववादवदस्ति नास्तीति चोभयं प्रतिषिद्धं भगवता भावाभावविभाविना। उक्तं हि भगवता आर्य्यकात्यायनाववादसूत्रे।

यद्भूयसा कात्यायनायं लोकोऽस्ति तञ्चाभिनिविष्टो नास्ति तं च तेन न परिमुच्यते। जातिजराव्याधिमरण शोक परिदेव दुःख दौर्मनस्योपायासेभ्यो न परिमुच्यते। पञ्चगतिकात् संसारचारकागारबन्धनान्न परिमुच्यते। मातृमरणसन्तापदुःखान्न परिमुच्यते। पितृमरणसन्तापदुःखादिति विस्तरः।

इदञ्च सूत्रं सर्व्वनिकायेषु पठ्यते। तदस्मादागमाद्यथोपवर्णितायाश्चोपपत्तेर्नार्हति प्राज्ञः स्वभावपरभावभावाभावदर्शनं तथागतवचनात्यन्तविरुद्धमाख्यातु भगवता प्रतिषिद्धत्वात्। किं विशिष्टेन भगवता भावाभावविभाविना। भावाभावौ विभावयितुं शीलमस्येति भावाभावविभावी। यथावस्थितभावाभावविपरीतस्वभावपरिज्ञानात् भावाभावविभावीति भगवानेवोच्यते। तेन भगवता भावाभावविभाविना यस्मादस्तित्वञ्च नास्तित्वञ्चोभयमेतत् प्रतिषिद्धं. तस्मान्न युक्तं भावाभावदर्शनत्वमित्याख्यातु। तथास्तीति काश्यप अयमेकोऽन्तो नास्तीति काश्यप अयमेकान्तः। यदेतद्द्वयोर्द्वयोरन्तरयोर्मध्यं तदरूप्यमनिदर्शनमप्रतिष्ठमनाभासमनिकेतमविज्ञप्तिकमिदमुच्यते काश्यप मध्यमा प्रतिपत्। मध्यमा प्रतिधर्म्माणां भूतप्रत्यवेक्षेति। तथा, –

अस्तीति नास्तीति उभेऽपि अन्ता
शुद्धी अशुद्धीति इमेऽपि अन्ता ।
तस्मादुभे अन्त विवर्ज्जयित्वा
मध्येऽपि स्थानं न करोति पण्डितः ॥

अस्तीति नास्तीति विवाद एषः
शुद्धि अशुद्धीति अयं विवादः ।
विवादप्राप्त्या न दुःखं प्रशाम्यति
अविवादप्राप्त्या न दुःखं निरुध्यते ॥ इति ।

अत्राह यदि पुनरेवमग्न्यादीनां स्वभाव एवास्तित्वं स्यात् को दोषः स्यात् । उक्तदोषः हेतुप्रत्ययसम्भूतः स्वभावः कृतको भवेदित्यादिना । अपिच यद्ययमेषामग्न्यादीनां स्वभावः स्यात्तस्य विद्यमानस्य सतो न स्यात् पुनरन्यथात्वमिति प्रतिपादयन्नाह ।

यद्यस्तित्वं प्रकृत्या स्यान्न भवेदस्य नास्तिता ।

यद्यग्न्यादेर्भावस्य प्रकृत्या स्वभावतोऽस्तित्वं तदास्य स्वभावस्य प्रकृत्या विद्यमानस्य पुनरस्यान्यथात्वं न स्यात् । यस्मात्, –

✓प्रकृतेरन्यथाभावो न हि जातूपपद्यते ।

यद्येषामग्न्यादीनामियमेव प्रकृतिः स्यात् स्वभावः स्यात् तदा प्रकृतेरविकारित्वान्न कदाचित् पुनरन्यथाभाव उपपद्यते । नह्याकाशस्यानावरणत्वं कदाचिदप्यन्यथात्वं प्रतिपद्यते । एवमग्न्यादीनां प्रकृत्या विद्यमानानां पुनरन्यथात्वं नस्यात् उपलभ्यते च भावो नेषामन्यथात्वं प्रवन्धोपरमलक्षणं विनाशः । तस्माद्विपरिणामधर्म्मित्वादपादोद्भावनायामेषां स्वभाव इति प्रतीयतां । अत्राह । यदि प्रकृत्या विद्यमानस्यान्यथात्वस्य चोपलभ्यमानत्वात् प्रकृतिरेषां भावानां नास्त्युच्यते । ननु चैवमपि, –

प्रकृतौ कस्य वा सत्यामन्यथात्वं भविष्यति ।

कस्येदानीं प्रकृत्या स्वरूपेणाविद्यमानस्य खपुष्पस्य वान्यथात्वं भविष्यति । तस्माद्विद्यमानप्रकृतिकस्यान्यथात्वानुपलम्भादन्यथात्वस्य च दर्शनादस्त्येव स्वभाव इत्युच्यते । यदि तावत् केन मतेन प्रकृत्या स्वभावेन संविद्यमानस्यान्यथाभावादन्यथात्वस्य च दर्शनात् प्रकृतिरित्युच्यते । एवमपि, –

प्रकृतौ कस्य वासत्यामन्यथात्वं भविष्यति ।

कस्येदानीं प्रकृत्या स्वभावेन विद्यमानस्य वर्त्तमानस्यैवान्यथात्वं भविष्यति । तस्मात् प्रकृत्या विद्यमानस्यान्यथात्वं नास्तीति सर्व्वथान्यथात्वासम्भव एव ततश्च नास्ति प्रकृतिर्भावानामिति विज्ञेयं । यच्चोक्तमन्यथात्वस्य दर्शनन्नास्ति प्रकृतिरिति तदपि परप्रसिद्धान्यत्वदर्शनमपि प्रकृत्योक्तमतोऽस्माभिः कदाचिदपि कस्यचिदन्यथात्वमभ्युपेतं । तदेवमत्यन्ततः प्रकृतावसम्विद्यमानायां सर्व्वधर्म्मेष्वसम्विद्यमानेषु तदन्यथात्वे वा सम्विद्यमाने यो ह्येदानीमस्तित्वं नास्तित्वं च भावानां परिकल्पयति तस्यैवं परिकल्पयतो नियतमेव ।

अस्तीति शाश्वतग्राहो नास्तीत्युच्छेददर्शनम् ।

स्वर्गापवर्गमार्गान्तरायकरत्वाद्यस्मान्महानर्थकं ।

तस्मादस्तित्वनास्तित्वे नाश्रीयेत विचक्षणः ।

कस्मात् पुनर्भावाभावदर्शने सति शाश्वतोच्छेददर्शनप्रसङ्गो भवतीति यस्मात् ।

अस्ति यद्धि स्वभावेन न तन्नास्तीति शाश्वतम् ।
नास्तीदानीमभूत् पूर्व्वमित्युच्छेदः प्रसज्यते ॥

यत् स्वभावेन नास्तीत्युच्यते ।

स्वभावस्यानपायित्वान्न तत् कदापि नास्तीति । एवं भावस्यास्तित्वाभ्युपगमे सति शाश्वतदर्शनमापद्यते । पूर्व्वञ्च वर्त्तमानावस्थायां भावस्वरूपमभ्युपेत्येदानीन्तद्विनष्टत्वान्नास्तीति पश्चादभ्युपगच्छत उच्छेददर्शनं प्रसज्यते । यस्य तु भावस्वभाव एव नोपपद्यते तस्य शाश्वतोच्छेददर्शनप्रसङ्गो भावस्वभावानुपलम्भात् । ननु च भावानां स्वभावो नास्तीत्यभ्युपगच्छतो माभूत् । भावदर्शनाभावाच्छाश्वतदर्शनमुच्छेददर्शनन्तु नियतं प्रसज्यत इति । नैवमभावदर्शनं भवति यो हि पूर्व्वं भावस्वभावमभ्युपेत्य पश्चात्तन्निवृत्तिमालम्बते तस्य पूर्व्वोपलब्धस्वभावापवादात् स्यादभावदर्शनं । यस्तु तैमिरिकोपलब्धकेशेष्विव वितैमिरिको न किञ्चिदुपलभते स नास्तीति ब्रुवतो किञ्चिन्नास्तीति ब्रुयात् प्रतिषेधाभावात् । विपर्य्यस्तानान्तु मिथ्याभिनिवेशनिवृत्त्यर्थमतैमिरिका इवचर्य्यक्रमान्न सन्ति सर्व्वभावा इति ।

न चैवं ब्रुवतामस्माकम्परहितव्यापारपरायणानामुच्छेददर्शनप्रसङ्गः । यथोक्तं सूत्रे यो हि भगवन् पूर्व्वं रागद्वेषमोहभावाभ्युपगमं कृत्वा पश्चान्न सन्ति रागद्वेषमोहा भावा इति ब्रवीति स भगवन् वै नास्तिको भवतीति विस्तरः । यस्तु परतन्त्रचित्तचैत्यं वस्तुमात्रमभ्युपेत्य तस्य परिगतस्वभावाभावादस्तित्वदर्शनं परिहरति । संक्लेशव्यवदाननिबन्धनस्य परस्याप्युपनिपातात् कुतोऽन्तद्वयपरिहारः हेतुप्रत्ययजनितस्य च स्वस्वभावेनायुक्तत्वप्रतिपादनादयुक्तमेवास्य व्याख्यानं । तदेवं मध्यमकदर्शन एवास्तित्वनास्तित्वद्वयदर्शनस्याप्रसङ्गो विज्ञानवादिदर्शनादिष्विति विज्ञेयं । अतएवोक्तमार्य्यरत्नावल्यां ।

स शाश्वतस्कन्धनिर्ग्रन्थपुद्गलस्कन्धवादिनम् ।
पृच्छ लोकं यदि वदत्यस्तिनास्तिव्यतिक्रमः ॥

धर्म्मयौगकमित्यस्मादस्तिनास्तिव्यतिक्रमम् ।
विद्धि गम्भीरमित्युक्तं बुद्धानां शासनामृतम् ॥ इति ॥

तथाविधविनेयजनबोधानुरोधात्तु परमार्थदर्शनस्योपायभूतत्वान्नेयार्थत्त्वेन भगवता महाकरुणापरतन्त्रतया विज्ञानादिवादो देशितः साम्मितीयपुद्गलवादवत् । नानीतार्थ इति विज्ञेयं । यथोक्तमार्य्यसमाधिराजभट्टारके —

नीतार्थसूत्रान्त विशेषजानती
यथोपदिष्टां सुगतेन शून्यताम् ।
यस्मिन् पुनः पुद्गल सत्त्वपुरुषो
नेयार्थतां जानति सर्व्वधर्म्मान् ॥

एतच्चार्य्याक्षयमतिनिर्द्देशादिषु विस्तरेण बोद्धव्यमिति । भावाभावदर्शनद्वयप्रसक्तो यावत्तावत् संसार इत्यतेयमुमुक्षुभिरेतद्दर्शनद्वयनिरासेन सद्धर्मध्यमा प्रतिभावनीया ॥ यथा भवेदिति । एतच्चोक्तं भगवता ।

भाव अभाव विभाययि ज्ञानं
सर्व्वि विचिन्तयि सर्व्वि अभूतम् ।
ये पुन चित्तवशानुगता ते
दुःखिता भव कोटिशतेषु ॥

भावानभावानिति यः प्रजायती
स सर्व्वभावेषु न जातु सज्जते ।
यः सर्व्वभावेषु न जातु सज्जते
स आनिमित्तं स्पृशते समाधिम् ॥ इति ।

तथा स्मराम्यहं पूर्व्वमतीतमध्वनी
अचिन्तये कल्पि नराणमुत्तमः ।



उत्पन्न लोकार्थकरो महर्षी-
नामेन सो भावसमुद्गतोऽभूत् ॥

स जातमात्रो गगणे स्थिहिला
सर्व्वाण धर्म्माणमभावु देशयि।
तदानुरूपं कृतु नामधेयं
शब्देन सर्व्वन्तिसहस्र विज्ञयी ॥

देवा अपि सर्व्व प्रमोदशब्दं
अभावनामेति जिनो भविष्यति।
यो जातमात्रः पदसप्त प्रक्रम-
न्नभाव धर्म्माण समं प्रकाशयी ॥

बुद्धा तदो भेष्यति धर्म्मराजः
सर्व्वाण धर्म्माण प्रकाशको मुनिः।
तृणगुल्मवृचौषधिपर्व्वतेषु
अभाव धर्म्माण रवो भविष्यति ॥

यावन्ति शब्दास्तहि लोकधातौ
सर्व्वे स्वभावा न हि कश्चि भावः।
तावन्ति खे तस्य तथागतस्य
न बोधिश्वरो लोकविनायकस्य ॥ इति।

भवतीति भावः सत्ता न विद्यते सत्ता स्वभावः सर्व्वभावानामित्यभावाः। सर्व्व-धर्म्माः शून्याः सर्व्वधर्म्मा निःस्वभावा योगेनेति प्रज्ञापारमितापाठात्। भावः स्वभाव-स्तावुपपत्तिरभाव धर्म्माण रवो भविष्यतीत्यादि ॥

इत्याचार्य्यचन्द्रकीर्त्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
स्वभावपरीक्षा नाम पञ्चदशम प्रकरणम्।

अत्राह। विद्यत एव भावानां स्वभावः संसारसद्भावात्।

इह संसरणं सम्प्रवृत्तिर्गतिगत्यन्तरगमनं संसार इत्युच्यते। यदि भावानां स्वभावो न स्यात् कस्य गतिगत्यन्तरगमनं संसारे स्यान्न त्वविद्यमानानां वन्ध्यासूनुसंस्काराणां संसरणं दृष्टं तस्मात् संसारसद्भावाद्विद्यत एव भावानां स्वभाव इत्युच्यते। स्याद्भावानां स्वभावो यदि संसार एव भवेत्। न त्वस्ति। इह यदि संसारः स्यात् सनियतं संस्काराणां भवेत्। सत्त्वस्य। किंवात उभयथा च दोष इत्याह।

**संस्काराः संसरन्ति चेन्न नित्याः संसरन्ति ते।**
**संसरन्ति च नानित्याः सत्त्वेऽप्येष समक्रमः॥**

तत्र यदि संस्काराः संसरन्तीति परिकल्प्यते किन्त्वनित्याः संसरन्ति उतानित्याः। तत्र न नित्याः संसरन्ति निष्क्रियत्वादनित्यानां च घटादीनां सक्रियत्वोपलम्भात्। अथानित्याः ये त्वनित्यास्त उत्पादसमनन्तरमेव विनष्टाः येच विनष्टाः कुतस्तेषां विद्यमानत्वाद्वन्ध्यासूनु-संस्काराणामिव क्वचिद्गमनमित्येवमनित्यानामपि नास्ति संसारः। अथापि स्यादनित्या एव सन्तो हेतुफलसम्बन्धाः परस्परेषां अविच्छिन्नक्रमाः। सन्तानेन प्रवर्त्तमानाः संस्काराः संसरन्तीति एतदपि नोपपद्यते कुतः। यत्तावदुत्पद्यते कार्य्यन्तस्य संसारो नास्ति कुतश्चिदना-गमनात् क्वचिच्चागमनात्। यच्च कारणं नष्टं तस्यापि संसारो नास्ति कुतश्चिदनागमनात् क्वचिच्चागमनात् संस्कारमात्रव्यतिरेकेणातीतानागतयोः सिद्धत्वात्। नष्टा जातत्वेनाविद्यमानत्वा-दुत्तरस्मिन् क्षणे उत्पन्ने पूर्व्वः संसरतीति चेत्। यदि पूर्व्वोत्तरयोः क्षणयोरेकत्वं स्यात्। स्यादेत-देवं न त्वेकत्वमस्ति कार्य्यकारणभावात्। चक्षुरूप चक्षुर्विज्ञानो नास्ति च किञ्च एकत्वे सति पूर्व्वोत्तरक्षणवाच्यतैकेन न स्यात्। नह्येको देवदत्त एकदा पूर्व्वोत्तरश्चेति व्यपदिश्यते। एवमि-हैकत्वात् पूर्व्वोत्तरक्षणव्यपदेश एव न स्यात्। अपिच पूर्व्वक्षणो नष्ट इति। तस्मादुत्तरक्षणव-दव्यतिरिक्तत्वात्। उत्तरक्षण उत्पन्न इति न स्यात् पूर्व्वक्षणवदव्यतिरिक्तत्वात्। अथान्यत्वे सति संसरणं स्यादेवं सत्यर्हतामपि संसरणं स्यात्। अन्यस्य पृथग्जनस्य संसारोत्पत्तिसद्भावात्। निवृत्तश्च प्रदीपः प्रदीपान्तरे ज्वलति ज्वलतीति स्यात्। किञ्चान्यत्। नष्टाद्वा पूर्व्वक्षणादु-त्तरस्यक्षणस्योदयः स्यादनष्टान्नश्यमानाद्वा। तत्र यदि नष्टादिष्यते वह्निदग्धादपि वीजाङ्कुरा-दयः स्युस्ततश्च निर्हेतुकः स्यात्।

अथानष्टादेवमपि। अविकृतेऽपि वीजेऽपि फलोदयः स्यात्। कार्य्यकारणयोश्च यौगपद्यं स्यात् निर्हेतुकस्योत्पादः स्यात्। नश्यमानादिति चेत्। नष्टानष्टव्यतिरेकेण नश्यमानाभावात्। नष्टानष्टयोश्च विहितदोषत्वान्नश्यमानादपि नास्त्युत्पत्तिरिति कुतः कार्य्यकारणव्यवस्था वा भविष्यति।

यदा च पूर्व्वोत्तरक्षणव्यवस्था कार्य्यकारणव्यवस्था नास्ति तदा सन्तानोऽपि नास्ति तदभावा न्नास्ति भवतां संसार इति। अनित्यानामपि संस्काराणान्नास्ति संसार इति। अत्रैके वर्णयन्ति। सत्यं संस्कारा न संसरन्ति। उत्पत्तिविधुरत्वात्। किं तर्हि सत्वः संसरतीत्युच्यते।

सत्वेऽप्येष समक्रमः। सत्वः संसरतीत्युच्यमाने किमसौ नित्यः संसरति उतानित्य इति विचार्य्यमाणो य एव संस्काराणां संसरणमुपपत्तिक्रमः स सत्वात् सत्वेऽपि सतो निपतति तस्मात् सत्वोऽपि न संसरति। अत्राह। नैव हि सत्वे संस्काराणां संसाराणां संसारेऽनुपपत्तिक्रमः समो भवितुमर्हति। यस्मादिह संस्काराणां नित्यानित्यभूतानां संसरणं नास्तीत्युक्तं। न चैव-मात्मा नित्यानित्यभूतः। तस्य हि स्कन्धेभ्यः सत्वान्यत्वाद्वाप्येतावन्नित्यत्वेनाप्यवक्तव्यता व्यवस्था-प्यते। तस्मादात्मैव संसरतीति न चोक्तदोषप्रसङ्ग इत्युच्यते। पुंगलः संसरति चेत् स्कन्धाय-तनधातुषु पञ्चधा मृग्यमाणोऽसौ नास्ति कः संसरिष्यति। यदि पुद्गलो नाम कश्चित् स्यात् संसरेन्नत्वस्ति यस्मात् स्कन्धायतनधातुषु पञ्चधा मृग्यमाणो नास्ति। कथं कृत्वा, . . .

इन्धनं पुनरग्निर्न नाग्निरन्यत्र चेन्धनात्।
नाग्निरिन्धनवान्नाग्नाविन्धनानि न तेषु सः।
अग्नीन्धनाभ्यां व्याख्यात आत्मोपादनयोः क्रमः॥

इत्येवं स्कन्धायतनधातुस्वभाव आत्मा न भवति। सोऽपि तेभ्योव्यतिरिक्तः। न स्कन्धा-यतनधातुमान्।

न स्कन्धायतनधातुष्वात्मा नात्मनि स्कन्धायतनधातवः। इत्येवं पञ्चधा मृग्यमाण आत्मा न संभवति पूर्व्वोदितनन्यायेन यश्चेदानीं स्कन्धायतनधातुष्वेव विचार्य्यमाणः पञ्चधा न संभवति स कथमविद्यमानः स न संसरिष्यतीति। एवमात्मनोऽपि नास्ति संसारो बन्ध्यासुतस्ये-वाविद्यमानत्वात्। अपि चायमात्मा उपादानादुपादानं संसारविभवो भवेत्।

विभवश्चानुपादानः कः स किं संसरिष्यति।

भवतु काममात्मनः संसारोपपाद्यानुपादानस्य सतोऽस्य संसारो युक्तः स्यात्। कथं पुनरस्यानु-पादानता प्रसज्यत इति प्रतिपादयन्नाह।

उपादानादुपादानं संसरन् विभवेदिति॥

इह हि मनुष्योपादानाद्देवोपादानं गच्छन्। यो नित्यं वा मनुष्योपादानात् देवोपादानं गच्छेत्। अपरित्यज्यते वा यदि तावत्परित्यज्य गच्छतीत्युच्यते तदा पूर्व्वोपादानस्य परि-त्यागादुत्तरस्य वानुपादानात् तदन्तरालविभवः स्यात्। विगतो भवो यस्येति विभवः। पञ्चो-पादानस्कन्धास्तद्रहितः स्यात्। यश्च विभवादुपादानः स्कन्धरहितत्वात् प्रज्ञप्त्युपादानकारण-रहितत्वात् निर्हेतुकः स्यात्। यश्चानुपादाननिरञ्जनोऽव्यक्तो निर्हेतुकः कः स न कश्चित स नास्त्येव स इत्यर्थः। तस्मिंश्चासति भावादेवोपादानमपि निरुपादातृकं नास्तीति वि संसरिष्यति। नास्त्येव तत् यत्संसरिष्यतीत्यर्थः। अथवा किमित्येतत्संसरणे क्रियाविशेषण तस्माविद्यमानत्वान्नैव संसरणक्रिया क्रियां करिष्यति। एवं तावत् पूर्व्वोपादानपरित्यागो न संसरणमयुक्तं। अथापरित्यागेन तथापि नोपपद्यते किं कारणं। पूर्व्वस्यात्यागादुत्तरस्य च ग्रहणात् यस्यैकस्यात्मनोद्व्यात्मकता स्यात्। न चैतदिष्यत इति। तस्मादपरित्यागेनापि

ंसरणन्नास्ति। अथ पूर्व्वोत्तरयोर्मध्ये अन्तराभविकस्कन्धसम्भवात्ते च सोपादानत्वादुपादानं ंसरतोऽपि न विभवतीति प्रसङ्ग इति। तदपि न युक्तं। पूर्व्वभवपरित्यागापरित्यागान्तरा-भविकस्कन्धसंसारेऽपि तुल्यप्रसङ्गत्वात्त्यागोपादानाद्दोष इति चेदुच्यते। किमेकदेशेन पूर्व्वो-पादानं त्यजते एकदेशेनान्तराभावोपादानं संचरति। अथ सर्व्वात्मना तत्र यद्यवयवेनेति परिकल्प्यते तदाध्यात्मकताप्रसङ्गादित्युक्तदोषः। अथ सर्व्वात्मना एवमपि स एव विभवता प्रसङ्ग आपद्यते। एतावांस्तु विशेषो यदन्तराभवसंचारेऽतिसामीप्यात् सूक्ष्मं कालमनुपादानं स्यात्। नच सर्व्वात्मना एकस्य पदार्थस्य भिन्नपदार्थस्य विषये युगपत्त्यागोपादाने दृष्टे। न ह्येकस्यैव देवदत्तस्य सर्व्वात्मना गृहाद्गृहं सञ्चरत एकदा त्यागोपादानक्रिये द्वे सम्भवतः। अथैकेन पादेनैकस्य परित्यागादपरस्य चादानाद्युगवत्त्यागोपादानपरिकल्पना नत्वेवं सति पादद्वयवद्द्व्यात्मकतात्मनः स्यात्। अंशेन पूर्व्वस्यावस्थानादंशेन चोत्तरत्रावस्थानादनेका-वयवता प्रसज्यते। तस्माद्यौगपद्येनापि त्यागोपादाने न सम्भवतः इत्यपरिहार एवायं। तस्मा-दन्तराभवयुगपदुपादानस्य स एव दोषप्रसङ्ग इति। सर्व्वथात्मनोऽपि नास्ति संसारः। यदा च संस्काराणामात्मनश्च संसारो नास्ति तदा नास्त्येव संसार इति स्थितं। अत्राह। विद्यते एव संसारः प्रतिद्वन्द्विसद्भावात्।

इह यो नास्ति न तस्य प्रतिद्वन्द्वी विद्यते तद्यथा वन्ध्यासूनोरिवेति। अस्ति च संसारस्य प्रतिद्वन्द्विनिर्व्वाणन्तस्मादस्ति संसार इत्युच्यते। तस्मात् संसारो यदि तत्प्रतिद्वन्द्वि निर्व्वाणं स्यात्। न त्वस्तीत्याह।

संस्काराणां न निर्व्वाणं कथञ्चिदुपपद्यते।
सत्वस्यापि न निर्व्वाणं कथञ्चिदुपपद्यते॥

यदि निर्व्वाणं नाम किञ्चित् स्यात्तत्परिकल्प्यमानं संस्काराणां नित्यानां वा परिकल्प्यतेऽ-नित्यानां वा। तत्र नित्यानामविकारिणां किं निर्व्वाणं कुर्य्यात्। अनित्यानामपि संविद्य-मानानां किं निर्व्वाणं कुर्य्यादिति। सर्व्वं पूर्व्वेण तुल्यं। न कथञ्चिदिति न केनापि प्रकारे-णेत्यर्थः। अथ सत्वस्य निर्व्वाणं परिकल्प्यते। तदपि नित्यस्य वा पूर्व्ववन्नोपपद्यते। अथ नित्यानित्यत्वेनावाच्यस्य परिकल्प्यते। न त्वेवं सति निर्व्वाणेऽप्यात्मास्तीत्यभ्युपेतं भवति। संसार इव अपि च सोपादानस्यैवात्मनाऽवाच्यता युज्यते नच निर्व्वाणे उपादानमस्तीति कुतोऽस्यावाच्यता। भवतु तत्त्वोऽन्येभ्यो वा वाच्यतात्मनोऽपि तु किमसौ निर्व्वाणेऽस्ति उत नास्ति। यद्यस्ति तदा मा तस्य सद्भावान्नित्यता स्यात्। अथ नास्ति तदाऽनित्य आत्मा स्यात्। ततश्च जन्मभ्यो वाच्यता तावन्नित्यानित्यत्वेनाप्यात्मनोऽवक्तव्येति न स्यात्। अथ निर्व्वाणेऽप्यात्मनोऽस्तिनास्तित्वेनावाच्यतैवेष्यते। एवमपि किमसौ तत्र विज्ञेयोऽथ न यदि विज्ञेयो न तर्हि निरुपादानोऽस्यावात्मा निर्व्वाणे विज्ञेयत्वात् संसार इव। अथनविज्ञायते तत्राऽसावविज्ञेयस्वरूपत्वात् खपुष्पवन्नास्त्येवेति कुतोऽस्यावाच्यता। तदेवं निर्व्वाणमपिनास्ति तदभावान्नास्ति संसार इति। अतएवोक्तं भगवत्यामष्टसाहस्रिकायां निर्व्वाणमप्यायुष्मन्

सुभूते मायोपमं स्वप्नोपमं। बुद्धधर्मा आयुष्मन् सुभूते मायोपमाः स्वप्नोपमा इत्यादि। ।
चेत् कुलपुत्र निर्व्वाणादप्यधिकद्धो नान्यो धर्मोऽभविष्यत्तमप्येवं मायोपमं स्वप्नोपममिं
वदामि। तथा आर्य्यसमाधिराजभट्टारके। परमार्थसत्यसूपिमेन समन्निर्व्वाणस्वप्रशमात्त
रतीमन एवमात्तरति ये न विदु मनः सचेत कथित श्रेष्ठ अयं। तथा निरोधसत्यं सूपिः
तथैव स्वभावामय निर्वृत्तिं। येनेह वाचोत्तरिक्रोधिनसत्त्वो अयं खुसोवुच्चति वाचसम्बरः।

अत्राह। यद्यपि त्वया संसारनिर्व्वाणे प्रतिषिद्धे तथापि बन्धमोक्षौ विद्येते न वा
विद्यमानस्य भावस्वभावस्य बन्धमोक्षौ सम्भवतः। तस्माद्बन्धमोक्षसद्भावाद्विद्यते एव भावान
स्वभाव इत्युच्यते। स्याद्भावानां स्वभावो यदि बन्धमोक्षावेव स्यातां नतु स्त इत्याह।

न बध्यन्ते नैव मुच्यन्ते उदयव्ययधर्म्मिणः।
संस्काराः पूर्व्ववत् सत्वो बध्यते नैनमुच्यते॥

इह य इमे रागादयः क्लेशाबद्धा नाम स्वतन्त्रीकरणे बन्धनमिति व्यपदिश्यते। यैश्च बद्धा
पृथक् जनानां स्त्रैधातुनातिक्रमन्तीति व्यवस्थाप्यते। तदेतद्रागादिकं बन्धनत्वेन परिकल्प्य
मानमुदयव्ययधर्म्माणां तावत्कालिकानां संस्काराणामुत्पादानन्तरध्वंसिनां नष्टानामसत्त्वाद्
सम्भवति। रागादिबन्धनविच्छेदलक्षणोऽपि मोक्षो नित्यानां संस्काराणामविद्यमानत्वान्नैव
सम्भवति। पूर्व्ववत् पूर्व्वोक्तविधिनेत्यर्थः। यथा च पूर्व्वोक्तविधिना संस्काराणां बन्धमोक्षौ
न सम्भवतः एवंपूर्व्ववदेव सत्त्वोऽपि न बध्यते नापि मुच्यते। इत्येवं बन्धमोक्षावपि न स्तः

अत्राह। यद्यपि संस्काराणां सत्त्वस्य वा बन्धो नास्ति तथापि रागादिकमुपादानाख्य
बन्धभूतमस्ति तत् सद्भावाद्बन्धोऽपि भविष्यतीत्युच्यते। स्यादुपादानं बन्धनं यदि किञ्चित
पदार्थं बध्नीयान्न तु बध्नाति। यथा च न बध्नाति तथा प्रतिपादयन्नाह।

बन्धनं चेदुपादानं सोपादानो न बध्यते।
बध्यते नानुपादानः किमवस्थोऽथ बध्यते॥

तत्र विद्यमानोपादानः सोपादानः स तावद्भावो न बध्यते। यो हि सोपादानः स बद्ध एव
तस्य पुनरपि बन्धनयोगः किं कुर्य्यात्। यश्चाप्यनुपादानो बन्धनरहितोऽसावपि बन्धनरहित-
त्वात्तथागतवन्न बध्यते। अनुपादानो बन्धनरहितो बध्यते इति परस्परविरुद्धत्वाच्चायुक्तं
एतत्। यश्चैवं विरुध्यमानः सोपादानोनिरुपादानो वा न बध्यते स इदानीं किमवस्थो
बध्यतां। नास्त्येवासौ काचिदपरा अवस्था यस्यां बध्यते इत्यभिप्रायो यदा चैवं निरूप्यमाणं
बन्धनं किञ्चिदपि बध्नाति। यदा काञ्चिदप्यबध्नत उपादानस्य रागादेः कुतो बन्धनमिति।
तस्माद्बन्धनमपि नास्ति।

अपि च।

बध्नीयाद्बन्धनं कामं बन्ध्यं पूर्व्वं भवेद्यदि॥

न चास्ति तत् । इह बन्धव्यतिरेकेण बन्धननिगडादिकं । पूर्व्वसिद्धं स्वधर्म्मदेवदत्तं बध्नातीति दृष्टं । एवं यदि बन्ध्येभ्यः संस्कारेभ्यः पुंगलाद्वा बन्ध्यात् पूर्व्वं रागादिकं बन्धनं सिद्धिः स्यात्तेन पूर्व्वसिद्धनवबन्धनं स्यात् संस्काराणां पुंगलस्य वा । तच्चैतन्न सम्भवति निराश्रयस्य रागादिकस्यासिद्धत्वात् । पूर्व्वसिद्धस्य च बन्धनस्य पश्चाद्बन्धनसहस्रं बन्धस्य निष्प्रयोजनत्वात् । बद्धस्य च बन्धनात् पृथक् सिद्धस्य पूर्व्वबन्धनायोक्तानि प्रयोजनत्वाच्च नास्ति बन्धाद्बन्धनस्य पूर्व्वसिद्धिः तस्मान्नैव बन्धनं किञ्चिदपि बध्नाति । न च कथञ्चिदप्यबन्धता बन्धनत्वं युक्तमिति । नास्ति बन्धनं बन्धनाभावाच्च बन्धोऽपि नास्तीति सिद्धं यत् पुनरत्र शेषं दूषणं तच्छेषसूत्रं गम्यमानगतागतैर्वेदितव्यं । श्लोकपादपरिवर्त्तनेन ।

> बद्धो न बध्यते तावदबध्यो नैव बध्यते ।
> बद्धाबद्धविनिर्म्मुक्तो बध्यमानो न बध्यते ॥

इत्यादिना योज्यं ॥

अत्राह । यद्यपि भगवता बन्धनं प्रतिषिद्धं तथापि संसारचारकागारो च बुद्धानामत्राशानां सत्त्वानां महाकारुणिकैस्तथागतैः शीलसमाधिः प्रज्ञात्मकस्कन्धो त्रयोदशोऽयमुक्तः स ताव-न्मोक्षोऽस्ति न वाबद्धस्य पुंसो मोक्षः । तस्माद्बन्धोऽप्यस्तीति । स्याद्बद्धो यदि मोक्ष एव स्यादिहायं मोक्षः परिकल्प्यमानो बद्धस्य वा परिकल्प्यतेऽबद्धस्य वा किं चात उभयथा च न युज्यते इत्याह ।

> बद्धो न मुच्यते तावदबद्धो नैव मुच्यते ।
> स्यातां बद्धे मुच्यमाने युगपद्बद्धमोक्षणे ॥

तत्र बद्धस्य मोक्षो न सम्भवति बद्धत्वात् । अथाबद्धस्य वा ये न पश्चान्मोक्ष इति कृत्वा बद्ध एव मुच्यते इति स्यान्न तर्हि बद्धो मुच्यते इति वक्तव्यं तर्हि मोक्षत इति । वर्त्तमान-सामीप्यादेव मुच्यते इति चेत् । यदि कदाचिदपि मोक्षः सम्भवेत् तदा समीपे स्यात् । यदा तु तस्यां चिरप्यवस्थायां मोक्ष इष्यमाणे बद्धस्य मोक्षासम्भवत्वेन मोक्षाभावः प्रति-पादयिषित तदा कुतो वर्त्तमानसमीपता । एवं तावद्बद्धो न मुच्यते इति स्थितं । इदानी-मबद्धोऽपि न मुच्यते स हि मुक्त एव तस्य पुनरपि मोक्षः किं कुर्य्यात् । मुक्तानां चार्हतां पुनरपि मोक्षापेक्षत्वावतैव स्यात्ततश्चार्हतैवतोऽपि बन्धः स्यात् । अथ स्यादबद्धस्य मोक्षा सम्भवाद्बद्ध एव मुच्यते इति । एवं सति बद्धे मुच्यमाने परिकल्प्यमाने बद्धत्वान्मुच्यमानत्वाच्च यौगपद्येन बन्धमोक्षणे स्यातां, न च परस्परविरुद्धत्वादालोकान्धकारवदेकस्मिन् काले बन्ध-मोक्षणे उपपद्येते । यतश्चैवं बद्धाबद्धयोर्मोक्षासम्भवस्तस्मान्मोक्षोऽपि नास्ति तदभावाच्च बन्धनमपि नास्तीति सिद्धं ।

अत्राह यदि भवतैव संसारनिर्व्वाणे निषिद्धे बन्धमोक्षौ च प्रतिषिद्धौ । य एष संसारविनिर्मुमुक्षूणामविद्यासान्द्रान्धकारविविधकुदर्शनकथितासंच्छादितसत्पथं जात्यादि-

विविधापर्य्यन्तव्यसनानिष्टतरविपुलविपाकफलदानुशयविषवृक्षसंकुलं विंशतिशिखरसमुन्नतमगातिपृथुसत्कायदृष्टिमहाशैलपरिवेष्टितसर्व्वदिग्मुखं विषयसुखाशान्तिपिच्छिलविपुल-महातटविवरवाहितृष्णानदीमहापविषं संसारमहाटवीकान्तारं निस्तितीर्षूणां परमाश्वासकरकुशलो महाधर्म्मच्छन्दः कदा नु खल्वहं समुदानो निर्व्वास्यामि कदा नु अनिर्व्वाण भविष्यतीति।

ननु सव्यर्थक एव संजायते। पश्चादप्येवमुत्पादितकुशलामलविपुलधर्म्मच्छन्दानां कल्याणमित्रसंसेवादानशीलश्रुतचिन्ताभावनादिक्रमान्निर्व्वाणप्राप्तये ननु तस्यापि वैयर्थ्यं स्यादिति उच्यते। योऽप्येवं निःस्वभावेषु प्रतिविम्बमरीचिकाजलालातचक्रस्वप्नमायेन्द्रजालसदृशेष्वात्मात्मीयस्वभावरहितेषु विपर्य्यासमात्रानुगमात्तामेव सत्कायदृष्टिमहङ्कारसमुदाचारपरिग्रहणोत्पाद्यं मन्यते।

निर्व्वास्याम्यनुपादानो निर्व्वाणं मे भविष्यति।
इति येषां ग्रहस्तेषामुपादानमहाग्रहः॥

अहमनुपादानः सर्व्वोपादानरहितो निर्व्वास्यामि मम चैवं प्रतिपन्नस्य निर्व्वाणं भविष्यतीति एवं येषां मुमुक्षूणां ग्रहो भवति ननु तदेवाहंकारममकाराख्यं सत्कायदृष्ट्युपादानमेष महाग्रहो भवति न चैवंविधग्रहा महाग्रहावभिनिविष्टानां शान्तिः सम्भाव्यते। निरवशेषग्रहप्रहाणेनैव मोक्षावाप्तये यावदहं ममेति ग्राहोऽभिनिवेशो यावच्च निर्व्वाणं नामास्तीति ग्राहोऽभिनिवेशो यावच्चोपादानत्यागाभिनिवेशस्तावन्नियतमेवानुपायेन निर्व्वाणं प्रार्थयतः सर्व्वायवारम्भा व्यर्था भवन्ति। तस्मात् मुमुक्षुणा सर्व्वमेतत् परित्याज्यं। यथोक्तं भगवतार्य्यध्यायितमुष्टिसूत्रे। अथ खलु भगवान् मञ्जुश्रियं कुमारभूतमेतदवोचत्।

चतूर्णामार्य्यसत्यानां यतो भूतार्थदर्शनात्॥

चतुर्भिर्विपर्य्यासैः विपर्य्यस्तचित्ताः सत्त्वा एवमिममभूतं संसारं नातिक्रामति। एवमुक्ते मञ्जुश्रीः कुमारभूतो भगवन्तमेतदवोचत्। देशयन्तु भगवन् कस्योपलम्भतः सत्त्वाः संसारं नातिक्रामन्ति। भगवानाह। आत्मात्मीयोपलम्भात् मञ्जुश्रीः सत्त्वाः संसारं नातिक्रामन्ति तत् कस्य हेतोः। यो हि मञ्जुश्रीरात्मानं परं च समनुपश्यति तस्य कस्याभिसंस्कारा भवन्ति बालो मञ्जुश्रीरश्रुतवान् पृथग्जनान् अत्यन्तपरिनिर्वृतान् सर्व्वधर्म्मान् प्रजानानः आत्मानं परं वोपलभते उपलभ्य निविशते। अभिनिविष्टः सन् त्रिविधं कर्म्माभिसंस्करोति। कायेन वाचा मनसा साहसंसमारो येन विकल्पयति। अहं रक्तोऽहं विष्टो अहं दुष्ट इति तस्य तथागतशासनप्रव्रजितस्यैवं भवति। अहं शीलवानहं ब्रह्मचारीति। अहं संसारं समतिक्रमिष्यामि। अहं निर्व्वाणमनुप्राप्स्यामि। अहं दुःखेभ्यो मोक्ष्यामि। स विकल्पयति। इमे कुशला धर्म्मा इमेऽकुशला धर्म्माः प्रहातव्याः इमे धर्म्मा साक्षात्कर्त्तव्याः। दुःखं परिज्ञातव्यं समुदयः प्रहातव्यो निरोधः साक्षात्कर्त्तव्यो मार्गो भावयितव्यः। स विकल्पयति। अनित्याः

सर्व्वसंस्काराः आदिप्ताः सर्व्वसंस्कारा योऽन्वहं सर्व्वसंस्कारेभ्यः परापेयं। तस्यैवमवेक्षमाणस्योत्पद्यते निर्व्विल्सहगतो मनसिकारोऽनिमित्तपुरोगतस्तस्यैवम्भवति इयमेषां धर्म्माणां साक्षात्क्रिया। इदं समुदयप्रहाणं। यदिदमेभ्यो धर्म्मेभ्योऽत्तीयनाविज्ञगुप्सना। तस्यैवं भवति। निरोधः साक्षात्कर्त्तव्यः समुदयं कल्पयित्वा निरोधं स जानाति। एषा सा निरोधसाक्षात्क्रिया तस्यैवं भवति। यन्नूनमहं मार्गं भावयेयं स एकोवहागतस्तान् धर्म्मान् मनसि कुर्व्वन् समर्थः प्रतिलभते। तस्य निर्व्विल्सहगतेन मनसिकारेण समर्थ उत्पद्यते। तस्य सर्व्वधर्म्मेषु चित्तं न प्रतीयते प्रतिवहति प्रत्युपावर्त्तते अतीयते उद्वीयते अनभिनन्दना चित्तमुत्पद्यते।

तस्यैवं भवति। मुक्तोऽस्मि सर्व्वदुःखेभ्यो न समभूय उत्तरि किञ्चित्करणीयं अहं नस्मो स्वात्मानं संजानाति। समरणकाले समयउत्पत्तिमात्मानं समनुपश्यति तस्य कांक्षा च विचिकित्सा च भवति। बुद्धबोधौ सविचिकित्सा वातितः। कालगतो महानिरयेषु प्रपतितः। तत् कस्य हेतोर्यथापीदमनुत्पन्नान्धर्म्मान्कल्पयित्वा।

अथ खलु मञ्जुश्रीः कुमारभूतो भगवन्तं एतदवोचत्। कथं पुनर्भगवंश्चत्वार्य्यार्य्यसत्यानि द्रष्टव्याणि। भगवानाह। येन मञ्जुश्रीरनुत्पन्नाः सर्व्वसंस्कारा दृष्टास्तेन दुःखं परिज्ञातं। येनासमुच्छ्रिताः सर्व्वधर्म्मा दृष्टास्तस्य समुदयः प्रहीणः येनात्यन्तपरिनिर्वृताः सर्व्वधर्म्मा दृष्टास्तेन निरोधः साक्षात्कृतः येनात्यन्तशून्याः सर्व्वधर्म्मा दृष्टा स्तेन मार्गो भावितः येन मञ्जुश्रीरेवं चत्वार्य्यार्य्यसत्यानि दृष्टानि संकल्पयति न कल्पयति। इमे कुशला धर्म्मा इमेऽकुशला धर्म्माः इमे धर्म्माः प्रहातव्याः। इमे धर्म्माः साक्षात् कर्त्तव्या दुःखं परिज्ञातव्यं समुदयः प्रहातव्यो निरोधः साक्षात्कर्त्तव्यो मार्गो भावयितव्य इति। तत् कस्य हेतोस्तथा हि स तं धर्म्मं समनुपश्यति यः परिकल्पित वालपृथक्जनास्तेतान्धधर्म्मान् कल्पयन्तो रज्यन्ति च द्विषन्ति च मुह्यन्ति चासनकंचिधर्म्मनायूहति निर्य्यूहति। तस्यैवमनायूहतोऽनिर्यूहतस्त्रैधातुकचित्तं न सज्जति।

अजातं सर्व्वत्रैधातुकं समनुपश्यतीति विस्तरः। अतएवाषादागमात्परमार्थसत्य उच्यते। सर्व्वथा न निर्व्वाणसमारोपो न संसारापकर्षणं।

## थ एकस्तत्र संसारो निर्व्वाणं किं विकल्प्यते।

यत्र हि नाम परमार्थसत्येनैव निर्व्वाणसमारोपो न च निर्व्वाणाध्यारोपः सम्भवति। अनुपलभ्यमानत्वात्। नापि संसारापकर्षणं संसारपरिक्षयो न सम्भवति। कस्तत्र संसारविकल्प्यतात्तयार्थं किं वा तत्र निर्व्वाणं यत्प्राप्त्यर्थं विकल्प्यते। अथवा यत्र निर्व्वाण न कस्यचित् सत्यस्य संसारोदयकर्षेण अपनयनं निर्व्वाणे च समारोपणं प्रयत्नवतापि न शक्यत कर्त्तुं संसारनिर्व्वाणयोरप्यनुपलभ्यमानत्वात्तत्र किं निर्व्वाणं विकल्प्यते। नैव किञ्चिद्विकल्पयितुं युक्तमविकल्पयतश्च नियतं यथोदितसंसाराटवीकान्तारातिक्रमो निर्व्वाणनगरपुरप्राप्तिश्च भविष्यतीति। अतएवोक्तमार्य्यसारदमनसूत्रे। अथ मञ्जुश्रीकुमारभूतस्तस्यां वेलायां तथारूपं

समन्वाहरं समन्वाहरति स्म। यन्मारपापीयानिन्द्रकीलबन्धनबद्धोधरणीतरप्रतिपत उत्क्राशति स्म । गाढ़बन्धनबद्धोऽस्मि मञ्जुश्रीराह । अस्ति पापीयन्न तस्माद्बन्धनं गाधतरं बन्धनं येन त्वं नित्यबद्धो न पुनर्बध्यसे । तत् पुनः कतमद्यदिदमस्मि मानविपर्य्यासबन्धनं तृष्णा दृष्टि-बन्धनमिदं पापीयन् बन्धनं । अतो बन्धनाद्गाढ़तरं बन्धनं न संविद्यते । तेन त्वं नित्यबद्धो न पुनर्बध्यसे । पयालमाह । किं त्वं पापीयान्नात्तमना भूयो यदि मुच्यय । आह । आत्तमना भवेयं परमात्तमना भवेयं । अथ खलु सुयामो देवपुत्रो मञ्जुश्रियं कुमार-भूतमेतदवोचत् । उत्सृज मञ्जुश्रीर्मारं पापीयांसं गच्छतु स्वभवनं । अथ खलु मञ्जुश्रीः कुमारभूतो मारं पापीयांसमेतदवोचत् । केनासि पापीयान् बद्धो यदात्मानमुत्सृजयसि । आह । न जाने मञ्जुश्रीः केनास्मि बद्ध इति । आह । यथा त्वं पापीयान्न बद्धाबद्धसंज्ञी । एवमेव सर्व्वबाल पृथग्जना अनित्ये नित्यसंज्ञिनः । दुःखे दुःखसंज्ञिनः अशुभे शुभसंज्ञिनः । अनात्मन्यात्मसंज्ञिनः अरूपे रूपसंज्ञिनः । अवेदनायां वेदनासंज्ञिनः । असंज्ञायां संज्ञा-संज्ञिनः । असंस्कारे संस्कारसंज्ञिनः अविज्ञाने विज्ञानसंज्ञिनः । अपि तु खलु पुनः पापीयन् यस्त्वं मोक्षसे कुतो मोक्षसे । आह । नाहं जाने कुतश्चिन्मोक्षः । एवमेव पापीयन्न येऽपि ते मोक्षन्ते । न ते कुतश्चिद्वै मोक्षन्ते । अन्यत्र याश्च च मभूतं संज्ञा तां परिजानन्ति तां परिज्ञाय विमुक्ता इत्युच्यन्ते । अतएवागमात् अमद्विपर्य्यासकल्पनामात्र-लताबन्धनविच्छेदो विमोक्षो निर्ब्बाणमित्युच्यते । स्वप्नोपलब्धदहनज्वाला निर्व्वापणवत्त-दनिलसलिलैरिति ।

इत्याचार्य्यचन्द्रकीर्त्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ बन्धमोक्षपरीक्षा नाम षोड़शमप्रकरणम् ॥

---

अत्राह ॥ विद्यत एव संसारः कर्म्मफलसम्बन्धाश्रयत्वात् ॥ यदीह सन्तानाविच्छेदक्रमण-जन्ममरणपरम्परयोर्हेतुफलभावप्रवृत्त्या संस्काराणामात्मनो वा संसरणं स्यात् ॥ स्यात्तदानीं कर्म्मफलसम्बन्धो यथा पण्डितः संसाराभावेतु । उत्पत्त्यनन्तर विनाशित्वाच्चित्तस्य कर्म्मा-क्षयकाले च विपाकः स्यात् सद्भावात् कर्म्मफलसम्बन्धाभाव एव स्यात् ॥ संसारसद्भावे तु सतीह कृतस्य कर्म्मणो जन्मान्तरेऽपि विपाकफलसम्बन्धात् कर्म्मणां फलसम्बन्धो न विरो-धिता भवति ॥ तस्माद्विद्यत एव संसारकर्म्मफलसम्बन्धाश्रयत्वादिति ॥ कानि पुनस्तानि कर्म्माणि किं वा तत्फलमिति ॥ तत्प्रभवदविपत्त यदुच्यत ॥

आत्मसंयमकं चेतः परानुग्राहकं च यत् ।
मैत्रं सद्धर्मस्तद्बीजफलस्य प्रत्यवेऽहवे ॥

तत्राहित उत्पादिता अहं मानोऽस्मिन्निति आत्मास्कन्धानुपादाय प्रज्ञप्यमानः पुद्गल आत्मेत्युच्यते ॥ विनातिशुभमशुभं कर्मविपाकदानसामर्थ्यं नियमयतीति चेतचित्तं मनोविज्ञानमिति ॥ तस्यैव पर्य्यायाः आत्मानं संयमति विषयष्वस्वतन्त्रयति रागादिक्लेशवशेन प्रवृत्तिं निवारयतीति आत्मसंयमकं तदतदात्मसंयमकं कुशलं चेतः प्राणातिपातादिषु प्रवृत्तिविधारकं दुर्गतिगमनाद्धारयतीति धर्म्म इत्युच्यते ॥ धर्म्मशब्दोऽयं प्रवचने त्रिधा व्यवस्थितः स्वलक्षणधारणार्थेन कुगतिगमनविधारणार्थेन पाञ्चगतिकसंसारागमनविधारणार्थेन तत्र स्वलक्षणधारणार्थेन ॥ सर्व्वेसास्रवानास्रवधर्म्मा इत्युच्यन्ते ॥ कुगतिगमनविधारणार्थेन दशकुशलादयो धर्म्मा इत्युच्यते ॥

धर्म्मचारी सुखं शेतेऽस्मिंल्लोके परत्र च ।

पाञ्चगतिकसंसारगमनविधारणार्थेन निर्व्वाणमुच्यते । धर्म्मसरणं गच्छतीत्यत्र ॥ इह तु कुगतिगमनविधारणार्थेनैव धर्म्मशब्दोऽभिप्रेतः ॥ किं पुनरात्मसंयमकमेवैकं ॥ चेतः धर्म्म इत्याह ॥ किन्तर्हि परानुग्राहकं चसावपि वर्षः ॥ मैत्रमित्यत्र च शब्दालुप्तनिर्द्दिष्टो वेदितव्यः । तत्र परमनुगृह्णातीति परानुग्राहकचेतः वेतुसंग्रहवस्तुप्रवृत्तं भवपरित्राणप्रवृत्तं चेयच्चातोऽसावपि धर्म्मः ॥ मित्रभवमविरुद्धं सत्त्वेषु यच्चेतस्तं मैत्रचेतः । मित्रमेव वा मैत्रं यच्चेतस्तमैत्रं चेतः यच्चैतं त्रिविधचेतो निर्द्दिष्टं सधर्म्म इत्युच्यते विपर्य्ययादधर्म्मो योज्यः । यच्चैत निर्द्दिष्टप्रभेदं चेततद्बीजं फलस्य असाधारणफलाभिनिवृत्तौ यत्कारणं तदेव बीजमित्युच्यते ॥ तद्यथा ॥ शाल्यं कुलस्य शालिबीजं । जन्तुसाधारणं क्षित्यादि न तद्बीजं कारणमेतत् ॥ यथैवद्दवमिहापि ॥ इष्टस्य विपाकस्याभिनिवृत्तौ त्रिविधं चेतो भवति बीजं पुरुषकादयस्तु कारणमेवैकस्मिन्पुनः कालबीजस्य फलनिष्पत्तिरित्याह ॥ प्रत्येह च प्रत्येत्यदृष्टजन्मनि इहेतिदृष्टजन्मनीत्यर्थः ॥ एतच्चागमात् विस्तरेण बोद्धव्यं ॥ एवन्तावच्चित्तात्मकमेवैकन्धर्म्मं व्यवस्थाप्य पुनरपि द्विविधं । भगवता चेतनाचेतमित्वाचकर्म्मोक्तं परमर्षिणा परमार्थदर्शिना दृष्टः ॥ परमस्रावावृषिश्चेति परमर्षिः सचाकालतया परमार्थगमनाद्धावकप्रत्येकबुद्धेभ्योऽपि उत्कृष्टत्वात् परमर्षिः ॥ सम्बुद्धो भगवान् । तेन परमर्षिणा चेतनाकर्म्म चेतयित्वा च कर्म्मेत्युक्तं सूत्रे ॥ यच्चैतद्द्विविधं कर्म्मोक्तं तस्य एकविधोभेदः कर्म्मणः परिकीर्त्तितः ॥ कथं कृत्वा ॥

तत्र यच्चेतनेत्युक्तं कर्म्म तन्मानसं स्मृतम् ।

चेतयित्वा तु यत्तूक्तं तत्तुकायिकम्भाविकं मनसिभवं मानसं । मनोद्धारेणैव तस्य निष्ठागमनात् ॥ कायवाक्प्रवृत्तिनिरपेक्षत्वाच्च मनोविज्ञानं संप्रयुक्ते च चेतनामानस कर्म्मेत्युच्यते ॥ तत्र शब्दानिर्द्धारणे यन्तु द्वितीयं चेतयियित्वा च कर्म्मेत्युक्तं तत् पुनः कायिकं वाचिकं च वेदितव्यं ॥ एवं चैवं कायवाग्भ्यां प्रवर्त्तितस्य इत्येवं । चेतसासंचिन्त्य यत्क्रियते ॥ तच्चेतयित्वा कर्म्मेत्युच्यते ॥ तत् पुन द्विविधं कायिकं वाचिकं कायवाचोर्भवत्वात्तद्वारेण च

निष्ठागमनात्॥ एतच्च त्रिविधं कायिकं वाचिकं मानसं वात्र एतदपि त्रिविधं कर्म्म पुनः पुनर्विद्यमानसप्तविधं संजायते। इत्येव तस्य कर्म्मणो भगवता बहुप्रकारो भेदोऽनुवर्णितः॥

कथं कृत्वा वाग्विस्पन्दोऽविरतयायाश्चाविज्ञप्तिसंज्ञिताः।
अविज्ञप्तय एवान्याः स्मृता विरतयस्तथा॥

परिभोगान्वयं पुण्यमपुण्यं च तथाविधम्।
चेतना चेति सप्तैते धर्म्माः कर्म्माञ्जनाः स्मृताः॥

तत्र व्यक्तवर्णोच्चारणं वाक्निष्यन्दः शरीरचेष्टाः तत्र कुशलाऽकुशला वा वास्तव्ये च विरत्यविरतिलक्षणाः विज्ञप्ति समुत्थापिका सामान्येन वागिति गृह्यते॥ एवं कुशलाकुशले चारित्यविरतिलक्षणो विज्ञप्तिसमुत्थापको विष्पन्दः सामान्येन गृह्यते॥ यथा चेतविज्ञप्ति द्विधाभेद एवमविज्ञप्तेरपि॥ अविरतिलक्षणा अविज्ञप्तयाविरतिलक्षणाश्चेति॥ कृत्वा तत्र विरतिलक्षणा अविज्ञप्तयस्तद्यथा॥ अद्यप्रभृति मया प्राणिनं हत्वा चौर्य्यं कृत्वा जीविका परिकल्पयितव्येति॥ पापकर्म्माभ्युपगमलक्षणात् प्रभृतितदकारिणोऽपि अकुशलकर्म्माभ्युपगमहेतुकाः सततसमितमविज्ञप्तयः समुपजायन्ते॥ कैवर्त्तादीनां च जालादिपरिकर्म्मकालात् प्रभृति तदकारिणामपि या अविज्ञप्तयः उपजायन्ते ता एता अविरतिलक्षणा अविज्ञप्तय इत्युच्यते॥ यथा चैतास्तथान्याविरतिलक्षणाः॥ कुशलस्वभावा अविज्ञप्तयः॥ तद्यथा॥ अद्यप्रभृतिप्राणातिपातादिभ्यः प्रतिविरमामीति॥ कायवाग्विज्ञप्ति परिसमाप्तिकालक्षणात् प्रभृतितदुत्तरकालं प्रमत्ताद्यवस्थस्यापि याः कुशलापचयस्वभावा अविज्ञप्तय उपजायन्ते॥ ता एता विरतिलक्षणो अविज्ञप्तय इत्युच्यन्ते॥ एतानुपक्रियास्वभावा अपि सत्त्वाविज्ञप्तिवत्परान् विज्ञापयन्तीति अविज्ञप्तयः॥ तथा परिभोगान्वयं पुण्यं कुशलमित्यर्थः परिभोगेनान्वयात्याति परिभोगान्वयं परिभोगः परित्यक्तस्य वस्तुनः संख्यादिभिरुपभोगः। अन्वया अनुगमादायकसंतानजकुशलापचेय इत्यर्थः॥ अपुण्यं च तथाविधं परिभोगान्वयमित्यर्थः॥ तद्यथा॥ देवकुलादिप्रतिष्ठापनं॥ तत्र सत्त्वाहन्यन्त॥

यथायथा हि तत्कौर्त्तौ प्राणिवाहन्यते तथा॥

तद्देवकुलाद्युपभोगात्तत्कर्तृणां सन्तानपरिभोगान्वयमपुण्यमपि जायते॥ इत्येवमपुण्यं च तथाविधं भवति॥ चित्ताभिसंस्कारमनस्कर्म्म॥ लक्षणाचेतनाचेति॥ संक्षेपेणैतत् सप्तविधं कर्म्म भवति॥ कुशलाकुशला वाक्कुशलाकुशलाविस्पन्दः कुशलमविज्ञप्तिलक्षणं। अकुशलमविज्ञप्तिलक्षणं परिभोगान्वयं पुण्यं॥ परिभोगान्वयमपुण्यं॥ चेतना चेति एते च सप्तधर्म्माः कर्म्माञ्जनाः कर्म्मत्वेनाभिव्यक्ताः कर्म्मलक्षणाः स्मृताः॥ अत्रैके परिवादयन्ति॥ यदेतत् कर्म्म बहुविधमुक्तं॥ तत्किन्मा विपाककालादेवेतिस्थितोऽथ न तिष्ठति। उत्पत्त्यनन्तरविनाशित्वात् यदि तावर्त्तिस्थयापाककालाद्वेत् कर्म्मेतन्नित्यतामियात्॥

निरुद्धं चेन्निरुद्धं सत् किं फलं जनयिष्यति।

यद्युत्पन्नं सत्कर्म्म विपाककालं स्वरूपेणावतिष्ठत इति परिकल्प्यत तदियन्तं कालमस्य-नित्यतापद्यत विनाशरहितत्वात्॥ पश्चाद्विनाशसद्भावान्न नित्यत्वमिति चेन्नैतदेवं॥ पूर्व्व-विनाशरहितस्याकाशादिवत्॥ पश्चादविनाशनं सम्बन्धाभावात्॥ विनाशरहितस्य वा संस्कृतत्वप्रसंगादसंस्कृतानां च विपाकादर्शनात्॥ अविपाकत्वेन सदैवावस्थानात्॥ नित्य-ताभ्युपगम एव कर्म्मणा नोपपद्यते॥ इत्येवन्तावन्नित्यत्वदोषः।

अथोपादानान्तरविनाशित्वमेव कर्म्मणामेवमभ्युपेतन्नन्वेवं सति निरुद्धं चेन्निरुद्धं सत् किं फलं जनयिष्यति। अभावीभूतं हत्कर्म्माविद्यमानस्वभावत्वान्नैव दोषस्तावदस्माकं नाप-पद्यते॥ यच्चाप्युक्तम्॥

निरुद्धं चेन्निरुद्धं सत् किं फलं जनयिष्यतीति।

अत्रापि परिहारं ब्रूमः॥

याऽङ्कुरप्रभृति जानप्रभृतिवीजात् सतानातिप्रवर्त्तते।
ततः फलमृतवीजात् स च नाभिप्रवर्त्तते॥

इहवीजं क्षणिकमपि सत्स्वजाती च विफलं च शेषनिष्पत्तिसामर्थ्यविशेषयुक्तस्यैव सन्तानाख्यां कुलकाण्डनालपत्राद्यभिधानस्य हेतुभावमप्युपगम्यनिरुध्यत यश्चायमङ्कुलप्रभृति-श्रीजसन्तानः प्रवर्त्तते॥ तस्मात् क्रमशसहकारिकारणावैकल्ये सति स्वल्पादपि हेतो-र्विपुलफलप्रचय उपजायते॥ अत्यवीजाद्विनावीजात्॥ संचाङ्कुरादिहन्तारोऽभिप्रवर्त्तते तदेवं तद्भाविभावित्वेन तदभावे वा भावित्वेन वीजहेतुकत्वेमंकुरादिसन्तानस्य फलस्या-दर्शितं भवति॥ तदेवम्॥

वीजाच्च यस्मात् सन्तानः सन्तानाच्च फलोद्भवः।
वीजपूर्व्वं फलं तस्मान्नोच्छिन्नं नापि शाश्वतम्॥

यदीह वीजमप्रसूयाङ्कुरादिसन्तानं तालं गारादिविरोधः प्रत्ययासान्निध्यनिसध्यत तदा तत्र कार्य्यसन्तानप्रवृत्त्यदर्शनात् स्योच्छेददर्शनं॥ यदि च वीजं न निरुद्यताङ्कुरादिहन्तानश्च प्रव-र्त्तते तदा वीजस्यानिरोधात्युपगमाच्छाश्वतदर्शनं स्यात्॥ न चैतदेवमित्यतो नास्ति वीजस्य शाश्वतोच्छेदर्शनप्रसङ्गः॥ यथा च वीजोऽयं क्रमानुवर्णित एवं॥ मत्तस्यावित्तसन्तानश्चेतसा-ऽभिप्रवर्त्तते॥ ततः फलमृतचित्तात् सचिनाभिप्रवर्त्तते॥ तस्मात् कुशलाकुशलचेतनाविशेष संप्रयुक्ताच्चित्ताद्यचित्तसन्तान तद्धेतुकः प्रवर्त्तते तस्मात् कुशलाकुशलचेतनाद्यभिभाविता चित्तसन्तानात् सहकारिकारणसन्निधाराद्वैकल्ये सतीष्टमनिष्टं फलमुपजायते सुगतिदुर्गतिषु॥ अतत्तच्चित्ताचित्तमन्तरेण स च नाभिप्रवर्त्तते॥ तदेवं।

चित्ताच्च यस्मात् सन्तानः सन्तानाच्च फलोद्भवः ।
कर्म्मपूर्व्वफलं तस्मान्नोच्छिन्नं नापि शाश्वतम् ॥

यद्यदं चरमचित्तमिव तद्धेतुपारंपर्य्याविच्छिन्नक्रमवर्त्तिनो भाविनो चित्तसन्तानस्य हेतुभावमुपगम्य कुशलं चित्तं निरुध्येत तदोच्छिन्नं तत्कर्म्म स्यात् ॥ अथाप्यनागतसन्तानस्य हेतुभावमुपगम्य स्वरूपादप्रच्युतं स्यात् ॥ तस्मात्तदानीं कर्म्म शाश्वतं ॥ न चैतदेवमिति ॥ तस्मात् क्षणिकक्रमाभ्युपगमेऽपि नास्त्युच्छेदशाश्वतदर्शनद्वयप्रसङ्ग इति । तदत्र यथोदितकर्म्मप्रभेदव्याख्याने दशकुशलाः कर्म्मपथा व्याख्याताः ॥ ते च धर्म्मस्य साधनासाधनोपायाः शुक्ला कर्म्मपथा दशफलं ॥ कामगुणाः यं च धर्म्मस्य प्रत्यवेक्ष्य ॥ तत्र ते दशकुशलाः कर्म्मपथा धर्म्मस्य साधनोपायानिष्पत्तिहेतुभूता इत्यर्थः ॥ कः पुनरसौ कुशलकर्म्मपथव्यतिरिक्तो धर्म्मो नाम यस्येह साधनोपायत्वेन व्यवस्थाप्यते ॥ चित्तविशेष एव कश्चित् धर्म्मशब्देनोक्तः ॥

आत्मसंयमकं चेतः परानुग्राहकं च यत् ॥

मैत्रं सधर्म्म इत्यनेन ॥ अथ परिनिष्पन्नरूपा एते दशकुशलाः कर्म्मपथा धर्म्मशब्दवाच्या भवन्ति ॥ क्रियमाणरूपास्तु कुशलकर्म्मपथशब्दवाच्या भवन्ति ॥ तदस्योक्तलक्षण तदस्योक्तलक्षणस्य एते दशकुशलाः कर्म्मपथा निष्पत्तौ हेतुत्वेन व्यवस्थाप्यते ॥ कथं पुनस्तत्प्रक्रान्त कर्म्मविभागे दशकुशला कर्म्मपथा इत्युच्यते ॥ वाग्विष्यन्दाविरतयोर्य्याश्चाविज्ञप्तिसंज्ञिता इत्यादिना कायिकास्तु यः कर्म्मपथा वाचिका चत्वारो व्याख्याता ॥ चेतनाचेतनेनाभिध्याव्यापादा सम्यक्दृष्ट्या व्याख्यास्त्रयो मानसा व्याख्याताः ॥ इत्येवं दशापि कुशलाः कर्म्मपथा अत्र व्याख्याताः ॥ ते च यथोदितस्य धर्म्मस्य निष्पत्तिहेतवो भवन्ति । अस्य च धर्म्मस्य रूपशब्दगन्धरसस्प्रष्टव्यलक्षणाः यं च कामगुणाः प्रत्यवादृष्टपरलोक इत्यर्थः ॥ इह चेतिह लोक इत्यर्थः ॥ फलमप्रयुज्यत इति । एवं तावदकौनिकाया रात्तयपरिहारवर्णिते सति तात्प्रेत्य परदोषमुद्भाव्य यात्तयपरिहारं वर्णयन्त आहुः ॥

बहवश्च महान्तश्च दोषाः स्युरपि कल्पनो-
त्पादेषा जनने चैषा कल्पनाचापपद्यते ॥

यदि वीजाङ्कुरसाधर्म्म्येण चित्तसन्तानशाश्वतोच्छेददोषद्वयदोषप्रसंगपरिहारः स्यात्तदा बहवश्च दोषाः संख्याबहुत्वेन महान्तश्च दृष्टादृष्टविरोधेन परपक्षं प्राप्नुवन्ति ॥ कथं कृत्वा ॥ यदि हि वीजसन्तानदृष्टान्तेन शालिवीजाच्छाल्यङ्कुरादिसन्तान एव प्रवर्त्तते न वीजानीयशाल्यङ्कुरादिसन्तानाच्च शालिफलमेवोपजायते ॥ न विल्वफलं भिन्नं जातीयत्वादेवमिहापि कुशलचित्तात् कुशलसन्तान एवं स्यात् ॥ समानजातीयत्वान्नाकुशलाव्याकृतं सन्तानो विजातीयत्वात् ॥ एवमकुशलाव्याकृतचित्ता दशकुशलाव्याकृतचित्तसन्तान एव स्यान्नान्याभिजातीयत्वात् कामरूप्यारूप्यावचरनानाश्रवचित्तेभ्यः सदृशानामेव चित्तानां कामरूपारूप्य

चरदानाश्रवाणामुत्पादः स्यान्न भिन्नजातीयानां मनुष्यचित्तान्मनुष्यचित्तमेव स्यान्न देवनरक तौर्य्यगाद्यन्यचित्तं। ततश्च यादवः स एव स्यात्ता मनुष्यस्य मनुष्य एव स्यादित्यादि। ततश्चाकुशलमपि कुर्व्वतामेव मनुष्याणां रागविरागनिवर्णबुद्धीन्द्रियबलरूपरागादिर्वैचित्र्यं न स्यादपायपतनं दृश्यत चैतत्सर्व्वमिति॥ एवं बहवश्च महान्तश्च दोषा यस्माद्बीजसन्तान साधर्म्यकल्पनायां प्रसज्यन्ते तस्मान्नैषा कल्पनात्रोपपद्यते॥

**इमे पुनः प्रवक्ष्यामि कल्पनां याच योज्यते।**
**बुधैः प्रत्येकबुद्धैश्च श्रावकैश्चानुवर्णिताम्॥**

कावासौ कल्पनेत्याह॥

**पत्रं यथाऽविप्रणाशस्तथर्णमिव कर्म्म च।**
**चतुर्व्विधो धातुतश्च प्रकृत्याव्याकृतश्च सः॥**

इह कुशलं कर्म्मकृतं तदुपादानन्तरमेव निरुध्यत न च तस्मिं निरुद्धफलाभावप्रसङ्गः। यस्मादुदयदेव तत्कर्मन्निरुध्यते तदैकस्य कर्म्मणोऽविप्रणाशोह्नानामविप्रयुक्तो धर्म्मः कर्त्तुः सन्ताने समुपजायते॥ ऋण यत्र स्थानीयः तदेवं पत्रं यथा विप्रणाशस्तथा वेदितव्यो यस्य वा स च विप्रणाशसाख्यो धर्म्म उत्पद्यते। ऋणमिव तत्कर्म्म वेदितव्यं। यथाच ऋणपत्रावस्थाना-दप्रयुक्तमपि धने धनिनो नधननाशो भवति सम्बन्धत एव सकारान्तरे सापंचयनधनस्कन्धेन तथा विनष्ट विकर्म्मणापि प्रणाशाख्यधर्म्मान्तरावस्थानात्तन्निमित्तकनफलेनाभिसम्बध्यत एव कर्त्ता। यथाच ऋणपत्रं दातुर्धनात्यागमङ्कृत्वानिर्भुक्तं सत् पुनरपि विद्यमानस्वाऽविद्यमानं वा नधनात्यागमसमर्थमेव सविप्रणाशोऽपि दत्त विपाकः।

संविद्यमानो वानशक्रोटिनिर्भुक्तपत्रवत्कर्त्तुः पुनरपि विपाकसम्बन्धकर्त्तुः॥ यश्चायमविप्र-णाशोऽस्माभिरुक्तः सूत्रान्तरोक्तश्चतुर्व्विधो धातुतः सकामरूपरूप्याचरणाश्रवभेदात् प्रकृत्या-ऽव्याकृतश्च सः कुशलाकुशलत्वेनाव्याकरणादव्याकृत एवाविप्रणाशः॥ यद्यसावकुशलानां कर्म्मणां अकुशलः स्यात्तदा कामवीतरागानां नस्यात्॥ यदि च कुशलानां कुशलः स्यात् समुच्छिन्नकुशलमूलानां स नस्यात्॥ तस्मात् प्रकृत्यां व्याकृत एवासौ किं च।

**प्रहाणतो न प्रहया भावनाहय एव वा।**
**सचायमविप्रणाशः प्रहाणतो न प्रहयः॥**

पार्थगजनिकानि कर्म्माणि दर्शनमार्गेनैव प्रहीयन्ते॥ माभूदार्य्यः पृथग्जनकर्म्मसमन्वागत इति॥ अविप्रणाशस्तु तत्कर्म्मप्रहाणेऽपि दर्शनमार्गेण प्रहीयते किन्तु भावनामार्गेण वा तस्य प्रहाण भवति धातुसमतिक्रमणप्रहय एवेति वा शब्दोविकल्पार्थः॥ यतश्चैवमविप्र-णाशः कर्म्मविनाशे विनश्यति कर्म्मप्रहाणेऽपि न प्रहीयते।

तस्मादपि प्रणाशेन जायते कर्म्मणां फलम्।

यदि पुनरस्याविप्रणाशस्य कर्म्मणः प्रहाणेन प्रहाणोत्प्रहाणतः प्रहाणं स्यात्॥ कर्म्मणश्च संक्रमणकर्म्मणो विनाशेन कर्म्मान्तरसंमुखीभावेन विनाशः स्यात् को दोषः स्यादिति उच्यते। प्रहाणतः प्रहतः स्यात् कर्म्मणः संक्रमणे वा॥ यदि दोषाः प्रसज्जेरंस्तत्र कर्म्मवेधादयः यदि दर्शनमार्गेण पार्थग्जनीककर्म्मवदविनाशः प्रहीयते तदा कर्म्मणो नाश एव स्यात्॥ कर्म्मविनाशाच्चार्य्याणामिष्टानिष्टकर्म्मफलविपाकः पूर्व्वकर्म्मफलहेतुका न स्यात्॥ अकृतस्येः कर्म्मणः फलादयः स्यात्॥ कर्म्मफलाभावदर्शनाच्च मिथ्यादर्शनं स्यादिति॥ एवं कर्म्मवेधादयो दोषाः प्रसज्यन्ते प्रहाणतः प्रहयत्वाभ्युपगम सत्यविप्रणाशस्य॥ एवं कर्म्मणः संक्रमेऽपि योज्यम्।

सर्व्वेषां विसभागानां सभागानां च कर्म्मणाम्।

प्रतिसन्धौ सधातूनामेक उत्पद्यते तु सः॥

भिन्नजातीयानि कर्म्माणि विसभागानि सदृशानि सभागानि तेषां सर्व्वेषामेव सभागानां विसभागानां च कर्म्मणां कामरूपारूप्यधातुप्रतिसन्धिषु सर्व्वकर्म्मोपमर्द्दन एक एवाविप्रणाशः उपपद्यते॥

स चापि धातूनां समानधातुकानामेवोत्पद्यते न विसभागधातुकानाम्।

कर्म्मणः कर्म्मणो दृष्ट धर्म्म उत्पद्यते तु सः।

द्विप्रकारस्य सर्व्वस्य विपच्येऽपि च तिष्ठति॥

स चायमविप्रनाशाख्यो धर्म्मः॥ सर्व्वस्यैव कर्म्मणः चेतनाचेतयित्वात् स्वभावस्य साश्रवानाश्रवभेदेन वा विप्रकारभिन्नस्य दृष्टधर्म्मे इहैव जन्मनि कर्म्मणः कर्म्मण एकैकाविप्रणाशः उत्पद्यते॥ स चायमविप्रणाशो विपच्येऽपि विपाकेनावश्यं निरुध्यत निर्भुक्तपत्रवच्च विद्यमानोऽपि सन्न शक्नोति पुनरपि विपक्तं फलव्यतिक्रमाद्वा समरणाद्वा निरुध्यते॥

अनाश्रवं साश्रवं च विभागं तच्च लक्षयेत्॥

तत्र फलव्यतिक्रमात् निरुध्यते॥ यथोक्तं भावनाहेय एवेति मरणान्निरुध्यते यथोक्तम्।

प्रतिसन्धौ सधातूनां एक उत्पद्यते तु स॥ इति।

स चायं साश्रवानां साश्रवाऽनाश्रवाणां अनाश्रव इत्येवं विभागं लक्षयेत्॥

तदेवं,—

शून्यता च नचोच्छेदः संसारश्च न शाश्वतः।

कर्म्मणोऽविप्रनाशस्य धर्म्मो बुद्धेन दर्शितः॥

यस्मात् कर्म्मकृतं सन्निरुध्यते न स्वभावेनावतिष्ठते तस्मात् कर्म्मणः स्वभावेनानवस्थानाच्छून्यता चापपद्यते ॥ न चैव कर्म्मणोऽनवस्थानादुच्छेददर्शनप्रसंगाऽविप्रणाशपरिकल्पनाभावाच्च नानागतिजातिसियानि धातुभेदभिन्नश्च यां च गतिकः संसारो विचित्रः सिद्धो भवति न च शाश्वतवादप्रसंगः कर्म्मणः स्वरूपेणानवस्थानाभ्युपगमात् ॥ कर्म्मणां चाविप्रणाशोऽविप्रणाशोऽविप्रणाशश्चद्भावादिति ॥ एवं निरवशेषाविद्यानिद्रापगमात् विबुद्धेन भगवता यस्मादयं धर्म्मो देशित तस्माद्यपूर्व्वमुक्तं परेण ॥

तिष्ठत्यापाककालाच्चेत् कर्म्मतन्नित्यतामियात् ।
निरुद्धं चेन्निरुद्धं सत् किं फलं जनयिष्यतीति ।

तदसत्पक्षेणापपद्यत इति ॥ तस्मादस्माभिरूपवर्णितकल्पनैव न्यायेति ॥ अत्रोच्यते ॥ किमिह भगवन्तो गन्धर्व्वनगरप्राकारपतनाशंकीतयातीचोद्विग्नोत्परित्रस्तापरिश्रमादासमासन्नाः । येनाम यूयं कर्म्मण्यनुपपद्यमाने तत्फलनिमित्तं विप्रवदध्वं ॥ यदि हि कर्म्मणः स्वरूपेणैवोत्पादः स्यात्तस्याविपाकमवस्थानानित्यत्वं स्यात् विनाशादुच्छेदः स्यात् ॥ विनाशादुच्छेदः स्याद्यदा तु कर्म्मणैवोत्पद्यते स्वभावशून्यत्वात्तदा तस्य कुतोऽवस्थानं विनाशो वा यत एषां चिन्तास्यादत्राह ॥ कर्म्मणोत्पद्यते कस्मात् ॥ आचार्य्य आह ॥ निःस्वभावं यतस्ततः यस्मान्निःस्वभावात् कर्म्म तस्मान्नोपपद्यते ॥ यदि खल्वेवं निःस्वभावत्वात् कर्म्मनोपपद्यते ॥ तत्कथमेवमुक्तं भगवता ॥

न प्रणश्यन्ति कर्म्माणि कल्पकोटिशतैरपि ।
सामग्रीं प्राप्यकालञ्च फलन्ति खलु देहिनामित्युच्यते ॥

यस्माच्च तदनुत्पन्नं न तस्माद्विप्रणश्यन्ति इत्येवं भगवतोऽभिप्रायमिति ॥ अतीनायमस्माकं वाच्यकविधिरिति ॥ अवश्यं चैतदेवं विज्ञेयं निःस्वभावं कर्म्मेति ॥ अन्यथा हि ॥

कर्म्म स्वभावतश्चेत् स्यात् शाश्वतं स्यादसंशयम् ।
अकृतं च भवेत् कर्म्म क्रियते न हि शाश्वतम् ॥

यदि हि कर्म्मस्वभावतः स्यात् मुक्तसंशयं तच्छाश्वतं स्यात् ॥ स्वभावस्यान्यथा भावो वा भावात्ततश्चाकृतमेव कर्म्म भवेत् कर्त्तुः स्वतन्त्रस्य क्रियया यदीप्सिततमं तत्कर्म्म एतच्च न युज्यन्ते किं कारणं ॥ यस्मात् क्रियते न हि शाश्वतं शाश्वतं हि नाम अविद्यमानसत्ताकं यच्च विद्यमानं तस्य करणानुपपत्तेस्तं नैव कारणमपेक्षत इति शुभाशुभं कर्म्मकृतमेव सकलस्य लोकस्य विपाको यस्मात्तत्तश्च ॥

अकृताभ्यागमभयं स्यात् कर्मातृ कृतकं यदि ।
अब्रह्मचर्य्यवासश्च दोषस्तत्र प्रसज्यते ॥

यदि ह्यकृतं कर्म्म भवेत्तदाऽकृतकाभ्यागमभयं स्यात् ॥ येनापि हि प्राणातिपातादिव न कृतं तस्याप्यकृतमपि सत्तत्कर्म्मास्त्येवेति तेनाप्यस्य संबद्धादकृताभ्यागमभयं स्यात् ॥ अब्रह्मचर्य्यवासश्च तत्र पक्षे प्राप्नोति किं कारणं परिशुद्धब्रह्मचर्य्यवासानामपि सतामकृतमेवाब्रह्मचर्य्यमस्तीति सर्व्वेषामेवाब्रह्मचर्य्यवासान्न कस्यचिन्निर्व्वाणेन भवितव्यं स्यात् ॥ किं चातः ॥

व्यवहारा विरुध्यन्ते सर्व्व एव संशयः ।
पुण्यं पापकृतो नैव प्रतिभागश्च युज्यते ॥

युज्यते कृषिवाणिज्ययोरस्तादयः क्रियारम्भाफलार्थमारभ्यते ॥ तेषां सर्व्वेषामकृतानामेव विद्यमानत्वात् प्रारम्भवैयर्थ्यं स्याद्घट कुरु पटं कुर्व्वित्येवमादयश्च सर्व्व एव लौकिकव्यवहारा विरुध्यन्ते । घटादीनां सर्व्वेषामेव विद्यमानत्वात् ॥ पुण्यकृदयं पापकृदयमिति च प्रतिभागो न प्राप्नोति । उभयोरपि पुण्यपापं कृतोरकृतयोरपि पुण्यपापयोः प्रत्येकं विद्यमानत्वात् किञ्च ।

तद्विपच्चविपाकं च पुनरेव विपक्ष्यति ।
कर्म्म व्यवस्थितं यस्मात्तस्मात् स्वाभाविकं यदि ॥

विपक्वविपाकस्यापि कर्म्मणः पुनर्व्विपाकदानमापद्यते स्वरूपादप्रच्युतत्वात् ॥ अविपक्वविपाकावस्थायामिव ॥ तदेवं यदि कर्म्मस्वाभाविकमिति मन्यसे ॥ यस्मात्तत्कर्म्मव्यवस्थितमस्ति तस्मान्निःसंशयं यथोपवर्णिता दोषाः प्राप्नुवन्ति सस्वभावत्वे तस्मान्निःस्वभावं कर्म्म यतश्च निःस्वभावं कर्म्म तस्माच्छाश्वतोच्छेददर्शनप्रसंगादापानेवास्य किमेवं व्याप्तनामापद्यत इति ॥ अत्राह ॥

विद्यत एव स्वभावतः कर्म्म तत्कारणसद्भावात् ॥

इह यन्नास्ति न तस्य कारणमस्ति कूर्म्मरोमप्रावारस्य च । अस्ति च कर्म्मणः कारणं क्लेशाः अविद्याः प्रत्ययाः संस्काराः उपादानप्रत्ययाभाव इति वचनात् ॥ तस्माद्विद्यत एव कर्म्म स्वभावत इत्युच्यते ॥ अयुक्तमेव किं कारणं यस्मात् कर्म्मक्लेशात्मकं चेदं तच्च क्लेशात्मकं तच्च तच्च क्लेशानतत्त्वतः ॥ न चेत्तेन स्वतः क्लेशाकर्म्म स्यात्तत्वतः कथं इहेदं कर्म्मक्लेशात्मकं क्लेशहेतुकं ते च क्लेशातत्त्वतो न सन्ति ॥ चेद्यदि ॥ शुभाशुभविपर्य्यासात् संभवन्ति प्रतीत्यैतदस्वभावान्न विद्यते तस्मात् क्लेशानतत्त्वत इति ॥ तदेवं तावता चेन्न तत्त्वतः क्लेशा यदतत्त्वहेतुकं कर्म्म तदानीं कुतस्तत्त्वतो भविष्यति ॥ तस्मान्नास्ति कर्म्म स्वभावतः ॥ अत्राह ॥

विद्यन्त एवं क्लेशाः कर्म्माणि चेतत्कायसद्भावात् ॥ इह हि कृशकर्म्मणो देहाख्यं कार्य्यमुपलभ्यते ॥ यस्य च कार्य्यमुपलभ्यते तदस्ति ॥ अविद्यमानस्य खपुष्पादेः कार्य्यादर्शनादित्युच्यते स्युः कृशाः कर्म्माणि च यदि तत्कार्यदेहाविद्येरन् ॥ न तु विद्यन्त इति प्रतिपादयन्नाह ॥

कर्म्मक्लेशाश्च देहानां प्रत्यये समुदाहृता ।
कर्म्मक्लेशाश्च ते शून्या यदि देहेषु काकथा ॥

यथा कर्म्मकृशाश्च शून्यास्तथा प्रतिपादितं ॥ ततश्च कर्म्मकृशा यदा एव न सन्ति तदा तत्कार्य्याणां देहानामसत्त्वे काकथा भविष्यति ॥ नास्तित्वं तेषां पूर्व्वमेव सिद्धं यस्मात्तस्मान्नात्र कश्चिद्वक्तव्यविशेषोऽस्तीत्यभिप्रायः ॥ अत्राह ॥

विद्यत एव स्वभावतः कर्म्म तत्फलभोक्तृसद्भावात् ॥

यन्नास्ति न तस्य फलोपभोक्तास्ति ॥ तद्यथा गगणभूतफलस्येति ॥ अस्ति च कर्म्मणः फलाय भोक्ता अविद्यानिर्वृतो जन्तुस्तृष्णासंयोजनश्च सः ॥ स भोक्ता स च लोके तु अन्यो नच स एव सः । तत्राविज्ञानतमः संमोह इति पर्य्यायाः । अविद्यया निर्वृश्चादितः पञ्चगतिकसंसारे पुनः पुनर्जायत इति जन्तुः सत्त्वः पुद्गलः प्राणातीतस्यैव पर्य्यायाः । तृष्णा रागः शक्तिविशक्तिश्चेति पर्य्यायाः संयोजनं बन्धनं । तृष्णासंयोजनमस्येति तृष्णासंयोजनः तृष्णाबन्धन इत्यर्थः । यथोक्तं सूत्रे ॥

अविद्या निर्वृताः सत्त्वाः तृष्णासंयोजना इति ॥

अथच पुनरिदं पापं कर्म्म स्वयमेव कृतमस्य स्वयमेव विपाकः प्रत्यनुभवितव्य इति वचनात् ॥ स च भोक्ता कर्म्मफलस्य स च कर्त्तुरन्यो न च स एव सः । तत्तान्यत्तान्यत्वावाच्यत्वात् ॥ तस्मात् फलोपभोक्तृसद्भावादस्त्येव कर्म्मेति ॥ अत्रोच्यते ॥ स्यात् कर्म्मणः कर्त्ता कर्म्मफलस्य चोपभोक्ता यदि कर्म्म च स्यात् । न त्वस्ति कथं कृत्वा ।

न प्रत्ययसमुत्पन्नं नाप्रत्ययसमुज्झितम् ।
अस्ति यस्मादिदं कर्म्म तस्मात् कर्त्तापि नास्त्यतः ॥

कर्म्म चेन्नास्ति कर्त्ता च कुतः स्यात् कर्म्मजं फलम् ।
असत्येऽथ फले भोक्ता कुत एव भविष्यति ॥

यदि कर्म्मनाम किञ्चित् स्यात् तत्प्रत्ययसमुत्पन्नं वा भवेत् ॥ प्रत्ययसमुत्पन्नम्वा ॥ यदि तावत्प्रत्ययसमुत्पन्नमिष्यते तन्न युक्तं प्रत्ययपरीक्षायामुक्तदोषत्वात् ॥ अथाप्रत्ययजनितं निर्हेतुकं

तदपि चैतावषति कार्य्यक्षाकारणं स्याद्यादिनामकर्म्मकारकपरीक्षायां विस्तरेण प्रतिपादितं। यतश्चैव प्रत्ययसमुत्पन्नस्याऽप्रत्ययसमुत्पन्नं वा कर्म्मेदं न सम्भवति ॥ यदा चैव कर्म्म च कर्त्ता च नास्ति तदा निर्हेतुकं कर्म्मजं फलं कुतो भविष्यतीति ॥ असति च फले कुत एव फलभोक्ता भविष्यतीति ॥ सर्व्वमेतत् स्वभावतोऽसंविद्यमानमेवेति विज्ञेयं ॥ अत्राह ॥ यद्येवं नैःस्वाभाव्यं भावानां व्यवस्थापितं भवेत् ॥ यत्तद्येतदुक्तं भगवतास्वयं कृतस्य कर्म्मणः स्वयमेव विपाकः प्रत्यनुभवितव्य इति तदेतत् सर्व्वमनुनान्यायेनापाकृतं भवति ॥ कर्म्मफलापवादाच्च प्रधानो नास्तिको भवानित्युच्यते ॥ न वयं नास्तिकाः नास्तित्वद्वयवाद निरासने तु वयं निर्व्वाणपुरगामिनमद्वयपथमविद्योतयामः। न च वयं कर्म्मकर्तृफलादिकं नास्तीति ब्रुमः किन्तर्हि निःस्वभावमेवेति व्यवस्थापयामः॥ अथ मन्यसे निःस्वभावानां भावानां व्यापारकरणानुपपत्तेस्तदेवस्य एव दोष इति ॥ एतदपि नास्ति। सस्वभावानामेव व्यापारदर्शनानिःस्वभावानामेव व्यापारादर्शनान्निःस्वभावानामेव च व्यापारदर्शनात्॥ तथा हि निःस्वभावा एव सतो घटादयो लोके स्वकार्य्यकृता उपलभ्यन्ते ॥ अपि वा युष्मान्दृष्टान्तोत् स्पष्टतराद्यमर्थोऽवसीयतां। यथा निर्म्मितकंशास्तानिर्म्मिमीतद्धि संपदानिर्म्मितानि निर्म्मिमीतान्यं स च निर्म्मितकः पुनः तद्यथैकं निर्म्मितकं शास्ता बुद्धो भगवानृद्धिसंपदा ऋद्धि प्रभावेन निर्म्मिमीत स चापि निर्म्मितकः पुनर्योऽयं बुद्धेन भगवता निर्म्मितः स पुनर्भूयोऽन्यपरं निर्म्मितकं निर्म्मिमीत। तत्र य एष निर्म्मितकोऽपरस्यानिर्म्मितकस्य निर्म्माता सशून्यो नः स्वभावः तथागतस्वभावरहित इत्यर्थः॥ यश्चायमपरोनिर्म्मितकायो निर्म्माणेन निर्म्मितकोऽभावेऽपि शून्यो निःस्वभावः तथागत स्वभावरहित इत्यर्थः। यत्रात्र निःस्वभावानां निःस्वभावकार्य्यकृत्यं कर्म्मकर्तृव्यपदेशश्च भवति ॥ तथा निर्म्मितकाकारः कर्त्ता यत्कर्म्म तत्कृतं॥ तद्यथा॥ निर्म्मितानान्यानिर्म्मितानिर्म्मितस्तथा यो ह्यत्र कर्म्मणः कर्त्ता स निर्म्मितकाकारः॥ स्वभावशून्यः तेन च स्वभावशून्येन स्वतन्त्रः कर्त्ता यत्किञ्चित्कर्म्म क्रियते तदपि स्वभावशून्यं॥ तद्यथा॥ निर्म्मितको नान्यो निर्म्मितको निर्म्मितस्तथा वेदितव्यः। यथोक्तमागमे॥

एकस्य भाषमाणस्य सर्व्वे भाषन्ति निर्म्मिताः।
एकस्य तूष्णीभूतस्य सर्व्वे तूष्णीभवन्ति हि॥

तस्मादद्वयवादिनां माध्यमिकानां कुतो मिथ्यादर्शनं। उक्तं चायं समाधिराजः।

यदसतत कथां कथेति नाथो
वीथिगातो मनुजो न क्षपायमानः।
निर्म्मितु जिनु निर्म्मिनिता
विचरति तेषु पुणीत बुद्धधर्म्मान्॥

प्राणिशतसहस्रतं श्रुनित्वा
प्रणिदधिविन्तु वराग्रबुद्धज्ञाने ।
कदचेयलभि ज्ञानमेव रूपमाणयुक्ता
त्यजिनोऽस्य व्याकरोति ॥

रश्मिशतसहस्र अप्रमेयानरश्मि विपाकदतरेहि धर्म्मराजा ।
सर्वि निरयशीतला भवन्ति दुःख अपनीत सुखं भवेदयन्ति ।
धर्म्म दशबलप्रभाषित तत्रा मनु मनुजान विशुद्धभोति ॥
चचुरित्यादिकंचित्तस्यहं जनयन्ति ।
तत्र कालपममचिन्तियते हिरब्धलाभः ॥

यदि जिननिमन्त्रितो नरेन्द्रो नवधर्म्मेन्त तस्य लक्षणाया इत्यादि विस्तरे तथा आर्य्यअमलकीर्त्तिनिर्द्देशे तं निर्म्मितबोधिसत्त्वगन्धसुगन्धायालोकधातुत्रयतथागतापभुक्तशेषं भाजमानीतं नानाव्यञ्जनखाद्यादिसम्प्रयुक्तं पृथक्पृथग्विविधरसमेकभाजनेन सर्व्वं तद्बोधिसत्त्वसङ्घराजराजाभ्यो पुरोहितान्तःपुरदौवारिकसार्थवाहादिजनपदं सन्तर्प्य प्रीत्याकारम महासमाधिं लम्भयामासेति ॥ विनायकबलं निर्म्माणं दृष्टान्तेननैःस्वभाव्यदर्शनमुपद्यमानरूपमपि चामीभ्यो दृष्टान्तेभ्यः स्फुटां नैव भाव्यं भावनां प्रतीयतामिति प्रतिपादयन्नाह ॥

क्लेशाः कर्म्माणि देहाश्च फलानि च ।
गन्धर्व्वनगराकारा मरीचिस्वप्नसन्निभाः ॥

तत्र क्लेशा रागादयः क्लिश्यन्ति सत्त्वचित्तसन्तानानीति कृत्वा । कर्म्माणि कुशलाकुशलादीनि देहाः शरीराणि कर्त्तार आत्मानः फलानि विपाकाधिपत्यनिष्यन्दादीनि ॥ तत्र ते क्लेशादयोऽर्थागन्धर्व्वनगराकारादिवन्निःस्वभावा वेदितव्याः । तस्मान्माध्यमिकानामेव भावानां अभावानाभ्युपगमाच्छाश्वतोच्छेददर्शनद्वयप्रसङ्गो नास्तीति विज्ञेयम् ॥ अत्र च कर्म्मफलसम्बन्धविचारकुत्राद्यशेषोक्तय परिहारा मध्यमका चैतद्विस्तरेणावशेषो यथोक्तमार्य्यरत्नकूटसूत्रे । पञ्च च भिक्षुशतानि ध्यानलाभान्युच्छ्रायासनेभ्यः प्रक्रान्तानि इमां गम्भीरां धर्म्मदेशनामनवबुध्यमानान्यनवेतरेभ्यो नच गाहयमानान्यमधिमुच्यमानानि ॥ भगवानाह ॥
तथा ह्येते काश्यप भिक्षवो आभिमानिका इमामनाश्रवं शीलविशुद्धिं नावतरन्ति नावगाहन्ते नाधिमुच्यन्ते उत्त्रस्यन्ति सन्त्रस्यन्ति सन्त्रासमापद्यन्ते ॥ गम्भीरः काश्यप गाथाभिर्निर्हारो गम्भीरा च बुद्धानां भगवतां बोधिः सा नशक्याऽनवरोपितकुशलमूलैः सत्त्वैः पापमित्रपरिगृहीतैरनधिमुक्तिबहुलैरधिमोक्तुं ॥ अपि चैतानि काश्यप पञ्च भिक्षुशतानि काश्यप तस्य तथागतस्य प्रवचनेऽन्यतीर्थिकश्रावका अभवन् ॥ तैरेव तस्य काश्यपस्य तथागतस्यान्तिकादुपारम्भा-

भिप्रायैः एषा धर्म्मदेशना श्रुताश्रुत्वा चैकचित्तप्रसादालब्धा॥ एवं तैर्वागभाषिता आश्चर्य्यं यावन्मधुरप्रियमाणा काश्यपस्तथागतोऽर्हन्सम्यक्सम्बुद्ध इति॥ तत्र ते नैकचित्तप्रसादेन-प्रतिलम्भेन कालगतास्त्रयस्त्रिंशेषु देवेषु प्रपन्नास्ते तेच्युताः समाना इहाप्रपन्नास्तेनैव च हेतुना॥ इह मम शासनप्रव्रजितास्तान्येतानि काश्यप पञ्चभिक्षुशतानि दृष्टिप्रस्कन्धानी मां गम्भीरां धर्म्मदेशनां नावतरन्ति नावगाहन्ते नाधिमुच्यन्ते उत्त्रस्यन्ति सन्त्रस्यन्ति सन्त्रा-समापद्यन्ते। कृतं पुनरेषासनया धर्म्मदेशनया परिकर्म्मणो भूयो दुर्गतिविनिपातं गमिष्यन्ति॥ एभिरेव च स्कन्धे परिवास्यन्ति॥ अथ खलु भगवानायुष्मन्तं सुभूतिमामन्त्रयते स्म॥ गच्छ सुभूते एतान् भिक्षून् संज्ञपय॥ सुभूतिराह॥ भगवता एव तावदेतद्भाषितं विलो-कयन्ति कः पुनर्वादो मम॥ अथ भगवांस्तस्यां वेलायां येन मार्गेणैते भिक्षवो गच्छन्ति स्म तस्मिन् मार्गे द्वौ भिक्षू मिमीते स्म॥ अथ तानि पञ्चभिक्षुशतानि येन मार्गेण द्वौ भिक्षु निर्म्मितकौ तेनोपसंक्रामन्ति स्म। उपसंक्रम्यतदवोचत् कुत्रायुष्मन्तौ गमिष्यथः। तावेवो-चताम्॥ गमिष्याव आवां मरण्यायतनेषु तत्र ध्यानसुखस्पर्शविहारैर्विहरिष्यावः॥ तानापि पञ्चभिक्षुशतान्येतदवोचन्॥ वयमप्यायुष्मन्तौ भगवतो धर्म्मदेशनां नावतरामो नावगाहामहे नाधिमुच्यामहे उत्त्रस्यामः सन्त्रस्यामः सन्त्रासमापद्यामहे॥ तेन वयं मरण्यायतनेषु ध्यानसुखस्पर्शविहारैर्विहरिष्याम इति॥ निर्म्मितकावूचेवोचताम्। तेन ह्यायुष्मन्तः सङ्गा-स्यामो न विवदिष्यामः अविवादपरमा हि श्रमणधर्म्माः यदिदमायुष्मन्त उच्यन्ते। निर्व्वाण-मिति कतमः स धर्म्मो यः परिनिर्व्वास्यति॥ कश्चित् पुनरत्र काय आत्मा वा सत्त्वो जीवो जन्तुर्व्वा योषा वा पुरुषो वा पुद्गलो वा मनुजो वा मानवो वा यः परिनिर्व्वास्यति॥ तस्य वा क्षयात् परिनिर्व्वाणमवोचन्॥ रागद्वेषमोहक्षयात् परिनिर्व्वाणम्॥ निर्म्मितकौ च वोचतां किं पुनरायुष्मतां सम्विद्यन्ते रागद्वेषमोहक्षयात् परिनिर्व्वाणं॥ निर्म्मितकौ चावो-चतां किं पुनरायुष्मतां सम्विद्यन्ते रागद्वेषमोहा यान् क्षयिष्यथः। तेऽवोचन्। न तेध्यात्मं न बहिर्द्धारोभयमन्तरेणोपलभ्यन्ते। नापि ते परिकल्पिता उत्पद्यन्ते निर्म्मितका ववोचतां तेन ह्यायुष्मन्तो माकल्पयत माविकल्पयत। यदा चायुष्मन्तो न कल्पयिष्यथ न विकल्पयिष्यथ तदा न वच्यथ न विरच्यथः यश्चारक्तोऽपि रक्तः सशान्त इत्युच्यते॥ शीलमायुष्मन्तो न संसरति न परिनिर्व्वाति समाधिः प्रज्ञाविमुक्तिज्ञानदर्शनमायुष्मन्तो न संसरति न परिनिर्व्वाति। एभि-श्चायुष्मन्तो धर्म्मैर्निर्व्वाणं सूच्यते॥ एते च धर्म्माः शून्या विविक्ता अग्राह्या निर्म्महा प्रजहि, चैतानायुष्मन्तः संज्ञापयदुत परिनिर्व्वाणमिति॥ याच संज्ञायां संज्ञा काङ्क्षं साचसंज्ञाया संज्ञां परिज्ञासीष्ठ॥ याहि संज्ञायाः संज्ञां परिजानाति॥ संज्ञाबन्धनमेवास्य तद्भवति॥ संज्ञां वेदपि तन्निरोधसमापत्तिमायुष्मन्तः समापद्यध्वम्। संज्ञा वेदपि तन्निरोधसमापत्ति समापन्नस्य भिक्षवो नास्त्युत्तरीकरणीयमिति॥ वदावः॥ अस्मिन् खलु पुन धर्म्मपर्य्याय-निर्म्मितकभिक्षुभ्यां भाष्यमाणे तेषां पञ्चानां भिक्षुशतानामनुपादायास्रवेभ्यश्चित्तानि विमु-क्तानि। ते विमुक्तचित्ता येन भगवांस्तेनोपसंक्रान्ता उपसंक्रम्य भगवतः पादौ शिरोभिरभि-वन्द्यैकान्ते न्यषीदन्॥ अथायुष्मान् सुभूतिस्तान् भिक्षूनेतदवोचत् कुत्रायुष्मन्तो गताः कुतो वा आगता तेऽवोचन्॥ न क्वचिद्गमनाय न कुतश्चिदागमनाय भदन्त सुभूते भगवता धर्म्मा-

देशितः ॥ आह ॥ को नाम युष्माकं शास्ता आहुः यानोत्पन्नो न परिनिर्व्वास्यति ॥ आह ॥ कथं युष्माभिः धर्म्मः श्रुतः ॥ आह ॥ न बन्धनाय न मोक्षाय ॥ आह ॥ केन यूयं विनीताः। आहुः ॥ यस्य न कायो न चित्तम् ॥ आह ॥ कथं यूयं प्रयुक्ताः ॥ आहुः नाविद्याप्रहाणाय न विद्योत्पादनाय ॥ आह ॥ कस्य यूयं श्रावकाः ॥ आहुर्येन प्राप्तं नाभिसंबुद्धम् ॥ आह ॥ केन युष्माकं सब्रह्मचारिणः ॥ आह ॥ यत्रैधातुकेनोपविचरन्ति ॥ आह ॥ कियच्चिरेणा-युष्मन्तः परिनिर्व्वास्यन्ति ॥ आहुः ॥ यदा तथागतनिर्म्मिताः परिनिर्व्वास्यन्ति ॥ आह ॥ कृतं युष्माभिः करणीयम् ॥ आहुः ॥ अहंकारममकारपरिज्ञानतः ॥ आह ॥ क्षीणा युष्माकं क्लेशाः ॥ आहुः ॥ अत्यन्तक्षयात् सर्व्वधर्म्माणां ॥ आह ॥ धर्षितोयुष्माभि मारः ॥ आहुः ॥ स्कन्धमारानुपलब्धितः ॥ आह ॥ परिचरितो युष्माभिः शास्ता ॥ आहुः ॥ न कायेन न वाचा न मनसा ॥ आह ॥ विशोधिता युष्माभिर्दाक्षिणीया भूमिराहुः। अग्राहतोऽप्रतिग्राहतः ॥ आह ॥ तीर्णो युष्माभिः संसारः। आहुः। अनुच्छेदतोऽशाश्वतः ॥ आह॥ प्रतिपन्ना युष्मा-भिर्दाक्षिणीया भूमिः ॥ आहुः ॥ सर्व्वग्राहविमुक्तितः ॥ आह ॥ किं गामिन आयुष्मन्तः ॥ आहुः ॥ यं गामिनस्तथागतनिर्म्मिताः ॥ इति ह्यायुष्मतः सुभूते परिपृच्छतस्तेषां भिक्षूणां विसर्ज्जयतां तस्यां पर्षद्यष्टानां भिक्षुशतानामनुपादायास्रवेभ्यश्चित्तानि विमुक्तानि द्वात्रिंशतश्च प्राणिसहस्राणां विरजो विगतमलं धर्मेषु धर्म्मचक्षुर्विशुद्धमिति ॥

इत्याचार्य्यचन्द्रकीर्त्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ कर्म्मपरीक्षा नाम सप्तदशमं प्रकरणम् ॥०॥

---

अत्राह ॥ यदि क्लेशाः कर्म्माणि च देहाश्च कर्त्तारश्च फलानि च सर्व्वमेतत् ॥ न तत्त्वं ॥ केवलं तु गन्धर्व्वनगरादिवदतत्त्वमेव सत्तत्त्वाकारेणप्रतिभासते ॥ बालानां किं पुनरत्र तत्त्वं कथं वा तत्त्वस्यावतार इति ॥ उच्यते ॥ आध्यात्मिकबाह्याशेषवस्त्वनुपलम्भेनाध्यात्मबहिश्च य सर्व्वथाहंकारममकारपरिक्षय इदमत्रतत्त्वं। तत्त्वावतारः पुनः सत्कायदृष्टिप्रभानशेषान् क्लेशांश्च धिया विपश्यन्॥ आत्मानमस्याविषयं च बुद्धायाङ्गीकरोत्यात्मनिषेधमेवेत्यादी नामकायदृष्टिमूलकमेव संसारमनुपश्यं स्तस्याश्च सत्कायदृष्टेरालम्बनमात्मानमेव समनुपश्यन् आत्मानुपलम्भाश्च सत्कायदृष्टिप्रहाणं तत्प्रहाणाच्च सर्व्वक्लेशव्यावृत्तिं समनुपश्यन् प्रथमेतर आत्मनमेवावपरीक्षते ॥ कोयमात्माहंकारविषयः ॥ स चायमहंकारस्य विषयः परिकल्प्यमानः स्कन्धस्वभावो वा भवेत् स्कन्धव्यतिरिक्तो वा ॥ आधाराधेयतद्वत्प्रज्ञाणा-पक्षेकत्वान्यत्वे पक्ष एवान्तर्भावात् संक्षयस्यैव विवक्षितत्वादेकत्वान्यत्वे पक्षद्वयप्रतिषेध-वात्मनिषेधमालब्धुकामः ॥ आचार्य्य आह ॥

आत्मा स्कन्धो यदि भवेदुदयव्ययभाग्भवेत्।
स्कन्धेभ्योऽन्यो यदि भवेत्भवेदस्कन्धलक्षणः।

किमर्थं पुनरन्यत्र तथागतपरीक्षायामग्नीन्धनपरीक्षायां वयश्च पक्षा उपन्यस्ता इह तु पुनः पक्षद्वयमेवेत्युच्यते येनैव तत्र प्रकरणद्वये पञ्च पञ्च पक्षा निर्दिष्टा अतएवात्र निर्दिष्टत्वान्न पुनरिह निर्दिश्यन्ते ॥ संक्षेपेण तु पक्षद्वयमुपन्यस्यत इति ॥ तत्र यदि स्कन्ध आत्मेति परिकल्प्यते तदोदयव्ययभाक्त्वात्तीव विनाशी वात्मा प्राप्नोति स्कन्धानामुदयव्ययभाक्त्वान्न चैवमिष्यते ॥ आत्मानेकदोषप्रसङ्गादक्ष्यति ॥

नाप्यभूत्वा समुत्पन्नो दोषोह्यत्र प्रसज्यते ।
कृतको वा भवेदात्मा संभूतोवाप्यहेतुक इति ॥

तथा ॥

नचोपादानमेवात्मा व्यतितत्समुदेति च ।
कथं हि नात्मोपदानमुपादाताभविष्यति इति ॥

किं च स्कन्धा आत्मा चेदतस्तेषेदवश्यं नाशोत्पादी निवृत्तः प्राक् क्षणेषु कर्तुर्नाशात्तत् फलाभाव एव भुञ्जीतात्मनार्जितं कर्म्म चान्य इत्यादिना सापेक्षपरिहारेण विहितविचारादपि पक्षो बोद्धव्य इति नेह पुनर्विस्तरः प्रपञ्च आरभ्यते ॥ एवं तावत्स्कन्धा आत्मा न भवति स्कन्धव्यतिरिक्तोऽपि न युज्यते ॥ यदि हि स्कन्धेभ्य आत्माभवेदस्कन्धलक्षणो भवेत् ॥ यथा हि गौरन्योऽश्वो न गोलक्षणो भवति ॥ एवमात्मापि स्कन्धव्यतिरिक्तः परिकल्प्यमानोऽस्कन्धलक्षणो भवेत् ॥ तत्र स्कन्धाः संस्कृतत्वाद्धेतुप्रत्ययसम्भूताउत्पादस्थितिभङ्गलक्षणाः ॥ तत्र स्कन्धलक्षण आत्मा भवेत् ॥ भवन्मतेनोत्पादस्थितिभङ्गलक्षणो युक्तः स्यात् ॥ यश्चैवं स न भवति सोऽविद्यमानत्वादसंस्कृतत्वाच्च खपुष्पवन्निर्व्वाणवन्धोनैवात्मव्यपदेशं प्रतिलभते ॥ नाप्यहंकारविषयत्वेन युज्यत इति ॥ स्कन्धव्यतिरिक्तोऽप्यात्मा न युज्यते ॥ अथवायमन्यार्थः ॥ यद्यात्मा स्कन्धव्यतिरिक्तः स्यात् सोऽन्यलक्षणः स्यात् ॥ रूपणानुभवनिमित्तोद्ग्रहणाभिसंस्करणविषयप्रतिविज्ञप्तिलक्षणाः पञ्चस्कन्धाः, आत्मा च रूपादिविज्ञानस्कन्धेभ्यो व्यतिरिक्त इष्यमाणः पृथग्लक्षणसिद्धः स्यात् पृथग्लक्षणसिद्धश्च गृह्यते रूपादिवदर्चित्तं न च गृह्यते ॥ तस्मात् स्कन्धव्यतिरिक्तोऽपि नास्ति ॥

ननु च तीर्थिकाः स्कन्धेभ्यो व्यतिरिक्तमात्मानं प्रतिपन्ना भिन्नलक्षणमाचक्षते ॥ तस्मात्तेषां स वाधक एवायं विधिरिति ॥ यथा च तीर्थिका आत्मनो भिन्नलक्षणमाचक्षते । तथोक्तं मध्यमका चत्वार आत्मातीर्थैः कल्प्यते नित्यरूपोऽकर्त्ता भोक्ता निर्गुणो निष्क्रियश्च किञ्चित् किञ्चित् भेदमाश्रित्य तस्य भेदंजाताः प्रक्रियातीर्थिकानामित्यनेन । सत्यमुपयन्ति तीर्थिकाः स्कन्धव्यतिरिक्तस्य लक्षणं न पुनस्तत्स्वरूपतः । आत्मानमुपलभ्य तस्य लक्षणमाचक्षते । किं तर्हि यथावदुपायप्रज्ञप्त्या न च गमनेनाममात्रकमेवात्मानं आसादप्रतिपद्यमानाः सम्वृतिसत्यादपि परिभ्रष्टा मिथ्याकल्पनयैव केवलमनुमानाभासमात्रविप्रतिलब्धाः सन्तो मोहात् परिकल्पयन्ति ॥ आत्मानन्तस्य लक्षणमाचक्षते ॥ तेषां च कर्म्मकारकपरीक्षादिष्वात्मोपादानयोः परस्परापेक्षिकीं सिद्धिं ब्रुवता संवृत्यापि प्रतिषेधो विहित एव उक्तं च ॥

यथादर्शमुपादाय स्वमुखप्रतिबिम्बकं।
दृश्यते नाम तच्चैव न किञ्चिदपि तत्त्वतः॥
अहंकारस्तथास्कन्धानुपादायोपलभ्यते।
न च कश्चित् स तत्त्वेन स्वमुखप्रतिबिम्बवत्॥
यथादर्शमनादाय स्वमुखप्रतिबिम्बकं।
न दृश्यते तथा स्कन्धाननादायाहमित्यपि॥

एवं विधानार्थश्रवणात्धर्म्मचक्षुरवाप्तवान्॥ आर्य्यानन्दः स्वयं चैव भिक्षुभ्योऽभीक्ष्णमुक्तवानिति॥ अतो न पुनस्तत्प्रतिपादनार्थं यत्न आलभ्यते॥ उपादाय प्रज्ञप्यमान एवं विद्याविपर्य्यासानुगतानामात्माभिनिवेशास्पदभूतो मुमुक्षुभिर्विचार्य्यते॥ यस्मिदं स्कन्धपञ्चकमुपमानत्वेन प्रतिभासते। किमसौ स्कन्धलक्षण उतास्कन्धलक्षण इति॥ सर्व्वथा च विचारयन्तो मुमुक्षवो नैवमुपलभन्ते भावस्वभावतः तदेषां आत्मन्यसति वात्मीयं कुत एव भविष्यति॥ आत्मानुपलम्भादात्मप्रज्ञप्त्युपादानं स्कन्धपञ्चकमात्मीयमिति सुतरां नोपलभन्ते॥ यथैव हि दग्धे रथे तदङ्गान्यपि दग्धत्वान्नोपलभन्ते॥ एवं योगिना यदैवात्मानं प्रतिपद्यन्ते तदैवात्मीयस्कन्धवस्तुनैरात्म्यमपि नियतं प्रतिपद्यन्ते। यथोक्तं रत्नावल्यां॥

अहङ्कारोद्भवाः स्कन्धाः साहङ्कारोऽनृतार्थतः।
बीजं यस्यानृतं तस्य प्ररोहः सत्यतः कुतः॥
स्कन्धानसत्यान्दृष्ट्वैवमहंकारः प्रहीयते।
अहङ्कारप्रहाणाच्च न पुनः स्कन्धसम्भव इति॥

यथैव हि ग्रीष्ममध्याह्नकालावसानमासादितस्य विष्णुनेनभो मध्यदेशमाचिक्रंसोरौपत्यरिभ्यर्ष्य पटुतरहुतभुग्वितत्तस्फुलिङ्गानि विरुक्ततरमहीमण्डलोत्तापनपरान् प्रदीप्तकिरणस्य किरणैर्प्रतीत्य विरुक्ततरमेव निर्दृशं चासाद्यविपरीतस्य दर्शनमस्य सलिलकाना मरीचय उपलभ्यमाना विदूरदेशावस्थितानां जन्मवतामति विप्रसन्नाभिनीलजलाकारं प्रत्ययमादधति न तु तत्समीपगतानां। एवमिहापि यथावदवस्थितात्मात्मीयपदार्थतत्त्वदर्शनविदूरदेशान्तरस्थितानां संसाराध्वनि वर्त्तमानानामविद्याविपर्य्यासानुगमात्मात्मीय एवास्कन्धसमारोपः सत्यतः प्रतिभासमानः पदार्थतत्त्वदर्शनेसमीपस्थानां न प्रतिभासते। यथोक्तमाचार्य्यपादैः॥

दूरादालोकितं रूपमासन्नैर्दृश्यते स्फुटं।
मरीचिर्यदि वारि स्यादासन्नैः किं न गृह्यते॥

दूरीभूतो यथा भूतो लोकोऽयं दृश्यते यथा।
न दृश्यन्ते तदा स्कन्धा निमित्तो मरीचिवत्॥

"मरीचिस्तोयसदृशी यथा वा भावनार्थतः।
स्कन्धास्तथात्मसदृशा आत्मनो नापि तेऽर्थत इति॥"

अतएवात्मात्मीयानुपलम्भात् परमार्थदर्शनसमीपस्थो योगी नियतं भवति॥ निर्म्ममो निरहङ्कारः। ममाहामात्मनीनैर्ययोः। आत्मनिर्हितमात्मनीनं स्कन्धपञ्चकमात्मीयमित्यर्थः। आत्मनोऽहङ्कारविषयस्य अभावे च स्कन्धादेर्वस्तुनो ममकारविषयस्य अभावादनुत्पादादनुपलम्भात् निर्म्ममो निरहङ्कारः च जायते योगी॥ ननु च योऽसावेवं निर्म्ममो निरहङ्कारश्च योगी भवति सतावदस्ति॥ सति च तस्मिन् सिद्ध आत्मा स्कन्धाश्चेति॥ नैतदेवं। यस्मा- न्निर्म्ममो निरहङ्कारश्च सोऽपि न विद्यते। निर्म्ममं निरहङ्कारं यः पश्यति न पश्यति॥ आत्मनि स्कन्धेषु च सर्व्वथानुपलभ्यमानस्वरूपेषु कुतस्तद्व्यतिरिक्तोऽपरपदार्थो भविष्यति॥ योऽसौ निर्म्ममो निरहङ्कारश्चेति यस्त्वेवमसं विद्यमानस्वरूपं निर्म्ममं निरहङ्कारं च पश्यति स तत्त्वं न पश्यतीति विज्ञेयं॥ यथोक्तं भगवता॥

शून्यमाध्यात्मिकं पश्य पश्य शून्यं बहिर्गतम्।
न विद्यते सोऽपि कश्चिद् यो भावयति शून्यताम्॥

तथा॥

शान्त प्रशान्तय चिन्तयि धर्म्मान् सोऽपि कुमार्गं प्रपन्नकुबालः।
अक्षरकीर्त्तितशून्यकधर्म्मास्तव अनचर उक्ताः॥
शान्त प्रशान्तय चिन्तयि धर्म्मान् सोऽपि च चिन्तन जातु न भूतः।
चित्तवितर्कण सर्व्विप्रपञ्चा तस्य अचिन्तिय बुध्यथ धर्म्मानिति॥

तथा॥

स्कन्धस्वभावतु शून्यविविक्तो धातुस्वभावतु शून्यविविक्तः।
योपि चरेत् सोपि शून्यस्वभावो ज्ञानवतो नतु बाल उनस्यति॥

तदेवं।

ममेत्यहमिति क्षीणे बहिर्वाध्यात्ममेव च।
निरुद्धत उपादानं तत् क्षयात् जन्मनः क्षयः॥

सत्कायदृष्टिमूलकाः सत्कायदृष्टिसमुदयाः सत्कायदृष्टिहेतुकाः सर्व्वक्लेशाः सूत्र उक्ताः सा च सत्कायदृष्टिरात्मीयानुपलम्भात् प्रहीयते तत्प्रहाणाच्च कामोपादानदृष्टिशीलव्रतात्मवादोपादानचतुष्टयं प्रहीयते उपादानक्षयाच्च जन्मनः पुनर्भवलक्षणस्य क्षयो भवति ॥ यतश्चायं जन्मनिवृत्तिक्रम एवं व्यवस्थापितः तस्मात् कर्म्मक्लेशक्षयान्मोक्ष इति स्थितम् ॥ कर्म्मक्लेशानां तर्हि कस्य क्षयात् परिक्षय इति वक्तव्यमुच्यते ॥ कर्म्मक्लेशाविकल्पतः ॥ ते प्रपञ्चात् प्रपञ्चस्तु शून्यतायां निरुध्यते ॥ अयानिशो हि रूपादिकं विकल्पयतो बालपृथग्जनस्य क्लेश उपजायते रागादिकः । वक्ष्यति ॥ XXIII. 1.

सङ्कल्पप्रभवो रागो द्वेषो मोहश्च कथ्यते ।
शुभाशुभविपर्य्यासात् सम्भवन्ति प्रतीत्य हि ॥

उक्तञ्च सूत्रे ।

कामं जानामि तन्मूलं सङ्कल्पात् किल जायते ।
न त्वां सङ्कल्पयिष्यामि ततो मे न भविष्यसीति ॥

एवं तावत् कर्म्मक्लेशा विकल्पतः प्रवर्त्तन्ते । ते च विकल्पा अनादिमत्संसाराभ्यस्तज्ञानज्ञेय — वाच्यवाचक-कर्त्तृकर्म्मकरणक्रियाघटपटमुकुटरथरूपवेदनास्त्रीपुरुषलाभालाभसुखदुःखयशोऽयशोनिन्दाप्रशंसादिलक्षणाद्विचित्रात् प्रपञ्चादुपजायन्ते स चायं लौकिकः प्रपञ्चो निरवशेषः शून्यतायां सर्व्वभावस्वभावशून्यतादर्शने सति निरुध्यते ॥ कथं कृत्वा ? यस्मात् सति हि वस्तुन उपलम्भे स्याद् यथोदितः प्रपञ्चजालम् । न ह्यनुपलभ्य बन्ध्यादुहितरं रूपलावण्ययौवनवतीं तद्विषयं प्रपञ्चमेव प्रपञ्चयन्ति रागिणः । नरामराः नचाताय्यं प्रपञ्चं तद्विषयमयोनिशो विकल्पमेव तारयन्ति ॥ न चानवतार्य्य कल्पजालमहं ममेत्यभिनिवेशात् सत्कायदृष्टिमूलकान् क्लेशगणानुत्पादयन्ति नचानुत्पाद्य — सत्कायदृष्ट्यात्मकान् क्लेशगणान् कर्म्माणि शुभाशुभानि कुर्व्वन्ति ॥ नचाकुर्व्वाणाः कर्म्माणि जातिजरामरणशोकपरिदेवदुःखदौर्मनस्यामसजंसममकत्व(स्य)लीभूतं संसारकान्तारमनुभवन्ति ॥ एवं योगिनोऽपि शून्यतादर्शनावस्थानिरवशेषस्कन्धधात्वायतनानि स्वरूपतो नोपलभन्ते ॥ नचानुपलभमाना वस्तुस्वरूपं तद्विषयं प्रपञ्चमेव तारयन्ति ॥ नचा नव तार्य्यतद्विषयं प्रपञ्चविकल्पमेव तारयन्ति ॥ नचा नव तार्य्यविकल्पं अहं ममेत्यभिनिवेशात् सत्कायदृष्टिमूलकं क्लेशगणमुत्पादयन्ति नचानुत्पाद्य सत्कायदृष्ट्यादिक्लेशगणं कर्म्माणि कुर्व्वन्ति ॥ नचाकुर्व्वाणाः जातिजरामरणाख्यं संसारमनुभवन्ति ॥ तदेवमशेषप्रपञ्चोपशमशिवलक्षणां शून्यतामागम्य यस्मादशेषकल्पनाजालप्रपञ्चविगमो भवति प्रपञ्चविगमाच्च विकल्पनिवृत्तिः विकल्पनिवृत्त्या चाशेषकर्म्मक्लेशनिवृत्तिः कर्म्मक्लेशनिवृत्त्या च जन्मनिवृत्तिः ॥ तस्माच्छून्यतैव सर्व्वप्रपञ्चनिवृत्तिलक्षणत्वान्निर्व्वाणमित्युच्यते ॥ यथोक्तं शतके ॥

धर्मं समासतोऽहिंसां वर्णयन्ति तथागताः ।
शून्यतामेव निर्वाणं केवलं तदिहोभयमिति ॥

आचार्य्यभाविकस्तु श्रावकप्रत्येकबुद्धानां यथोदितं शून्यताधिगममप्रतिपद्यमान वर्णयति ॥ अपरात्मन्नप्रतिपत्तिविषयसंस्कारकलापमात्रमनात्मीयमवलोकयत आ श्रावकस्यापि आत्मात्मीयवस्त्वभावाद्धर्म्ममात्रमिदं जायते म्रियते चेति दर्शनमुत्पद्यते अहंकारविषयो ह्यात्मा तदभावान्न क्वचिदाध्यात्मिकं वाह्यं वा वस्त्वस्तीति ॥ ममका नुपपत्तेनिर्म्ममो निरहङ्कारोऽहमिति ॥ नत्वरूपविनिश्चितिरूपजायतेऽन्यत्र व्यवस्थितात् प्रागेवाजातसर्व्वसंस्कारदर्शिनां निर्विकल्पप्रज्ञाचारविहारिणां महाबोधिसत्त्वानामिति अत आह ॥

निर्म्ममो निरहङ्कारो यश्च सोऽपि न विद्यते इति ॥

तदयमाचार्य्यो यथेवंविधे विषये ॥ नाचार्य्यपादमतानुवर्त्ती तथा प्रतिपादि मध्यमकावतारे दूरंगमायां तु धियाधिकं इत्यत्रेति ॥ न पुनस्तद्दूषणं यत्न आस्थीयते अतएवोक्तं ॥ भगवता आचार्य्याष्टसहस्रिकायां भगवत्यां श्रावकबोधिमभिसम्बोद्धुकामे संभूतेऽस्यामेव प्रज्ञापारमितायां शिक्षितव्यं ॥ प्रत्येकबोधिमभिसंबोद्धुकामेन सुभूतेऽस्यां प्रज्ञापारमितायां शिक्षितव्यं ॥ अनुत्तरासम्यक्सम्बोधिमभिसंबोद्धुकामेन सुभूते बोधिसत्त्व महासत्त्वेनास्यामेव प्रज्ञापारमितायां शिक्षितव्यमित्यादि ॥ आह च ॥ या इच्छती सुगत श्रावका अहं भवेयं प्रत्यकबुद्धा भविजात्तथा धर्म्मराजा इमु क्षान्तिरागेति न शक्नोति प्रा प्तुं यथा आरपारगमनीयं अतीव च दर्शीति ॥ अत्राह ॥ यद्येवमाध्यात्मिकवाह्यवस्त्व नुपलम्भादध्यात्मं वहिश्चाहं ममेति कल्पनाभ्यासानुत्पादस्तत्त्वं व्यवस्थापितं यत्त ह्येतदुक्तं भगवता ॥

आत्मा हि आत्मनो नाथः परो भवेत् ।
आत्मना हि सुदान्तेन स्वर्गं प्राप्नोति पण्डितः ॥
आत्मा हि आत्मनो नाथः परो भवेत् ।
आत्मा हि आत्मनः साक्षी कृतस्यापकृतस्य च ॥

तथार्य्यसमाधिराजे ॥ कृतं शुभं च न नश्यति कर्म्म आत्मना कृते च वेदयितव्यं । नो न्वितसंक्रमति कर्म्मफलस्यानाप्यहेतुकप्रत्यनुभावीति विस्तरः ॥ तत् कथं न निरुध्यत इत्युच्यते ॥ इदमपि किं नोक्तं भगवता ॥ नास्तीह सत्त्व आत्मा वा धर्म्मास्त्वेते सहेतुका इति ॥ तथाहि रूपं नात्मा रूपवान्नापि नात्मा रूपेनात्मा नात्मनि रूपम् ॥
एवं यावद्विज्ञानं नात्मा विज्ञानवान्नात्मा विज्ञानेनात्मा नात्मनि विज्ञानमिति ॥

ृशोपशमस्यैतदधिवचनं ॥ विपर्य्यासोपशम इति हेत्वारम्बणोपशमस्यैतदधिवचनं ॥
हेत्वारम्बणोपशम इत्यविद्याभवतृष्णोपशमस्यैतदधिवचनं ॥ अविद्याभवतृष्णोपशम इति ॥
अहंकार ममकारोपशमस्यैतदधिवचनं ॥ अहंकार ममकारोपशम इत्युच्छेदशाश्वतदृष्ट्युप-
शमस्यैतदधिवचनं ॥ उच्छेदशाश्वतदृष्ट्युपशम इति सत्कायदृष्ट्युपशमस्यैतदधिवचनं ॥ इति
शान्तमतयः कश्चिदारम्बणहेतुदृष्टिसंयुक्ताः संक्लेशाः प्रवर्त्तन्ते सर्व्वतः सत्कायदृष्टिमुत्पद्यन्ते
सत्कायदृष्ट्युत्पद्यन्ते सत्कायदृष्ट्युपशमात् सर्व्वदृष्ट्युपशम इति ॥ सर्व्वदृष्ट्युपशमात् सर्व्व-
प्रणिधानोपशम इति ॥ सर्व्वप्रणिधानोपशमात् सर्व्वक्लेशोपशमः ॥ तद्यथापि नाम शान्त-
मतेतत् वृक्षमूलोच्छिन्ने सर्व्वशाखापत्रफलानि शुष्यन्ति ॥ एवमेव शान्तमतसत्कायदृष्ट्युपशमात्
सर्व्वक्लेशा उपशाम्यन्ते । सत्कायदृष्टौ शान्तमतोऽपरीत्तायां सर्व्वोपादानोपक्लेशा उत्पद्यन्ते ॥
सत्कायदृष्टिपरिज्ञातापि न ॥ सर्व्वोपादानोपक्लेशा नोत्पद्यन्ते न बाधन्ते । शान्तमतिराह ॥
का नाम भगवन् सत्कायदृष्टिपरिज्ञा ॥ भगवानाह ॥ आत्मा समुत्थानं शान्तमतसत्काय-
दृष्टिपरिज्ञा स्वस्यासमुत्थानं जासमुत्थानं पुंगलासमुत्थानदृष्टिसमुत्थानं सत्कायदृष्टिपरि-
ज्ञानं खलु पुनः शान्तमत सा दृष्टिर्नाध्यात्मप्रतिष्ठिता न बहिर्वा प्रतिष्ठिता सा दृष्टिः
सर्व्वतोऽप्रतिष्ठिता या तस्याः प्रतिष्ठिता या दृष्टिरप्रतिष्ठितेति ज्ञानमियं शान्तमत सत्काय-
दृष्टिपरिज्ञा । सत्कायदृष्टिपरिज्ञेति शान्तमत शून्यताया एतदधिवचनं ॥ यच्छून्यतानु-
गामिकोत्कान्त्या तां दृष्टिं नो गृह्णाति इयमपि शान्तमतसत्कायदृष्टिपरिज्ञा सत्काय-
दृष्टिरिति ॥ शान्तमत शून्यतानिमित्ता प्रणिहितानभिसंस्काराजातानुत्पाददृष्ट्या तां दृष्टिं
नो गृह्णाति ॥ इयमपि शान्तमत सत्कायदृष्टिपरिज्ञा सत्काय इति शान्तमत अकाय
एष कषति न विकषति न विनोति नोपविनोति आदित एव तदभूतं परिकल्पितं ॥
यच्चाभूतं परिकल्पितं तन्न परिकल्पितं न परिकल्प्यते तन्न क्रियते न विपच्यते नो नोद्भाव्यते
नाध्यवस्यते ॥ तदुच्यते उपशम इति शान्तमतिराह ॥ उपशान्त उपशान्त इति भगवन्नुच्यते
कस्योपशमो उपशान्त इत्युच्यते ॥ भगवानाह ॥ आरम्बनतः शान्तमतचित्तं ज्वलति ॥
तन्नभूय आत्मस्वनीकरोति तन्न ज्वलति अज्वलन्नुपशान्त इत्युच्यते ॥ तद्यथापि नाम
शान्तमतोऽग्निरुपादाननाद्ग्वालेत्यनुपादानतः शाम्यति ॥ एवमवालम्बनश्चित्तं ज्वलति ।
अनालम्बनतः शाम्यति ॥ तत्र शान्तमत उपायकुशलोऽयं बोधिसत्त्वः प्रज्ञा पारमिता
परिशुद्ध आलम्बनसमतां च प्रजानाति ॥ कुशलमूलारम्बनं वशमयतीत्यादि ॥ अत्राह ॥
यदि बुद्धैर्भगवद्भिरेवात्मेति देशितं । नानात्मेति किं तर्हि देशितमिति ॥ उच्यते ॥

निवृत्तमभिधातव्यं निवृत्तिश्चित्तगोचरः ।
अनुत्पन्ना निरुद्धा हि निर्व्वाणमिव धर्म्मता ॥

इह यदि किञ्चिदभिधातव्यं वस्तु स्यात्तद्दिश्येत । यदा त्वभिधातव्यं निवृत्तिं वाच्यं
विषयो नास्ति ॥ तदा किञ्चिदपि नैव दिश्येत बुद्धैः ॥ कस्मात् पुनरभिधातव्यं नास्तीत्याह ॥
निवृत्तिः चित्तगोचर इति चित्तस्य गोचरः चित्तगोचरः ॥ गोचराविषय आरम्बण-

मित्यर्थः ॥ यदि चित्तस्य कश्चिद्गोचरः स्यात्तत्र किञ्चिन्निमित्तमध्यारोप्यं स्याद्वाचां प्रवृत्तिः। यदा तु चित्तस्य विषय एवानुपपन्नस्तदा क्व निमित्ताध्यारोपेण वाचां प्रवृत्तिः स्यात् ॥ कस्मात् परचित्तविषयो नास्तीति प्रतिपादयन्नाह ॥

अनुत्पन्ना निरुद्धा हि निर्व्वाणमिव धर्म्मता ॥

यस्मादनुत्पन्ना निरुद्धा हि निर्व्वाणमिव धर्म्मता धर्म्मस्वभावा धर्म्मप्रकृतिः व्यवस्थापिता तस्मान्न तत्र चित्तं प्रवर्त्तते ॥ चित्तस्याप्रवृत्तौ च कुतो निर्मिताध्यारोपः तदभावात् ॥ कुतो वाचां प्रवृत्तिः। अतश्च न किञ्चिद्बुद्धैर्भगवद्भिर्देशितमिति स्थितमविकलं ॥ अतएव वक्ष्यति ॥ सर्व्वोपलम्भोपशमनः शिवः न क्वचित् कस्यचित् कश्चिद्धर्म्मो बुद्धेन देशित इति ॥ एवञ्चैतत् ॥ अथवायमन्यः पूर्व्वपक्ष· यदुक्तं प्रपञ्चस्तु शून्यतायां निरुध्यत इति ॥ कथं पुनः प्रपञ्चस्य शून्यतायां निरोध इत्युच्यते ॥ यस्मान्निवृत्तमभिधातव्यमित्यादि पूर्व्ववद्व्याख्येयं अथवा यदेतदुक्तं प्रागात्मिकवाह्यवस्तुनपरम्भेनाध्यात्मं वहिश्च यः। सर्व्वदाऽहङ्कारममकार- परिक्षयः इदमत्र तत्त्वमिति। कीदृशं तत् किन्तदुक्तुं वा शक्यते तस्मान्निवृत्तमभिधातव्यं निवृत्तचित्तगोचरस्तत्र तत्त्वत इति वाक्यशेषः ॥ किं पुनः कारणं तत्र तत्त्वनिवृत्तमभि- धातव्यं निवृत्तचित्तगोचर इत्याह ॥ अनुत्पन्ना निरुद्धा हि निर्व्वाणमिव धर्म्मतेति पूर्व्वकमेवमेव व्याख्यानं योज्यं ॥ अतएवोक्तमार्य्य तथागतगुह्यसूत्र ॥ यां च शान्तमतरात्रिं तथागतानुत्तरां सम्यक् सम्बोधिमभिसम्बुद्धो यां च रात्रिमुपादाय परिनिर्व्वास्यति ॥ अस्मिन्नन्तरे तथागतेनैकाक्षरमपि नोदाहृतं न प्रव्याहृतं नापि प्रव्याहरिष्यति ॥ कथं तर्हि भगवता सकलसुरासुरनरकिन्नरसिद्धविद्याधरोरगप्रभृतिविनेयजनेभ्यो विविधप्रकारधर्म- देशना देशिता ॥ एकक्षणवागुदाहारेणैव तत्त्यक्तनभस्तमोहरणी बहुविधबुद्धिनलिनीवन- विवोधिनी जरामरणसरित्सागरोच्छोषिणी कल्पकालानलसमाकरभिन्नविसरदूषिणी शरद- रुणमहाप्रभेत्याह ॥ तदेव सूत्रं ॥

यथा यन्त्रकृतं तूर्य्यं वाद्यते पवनेरितं।
वाच वादकः कश्चिन्निश्चिरन्त्यथ च स्वराः ॥
एवं पूर्व्वं सुशुद्धत्वात् सर्व्वसत्त्वाशयेरितः।
वाग्निश्चरति बुद्धस्य नवात्मास्तीह कल्पना ॥
प्रतिश्रुत्यादयः शब्दा नाध्यात्मं न वहिः स्थिताः।
वागप्येव नरेन्द्रस्य नाध्यात्मं न वहिः स्थिता ॥

तथादवतावादनिदुन्दुभिदिव्यकर्म्मपाकनिवृत्तमरूणां देवप्रमत्तविहारिणां स्वात्वा दुन्दुभि घोषप्रमुश्चिनभोता ॥

सर्व्वे अनित्य अशाश्वतका कामा।
ईश्वर अध्रुवफल स्वभावाः॥
माया मरीचिसमोदकचन्द्राः सर्व्वभवाः।
सुपिनोवस्वभावाः।

दुन्दुभिवादित शक्रमरुद्भिः साद्धय सक्रमि धर्म्मसभायां॥
धर्म्मकथां प्रकरोति मरूणां पाकथ शान्तविरागनुकूलाः॥

सथार्य्यसमाधिराजः॥

बुद्धायभय्यति धर्म्मराजः सर्व्वाण धर्म्माण प्रकाशका मुनिः।
भूगुल्मवृचौषधि-शैल पर्व्वत अभाव धर्म्माणरवा भविय्यति॥
यावन्ति शब्दास्थ हि लोकधातौ सर्व्वे ह्यभावा नहि कश्चि भावः।
तावन्तु खातस्य तथागतस्य स्वरुनिश्चलीलाकविनायकस्य॥
विष्णुरेषा एकस्वरोतु तव लोकहिता नानाधिमुक्ति स्वरुनिश्वरतौ।
एकैकमन्विम सभाषि जिना ब्रुहि स्मितं प्रक्रन्तकस्य हत॥

अत्रैके परिवादयन्ति। नास्तिका विशिष्टा माध्यात्मिका यस्मात् कुशलाकुशलं कर्म्म-कर्त्तारञ्च फलं च सर्व्वञ्च लोकं भावस्वभावमिति ब्रुवते। नास्तिका अपि ह्येतन्नास्तीति ब्रुवते तस्मान्नास्तिका विशिष्टा माध्यमिका॥ इति नैवं कुतः। प्रतीत्य समुत्पादादिना हि माध्यमिका हेतुप्रत्ययान् प्राप्य प्रतीत्य समुत्पन्नत्वात् सर्व्वमेवेहलोकपरलोकं निःस्वभावं वर्णयन्ति॥ यथास्वरूपवादिनो नैव नास्तिकाः॥ प्रतीत्य समुत्पन्नत्वाभावशून्यत्वेन न पर-लोकाद्यभावं प्रतिपन्नाः॥ किन्तर्हि ऐहलौकिकम्वस्तुजातमुपलभ्य स्वभावस्तस्य परलोका-दिहागमनमिहलोकाच्च परलोकगमनमपश्यन्तु इहलोकापलब्ध पदार्थसदृशपदार्थान्तरापवादं कुर्व्वन्ति तथापि वस्तुस्वरूपेणाविद्यमानस्यैव तेनास्तित्वं प्रतिपन्ना इत्यमुना तावद्दर्शनेन साम्यमस्तीति चेत्॥ नहि कुतः सम्बृत्या माध्यात्मिकैरस्तित्वेनाभ्युपगमान्न तुल्यता॥ वस्तु-तस्तुल्यतेति चेत्॥ यद्यपि वस्तुनाऽसिद्धितुल्या तथापि पात्रभेदादतुल्यता॥ यथा हि कृतचौर्य्यं पुरुषमेकः सम्यगपरिज्ञायैव तदमित्रप्रेरितस्त्वं मिथ्याभ्यो वस्त्वचौर्य्यमनन-कृतमिति॥ अपरस्तु साक्षाद्दृष्टविषयः॥ तत्र यद्यपि वस्तुनो नास्ति भेदस्तथापि परिज्ञातृभेदादेकस्तत्र मृषावादीत्युच्यते॥ अपरस्तु सत्यवादीति॥ एकस्यायशसाचापुण्येन च सम्यक् परीक्षमाणो युज्यते नापरः। एवमिहापि यथावद्विदितवस्तुस्वरूपाणां माध्य-मिकानां ब्रुवतामवगच्छतां च वस्तुस्वरूपाभेदेऽपि यथावदविदित वस्तुस्वरूप नास्तिकैः सह ज्ञानाभिधानयोर्नास्ति साम्यं॥ यथैव ह्यपत्ता सामान्यप्रतिसंख्या प्रतिसंख्याया पच-

कयानिव पृथग्जनार्हतोर्जात्यन्धचक्षुष्मतोश्च विषयप्रयातप्रदेशविनिश्चितसामान्येऽपि यथास्ति समहान्विशेष स्तथा नास्तिकानां माध्यमिकानां च विशेषो भविष्यतीति॥ पूर्व्वाचार्य्य इत्यलं प्रसंगेन प्रकृतमेव व्याख्यास्यामः॥ अत्राह यद्यपिमे अनुत्पन्ना निरुद्धा हि निर्व्वाणमिव धर्म्मता तस्येव॥ नास्ति वाक् किल या प्रवृत्तिस्तथापि नैवाभावदेश्यमाना शब्दा जनैर्विज्ञानुमित्यवश्यं तस्यामवतारणार्थं विनेयजनानां सम्वृत्तिसत्यापेक्षया कदाचिद्देशनानुपूर्व्वी भवितव्यमित्यतः॥ सा कथ्यतामित्युच्यते॥ इयमत्र बुद्धानां भगवतां तत्त्वामृतावतारं देशनानुपूर्व्वी विज्ञया यदुत सर्व्वं तथ्यं तथ्यं वा तथ्यमेव नैवातथ्यं नैव तथ्यमेद्बुद्धानुशासनं तत्र॥ यद्यस्य प्रियं पूर्व्वन्तत्तस्य समाचरेत्॥ नहि प्रतिहतः पात्रं सद्धर्म्मस्य कथञ्चनेत्यादि तएव तावद्भगवता स्वप्रसिद्धपदार्थभेदस्वरूपविभागश्रवणसंजाताभिलाषस्य विनेयजनस्य नान्यया भाषया प्रश्नः शक्यो ग्राहयितुं तथा। न लौकिकमत लोकः शक्यो ग्राहयितु तथा॥ तथा भगवतोक्तं॥ लोका मया सार्द्धं विवदति नाहं लोकेन सार्द्धं विवदामि॥ यल्लोकेऽस्ति सम्मतं तन्ममाप्यस्ति सम्मतं॥ यल्लोके नास्ति सम्मतं ममापि तन्नास्ति सम्मतमित्यागमाच्च॥* यदेतत् स्कन्धधात्वायतनादिकमविद्यातैमिरिकैः सत्यतः परिकल्पितमुपलम्बं तदेव तावत् सत्यमित्युपवर्णितं भगवता तद्दर्शनापेक्षया आत्मनि लोकस्य गौरवोत्पादनार्थम्विदितनिरवशेषलोकवृत्तान्तोऽयं भगवान् सर्व्वज्ञ सर्व्वदर्शयनैवं भवाग्रपर्य्यन्तस्य वायुमण्डलादराकाशधातुपर्य्यवसानस्य भाजनलोकस्य सत्वलोकस्य वाऽविपरीतं स्थित्युपादप्रलयादिकं सातिविचित्रप्रभेदं सहेतुकं सफलं सास्वादं सादीनवं वापदिष्टवानिति तदेवं भगवनभ्युत्पन्नसर्व्वज्ञबुद्धविनेयजनस्य उत्तरकारं तदेव सर्व्वन्नवा तथ्यमित्युपदेशितं॥ तत्र तथ्यं नाम यस्मान्यथात्वं नास्ति विद्यते च प्रतिपक्षविनाशित्वात् संस्काराणामन्यथाभावस्तस्मादन्यथाभावसद्भावान्नवा तथ्यं॥ आर्य्यज्ञानापेक्षया तु सर्व्वमेव मृषा। तैरेवमनुपलम्भादिति॥ केषाञ्चिद्देति चिराभ्यस्ततत्त्वदर्शनानां किञ्चिन्मात्रानुत्खाताचरणतरुमूलानां नैवातथ्यं नैवतथ्यं तदिति देशितं तस्यापि किञ्चिन्मात्रस्यावरणस्य प्रहाणार्थं वन्ध्यासुतस्य वेदश्यामताप्रतिषेधवदुभयमतप्रतिषिद्धं॥ एतच्च बुद्धानां भगवतामनुशासनमनन्यार्गोदयनीयमस्यङ्मार्गप्रतिष्ठापनं शासनं॥ एवमनुपूर्व्वीशासनमनुशासनं॥ विनेयजनानुरूपेण वा शासनं अनुशासनं॥ सर्व्वाश्चैता देशना बुद्धानां भगवतां महाकरुणोपायज्ञानवतां तत्त्वामृता चत्वारोपायत्वेन व्यवस्थिताः॥ नहि तथागतास्तत्त्वामृतावतारानुपायभूतवाक्यमुदाहरन्ति॥ व्याध्यनुरूपभैषज्यापसंहारवर्त्तविनेयजनानुजिघृक्षया यथानुरूपं धर्म्मं देशयन्ति॥ यथोक्तं शतके॥ (VIII. 20)

सदसत् सदसच्चेति नोभयं चेति कथ्यते।
ननु व्याधिवशात् पथ्यमौषधं नाम जायते इति॥

किं लक्षणं पुनस्तत्तत्त्वं यस्यैता देशना देशना अवतारार्थमुपदिशन्ति भगवन्तः। उक्तमेतदस्माभिः निवृत्तिमभिधातव्यं॥ निवृत्तचित्तगोचर इति॥ यदा चैवमेवं तदा किमपरं

पृच्छ्यते ॥ यद्यप्येवं तथापि व्यवहारसत्यानुरोधेन लौकिकतयाऽभ्युपगमवस्त्वस्यापि समारोपिता लक्षणमुच्यतामिति ॥ तदुच्यते ॥ अपरप्रत्ययशान्तं प्रपञ्चैरप्रपञ्चितं ॥

निर्व्विकल्पमनानार्थमेतत्तत्त्वस्य लक्षणम् ॥

तत्र नास्मिन् परप्रत्ययास्तित्वपरप्रत्ययं परोपदेशागम्यं स्वयमेवाधिगन्तव्यमित्यर्थः। यथा हि तैमिरिकावितथ्यं कणमशकमक्षिकादिरूपं पश्यन्तो वितिमिरोपदेशेनापि न शक्नुवन्ति कणानां यथावदवस्थितं स्वरूपदर्शनन्यायेनाधिगन्तव्यमतैमिरिकाऽवाधिगन्तु किन्त्वयं तैमिरिकोपदेशान् मिथ्यैतदित्येतावन्मा एकमेव प्रतिपद्यन्ते ॥ यदा तु तिमिरोपघात्यविपरीतशून्यता दर्शनाञ्जितबुद्धिनयनाः सन्तुः समुत्पन्न तत्त्वज्ञाना भवन्ति ॥ तदा तत्तत्त्वमनधिगमनयोगेन स्वयमधिगच्छतीति ॥ एवमपरं प्रत्ययं भावानां यतस्वरूपं तत्तत्त्वं ॥ एतच्च शान्तस्वभावमतैमिरिककणादर्शनवत्स्वभावविरहितमित्यर्थः ॥ अत एतत् प्रपञ्चैरप्रपञ्चितं ॥ प्रपञ्चो हि वाक्प्रपञ्चयत्यर्थानिति ॥ कृत्वा प्रपञ्चैरप्रपञ्चिवाग्भिरव्याकृतमित्यर्थः ॥ निर्व्विकल्पश्च तद्विकल्पाश्चित्तरागतद्रहितत्वात्तत्त्वं निर्व्विकल्पं ॥ यथोक्तं सूत्रे ॥ परमार्थसत्यकतमत् ॥ यत्र ज्ञानस्याप्यप्रचारः कः पुनर्वादोऽक्षराणामिति ॥ एवं निर्व्विकल्पः नानार्थोऽस्यति नानार्थं ॥ भिन्नार्थमभिन्नार्थमित्यर्थः ॥ यथोक्तमार्य्यसत्यद्वयावतारसूत्रे ॥ देवपुत्र आह ॥ कतमः पुनर्मञ्जुश्रीः सम्यक्प्रयोगः ॥ मञ्जुश्रीराह ॥ यत्समा देवपुत्र परमार्थतः तथता धर्म्मधातुरत्यन्ता जातिश्च नत्समानि परमार्थतः ॥ पञ्चानन्तर्य्या ॥ यत्समानि पञ्चानन्तर्य्याणि तत्समानि दृष्टीकृतानि ॥ यत्समानि दृष्टीकृतानि तत्समा पृथग्जनधर्म्माः ॥ यत्समाः पृथग्जनधर्म्मास्तत्समाः शैक्षधर्म्माः यत्समाः शैक्षधर्म्मास्तत्समा अशैक्षधर्म्माः ॥ यत्समा अशैक्षधर्म्मास्तत्समाः सम्यक् सम्बुद्धधर्म्माः ॥ यत्समा सम्यक् सम्बुद्धधर्म्मास्तत्समं निर्व्वाणं ॥ यत्समं निर्व्वाणं तत्समः संसारः ॥ यत्समः संसार तत्समः संसारस्तत्समः परमार्थतः संक्लेशः। यत्समः परमार्थतः संक्लेशस्तत्समं परमार्थता व्यवदानं ॥ यत्समं परमार्थता व्यवदानं तत्समाः परमार्थतः सर्व्वधर्म्माः ॥ एवं परमार्थतः सर्व्वधर्म्मसमता प्रयुक्ता देवपुत्र भिक्षुः ॥ सम्यक्प्रयुक्त इत्युच्यते ॥ देवपुत्र आह ॥ कतमया पुनर्मञ्जुश्रीः समतया यावत् परमार्थता यत्समता व्यवदानं तत्समाः सर्व्वधर्म्माः परमार्थत इति ॥ मञ्जुश्रीराह ॥ परमार्थतः सर्व्वधर्म्मानुत्पादः समतया परमार्थतः ॥ सर्व्वधर्म्मात्यन्ताजात समतया परमार्थतः समाः सर्व्वधर्म्माः ॥ तत् कस्मादेताः परमार्थता निर्व्वाणा करणा हि देवपुत्र सर्व्वधर्म्माः ॥ अत्यन्तनिरुत्पादतामुपादाय ॥ तद्यथापि नाम देवपुत्र यच्च महाजनस्यात्यन्तरमाकाशं यच्च रत्नभाजनस्यात्यन्तरमाकाशं आकाशधातुरेवैषः ॥ तत्परमार्थतो नाकिञ्चिन्नाकरणं ॥ एवमेव देवपुत्राः ॥ कृशपरमार्थतः शान्ततानुत्पादता। यदपि व्यवदानं तदपि परमार्थताऽत्यन्तानुत्पादता ॥ संसारोऽपि परमार्थताऽत्यन्तापुत्पादता ॥ यावन्निर्व्वाणमपि परमार्थताऽत्यन्तानुत्पादता ॥ नात्र किञ्चित् परमार्थतो नानाकरणं ॥ तत् कस्माद्धेतोः सः ॥ परमार्थताऽत्यन्तानुत्पादत्वात् सर्व्वधर्म्माणामिति ॥ तदेवमनानार्थता तत्त्वस्य

लक्षणं वेदितव्यं शून्यतयैकरूपत्वात् ॥ उत्तरोत्तरव्याख्यानं ॥ वात्र वेदितव्यं ॥ एवं ताव-दार्य्याणां जातिजरामरणसंसारपरिक्षयाय कृतकार्य्याणां तत्त्वलक्षणं लौकिकन्तु तत्त्वलक्षण-मधिकृत्योच्यते ॥

प्रतीत्य यद्यद् भवति नहि तावत्तदेव तत् ।

न चान्यदपि तत्तस्मान्नोच्छिन्नं नापि शाश्वतं ॥

यत्कारणं प्रतीत्य कार्य्यमुत्पद्यते ॥ तद्यथा शालीबीजं प्रतीत्य पृथिव्यादिसामग्रीं च शाल्यङ्कुरमुपजायते ॥ नहि तावत्तदेव तदिति शक्यते वक्तुं ॥ नच यदेव बीजं स एवा-ङ्कुरः ॥ जन्यजनकयोरेकत्त्वप्रसङ्गात्तस्य पितापुत्रयोरप्येकत्वं स्यात् ॥ अननात्वाच्चाङ्कुरा-वस्थायामङ्कुरवद्बीजग्रहणमपि स्यात् ॥ बीजवच्चाङ्कुरस्यापि ग्रहणं स्यात् ॥ नित्यत्वं चैवं बीजस्य स्यादविनाशाभ्युपगमात् ॥ ततश्च शाश्वतवादप्रसङ्गात् महादोषराशिः स्यात् कर्म्मफलाद्यभावप्रसङ्गात् । एवं तावद्यदेव बीजं स एवाङ्कुरमिति ॥ न युज्यते ॥ नचान्यदपि तत्तस्मात् ॥ नापि बीजादङ्कुरस्यान्यत्वं बीजमङ्कुरेणाप्यङ्कुराद्यप्रसङ्गात् ॥ यद्यन्य-दन्यादन्यस्मादन्यस्मादप्यतो भवेदिति वचनादङ्कुरो वस्तुनोऽपि बीजानुच्छेदप्रसङ्गात् ॥ ततश्च सत्कार्य्यवाददोषः स्यात् । यतश्चैवं सत्कारणं प्रतीत्य सत्कार्य्यमुत्पद्यते नैव सत्कारणं कार्य्यं भवति ॥ नच तस्मात् कारणात् तत्कार्य्यमन्यत तस्मान्न कारणमुच्छिन्नं नापि शाश्वत-मिति शक्यते व्यवस्थापयितुं यथोक्तमार्य्यदेवपादैः ।

यस्मात् प्रवर्त्तते भावस्तेनोच्छेदो न जायते ।

यस्मान्निवर्त्तते भावस्तेन नित्यो न जायत इति ॥

उक्तं चार्य्यललितविस्तरसूत्रे ॥ बीजस्य सतो यथाङ्कुरो नच यो बीजः स चैव अङ्कुरो नच अङ्कुरता नचैव तदेवमनुच्छेद अशाश्वतधर्म्मतेति ॥ तदेवं यथोपवर्णितेन न्यायेन ॥

अनेकार्थमनानार्थमनुच्छेदमशाश्वतम् ।

एतत्ते लोकनाथानां बुद्धानां शासनामृतं ॥

महाकरुणोपाय महामेघपटलनिरन्तरावच्छादिताकाशधातुपर्य्यन्तदिङ्मण्डलानां रागादि क्लेशगणसमुदाचारो तितीक्षुतरादित्यमण्डलापतापितजगज्जातिजरामरणदुःखदहनसन्तापोप-शमतत्पराणां सततावरतयथानुरूपचरितप्रतिपक्षधर्मदेशनामृतधारापातैर्यथानुरूपविनेय-जनकुशलमूलशस्यौषधिफलमूललतोत्पन्नातिपुष्ट्यनुजिघृक्षूणां सद्धर्म्मामृत महावर्षवर्षिणां सम्यक् सम्बुद्धमहानागानां सम्याग्लौकिकत्राणानां अनाथनाथानां सकललोकनाथाना-मेतत्तत् सद्धर्म्मामृतं सकलत्रैधातुकभवदुःखक्षयस्वभावं यथोपवर्णितेन न्यायेनैकत्वानात्वे वेदितं शाश्वतोच्छेदवादविगतं च विगतं च विज्ञेयं ॥ एतद्धर्मतत्त्वामृतप्रतिपन्नानां श्रावकानां

श्रुतचिन्ता भावनाक्रमात् प्रवर्त्तमानानां शीलसमाधिप्रज्ञात्मकस्कन्धत्रयामृतरसस्यापयोगानियतमेव जरामरणक्षयस्वभावनिर्व्वाणाधिगमा भवन्ति ॥ अथापि कथं चिदिदानीं परिपक्वकुशलमूलकुशलमूलतया श्रुत्वाय तत्सद्धर्म्मामृतं दृष्ट एव धर्म्मेण मोक्षमासादयन्ति ॥

तथापि जन्मान्तरेऽप्यवश्यमेषां पूर्व्वहेतुबलादेव नियता सिद्धिः संपद्यते । यथोक्तं शतके । इह यद्यपि तत्त्वज्ञो निर्व्वाणं नाधिगच्छति ॥ प्राप्नोति यत्नतोऽवश्यं पुनर्जन्मनि कर्म वेदिति ॥ तथापि विसम्बुद्धानामनुत्पादश्रावकानां पुनः क्षयसत्यार्य्यमार्गोपदेशककल्याणमित्रप्रत्ययवैकल्यान्न स्याद्धर्मतत्त्वामृताधिगमस्तथापि पूर्व्वजन्मान्तरधर्मतत्त्वश्रवणहेतुबलादेव वैहलौकिकोपदेशनिरपेक्षाणामपि प्रविवेकसरोमात्रोपनतप्रत्ययानां स्वायम्भुवं ज्ञानं प्रत्येकबुद्धानामसंगात् ॥ प्रवर्त्तते कायचेतसाऽप्रतिविवेकोऽसंसर्गः ॥ कल्याणमित्रं पर्य्येषणं वा ॥ तस्मादसंसर्गाद्धेतोः प्रत्येकबुद्धानामसंबुद्धकेऽपि काले यस्माद्भगवतश्च धर्मतत्त्वाधिगमः । तस्मादवन्ध्या सिद्धिरस्य संबुद्धमहावैद्यराजप्रणीतस्य स्वद्धर्मतत्त्वामृतभैषज्यस्येति विज्ञेयं ॥ यतश्चैव देवं मतोऽतिप्राज्ञः प्राणानपि परित्यज्य सद्धर्मतत्त्वं पर्य्येषितुमिति ॥ यथोक्तं भगवता आर्य्याष्टसाहस्रिकायां भगवत्यां ॥ कथं च भवगन् महाप्ररुदितेन बोधिसत्त्वेन महासत्त्वेनेयं प्रज्ञापारमिता पर्य्येष्टा ॥ एवमुक्तो भगवानायुस्मन्तं सुभूतिं स्थविरमेतदवोचत् सदा प्ररुदितेन बोधिसत्त्वेन महासत्त्वेन पूर्व्वं प्रज्ञापारमिता पर्य्येषमाणेन कायेऽनर्थिकेन जीवितनिरपेक्षेण लाभसत्कालश्लोकेष्वनिःश्रितेन पर्य्येषमाणेन पर्य्येष्टा ॥ तेन प्रज्ञापारमिता पर्य्येषमाणेनारण्यगतेनान्तरीक्षो निर्घोषः श्रुतोऽभवत् ॥ गच्छ कुलपुत्र पूर्व्वस्यां दिशि तत्र प्रज्ञापारमितां श्रोष्यसि ॥ तथावगच्छ यथा नकायक्रमथने मनसि कालमुत्पादयसि नस्त्यानसिद्धि मनसिकारमुत्पादयसि ॥ न भाजनमनसिकारमुत्पादयसि यावन्मा क्वचिच्चित्तं प्रणिदधि । अध्यात्मं या वहिर्वा ॥ मा च कुलपुत्र वामेनावलोकयेयम्वा ॥ मा दक्षिणेन मा पश्चिमेन मा उत्तरेण मा ऊर्द्ध्वं मा अधः ॥ मा चानुविदितमवलोकय वा । तथा च कुलपुत्र गच्छ. यथा न सत्कार्य्यतश्च शशिनो रूपतो न वेदनातो न संज्ञातो न संस्कारेभ्यो न चलसि ॥ याज्यतश्चरति सवितिष्ठत ॥ या बुद्धधर्म्मेभ्यो वितिष्ठत ॥ यावद्बुद्धधर्मेभ्यो वितिष्ठत संस्कारे चरति । यः संस्कारे चरति स प्रज्ञापारमितायां न चरति ॥ नच तामनुप्राप्नोतीति ॥ यावन्मारेण पापीयसा उदकान्तर्द्धापितः ॥ अथास्यैतद्भगवन् ॥ यं न्वहमात्मनः कायं विद्धा पृथिवीप्रदेशं रुधिरेण सिञ्चेयं ॥ तत् कस्य हेतोरयं पृथिवीप्रदेशोऽद्धतरजस्कामा रजोधातुरिता धर्मोद्गतस्य बोधिसत्त्वस्य महासत्त्वस्य शरीरे निपतत् किमहमात्मभावेन करिष्याम्यवश्य भेदन धर्म्मेणावरं खलु पुन ममैवं रूपया क्रियया आत्मभावस्य विनाशकृतो भवेत् ॥ नत्वेवं निःसामर्थ्यो क्रियया बहूनि च ममात्मभावसहस्राणि कामहेतोः कामनिदानं भिन्नानि पुनः पुनः संसारे भ्रंस । रतो न पुनरेवं रूपेषु स्थानेषु ॥

अथ खलु महाप्ररुदितो बोधिसत्त्वो महासत्त्वस्तीक्ष्णशस्त्रं गृहीत्त्वा समन्तादात्मानं विद्धा अनन्ततस्यपृथिवीप्रदेशं स्वकेनासधिरेणासिञ्चेदित्यादि ॥ अथ खलु महाप्ररुदितो बोधिसत्त्वो महासत्त्वः सहदर्शनादधर्म्मोद्गतस्य बोधिसत्त्वस्त बोधिसत्त्वस्य महासत्त्वस्येमं रूपं सुखं प्रत्यलभत ॥ तद्यथापि नाम ध्यानसमापन्नस्य भिक्षैकाग्रमनसिकारस्यते अयं धर्म्मोद्गतस्य,

बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमिता देशना यदुत सर्व्वधर्मसमतया प्रज्ञापारमिता समता सर्व्वधर्मविविक्ततया प्रज्ञापारमिता विविक्तता सर्व्वधर्मचलतया प्रज्ञापारमिता चलता सर्व्वधर्ममननतया प्रज्ञापारमिता मननता सर्व्वधर्म्माच्छम्भितया प्रज्ञापारमितोच्च स्थितता सर्व्वधर्मैकरसतया प्रज्ञापारमितायैकरसता सर्व्वधर्म्मापर्य्यन्ततया प्रज्ञापारमिता पर्य्यन्तता सर्व्वधर्म्मानुत्पातया प्रज्ञापारमितानुत्पादता सर्व्वधर्मनिरोधतया प्रज्ञापारमिता निरोधता गगणापर्य्यन्ततया प्रज्ञापारमितापर्य्यन्तता यावत् सर्व्वधर्म्मा संभेदनतया प्रज्ञा-पारमिता संभेदन सर्व्वधर्म्मानुपलब्धितया प्रज्ञापारमितानुपलब्धिता सर्व्वधर्म्मासमतया प्रज्ञापारमिता समता । सर्व्वधर्म्मनिश्चेष्टतया प्रज्ञापारमिता निश्चेष्टता सर्व्वधर्म्माचिन्त्यतया प्रज्ञापारमिता चिन्त्यता वेदितव्येति ॥

इत्याचार्य्यचन्द्रकीर्त्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ आत्मपरीक्षानामाष्टदशमं प्रकरणम् ॥

---

अत्राह । विद्यत एव भावानां स्वभावः कालत्रयविज्ञप्तिहेतुत्वात् ॥ इहातीता नागता-नागतप्रत्युत्पन्नास्त्रयः काला भगवता चादिष्टास्ते च भावाश्रयाः यस्मादुत्पन्ना निरुद्धा हि स्वभावातीता इति व्यपदिश्यन्ते ॥ उत्पन्ना निरुद्धा हि वर्त्तमानाश्चः । अलघात्मभावोऽनागत इति ॥ एवं भावस्वभावनिबन्धनास्त्रयः काला उपदिष्टा स्ते च सन्ति ॥ तस्मात्तन्निबन्धनोऽपि भावस्वभावोऽस्तीत्युच्यते ॥ स्यात् कालत्रयप्रज्ञप्तिहेतुस्वभावो वा यदि कालत्रयमेवेतदभि-मतो भवेत् ॥ नत्वस्ति यथा च नास्ति तथा प्रतिपादयन्नाह ॥

प्रत्युत्पन्नो नागतश्च यद्यतीतमपेक्ष्य हि ।
प्रत्युत्पन्नो नागतश्च कालेऽतीतो भविष्यति ॥

इह तावद्यदि वर्त्तमानानागतौ स्यातां तावत्प्रेक्ष्यातीतं कालं भवतामनपेक्ष्य वा ॥ तत्र यद्यतीतमपेक्ष्य सिध्यत तथानियतमतीतकाले भविष्यतः ॥ यस्माद्यस्य हि यत्रासत्वं यतत्ते-नोपेक्ष्यतः ॥ तद्यथा वन्ध्यास्त्री स्वतनयेन, गगणमौलतौ लता खकुसुमेन, सिकता स्वतैलेन ॥ अविद्यमानमप्यन्धकारमप्रदीपेन प्रदीपोऽप्यन्धकारेण प्रतिद्वन्दित्वेनापेक्ष्यत इति चेत् ॥ नैतदेव-मस्यापि साध्यसमत्वात्तदत्रयद्यतीतकालवर्त्तमानागतौ कासाविद्यतऽपेक्ष्य सिद्ध्यर्थमेवं सत्य तीतकालविद्यमानत्वादतीतकालस्वात्मवत्तयोरप्यतीतत्वं स्यात् । तत्र चातीतोऽपि न स्यात् ॥ यस्माद्वर्त्तमानावस्थेति क्रान्तो ह्यतीतोऽसंप्राप्तोऽनागत इति स्यात् ॥ यदा तु वर्त्तमानाना-गतया च त्वं भवे एव तदा कुतः कस्यचिदतीतत्वं स्यादित्यतीतोऽपि न स्यात् ॥ अथ यथोक्तदोषपरिजिहीर्षया प्रत्युत्पन्नो नागतश्च नस्तस्तत्र पूर्व्वं यदि प्रत्युत्पन्नो नागतश्च स्यातां कथमपेक्ष्येतं ॥ तत्र चेदतीतकाले यदि वर्त्तमानानागतौ कालौ न स्त इति परिकल्प्येत ॥

एवमपि तत्राविद्यमानत्वाद्गगनेन्दीवरवन्नास्त्यपेक्षा ॥ अथोऽपि स्यात् कालवादिनां विद्यत एव कालस्तत्र किममत्तयप्रयोजनमिति ॥ उच्यते ॥ एवमपि

अनपेक्षा पुनः सिद्धिर्नापि तं विद्यते तथा ।
प्रत्युत्पन्नोऽनागतश्च तस्मात् कालो न विद्यते ॥

प्रत्युत्पन्नानागततया एकत्वमस्यतीतानपेक्षत्वात् ॥ खरविषाणवत् ॥ यतश्चैवं प्रत्युत्पन्नो नागतश्च तस्मात् कालो न विद्यत इति विज्ञेयं ॥ यदा चैवमतीतमपेक्ष्य वाऽनपेक्ष्य वा प्रत्युत्पन्नानागतया नास्ति सिद्धिरेवं प्रत्युत्पन्ना पक्षया वा ॥ अतीतानागतया च नागतापेक्षया वाऽनपेक्षया वाऽप्रत्युत्पन्नातीतया च सिद्धावविद्यमानाया तेनैव प्रत्युत्पन्नानागतयाऽतीतापेक्षा-सिद्धिक्रमेण दूषणसाम्यमादिशन्नाह ॥

एतेनैवावशिष्टौ द्वौ क्रमेण परिवर्त्तकौ ।
उत्तमाधममध्यादीन् लक्षयेत् कथं कृत्वा ॥
यद्यतीतो नागतश्च प्रत्युत्पन्नमपेक्ष्य हि ।
कालातीतो नागतश्च नस्तत्र पुनर्यदि ॥
कालातीतो नागतश्च प्रत्युत्पन्ने भविष्यतः ।
कालातीतो नागतश्च नस्तस्तत्र पुनर्यदि ॥
कालातीतो नागतश्च स्यातां कथमपेक्ष्यते ।
अनपेक्ष्य पुनः सिद्धिर्नातीतं विद्यते तथा ॥
तेनातीतो नातीतश्च कालो नाम न विद्यते ।

एष तावदेकः काल परिवर्त्तः अतीतो वर्त्तमानश्च यद्यजातमपेक्ष्य हि ॥

अतीतो वर्त्तमानश्च कालेऽजातो भविष्यति ।
अतीतो वर्त्तमानश्च नस्तस्तत्र पुनर्यदि ॥
अतीतो वर्त्तमानश्च स्यातां कथमपेक्षतं ।
अनपेक्ष्य पुनः सिद्धि र्नाजातं विद्यते तयोः ॥
अतीतो वर्त्तमानश्च तस्मात् कालो न विद्यते ।

एष द्वितीयः कालपरिवर्त्त इति व्याख्यानकारिका इति ॥ एवं द्वौ कालपरिवर्त्तौ बोद्धव्यौ ॥ यतश्चैवं विचार्यमाणे कालत्रयन्नास्ति तस्मात् कालो न विद्यते कालभावाच्च भावसद्भावोऽपि नास्तीति सिद्धं ॥ यथा चैतत्कालत्रयं विचारितमेव मूलमाधममध्यादी-

शैक्षत्वादीं श्रैत्यादि लक्षयेत्॥ उत्तमाधममध्यमादीनि श्चादिशब्देन कुशलाकुशलाव्याकृतानि उत्पादस्थितिभङ्गाः पूर्व्वान्तपरान्तमध्यान्ताः कामरूपारूप्यधातवः॥ शैक्षाशैक्षणैव शैक्षा शैक्षादयो यावन्तः पदार्थाः स्थिः पदार्थाः सम्बन्धव्यवस्थितास्ते सर्व्वे गृह्यन्ते॥ एकत्वादीं श्चेत्यनेनादिशब्देन द्वित्वबहुत्वयोर्ग्रहणात्तत्र च उत्तमादय एकत्वादयश्च कालत्रयव्याख्यानेन वेदितव्याः॥

अत्राह॥ विद्यत एव कालः परिमाणवत्त्वात्॥ इह यन्नास्ति न तस्य परिमाणवत्त्वं विद्यते तत्र खरविषाणस्य, अस्ति च कालस्य परिमाणवत्त्वं क्षणलवमुहूर्त्तदिवसरात्र्यहोरात्रपक्षमाससम्वत्सरादिभेदेन तस्मात् परिमाणवत्त्वा विद्यत एव काल इत्युच्यते॥ यदि कालो नाम कश्चित् स्यात्तस्य परिमाणवत्त्वं नत्वस्ति यस्मात्॥

नास्थिता गृह्यते कालः स्थितः कालो न गृह्यते।
यो गृह्यते गृहीतश्च कालः प्रज्ञप्यते कथं॥

इह यदि कालो नाम कश्चिदवस्थितः क्षणादिव्यतिरिक्तः स्यात्॥ लक्षणादिभिः परिमाणवत्त्वा गृह्यते नत्ववस्थितः कुतस्त्यः कश्चित् कालो नामास्ति यः क्षणादिभिर्गृह्यते तदेवं नास्तिता गृह्यते कालस्यास्थितत्वान्न गृह्यत इत्यर्थः॥ अथापि स्यान्नित्य एवावस्थितस्वभावः कालो नामास्ति लक्षणादिभिरभिवच्यते॥ तथाहि॥

कालः पचति भूतानि कालः संहरते प्रजाः।
कालः सुप्तेषु जागर्त्ति कालो हि दुरतिक्रम इति॥

यस्यैवं लक्षणः सोऽवस्थितस्वभावोऽस्तीत्युच्यते॥ एवमधिष्ठितः कालो न विद्यते॥ क्षणादिभिरुह्यमानो न गृह्यते॥ कस्मात् पुनः स्थितकालो नास्तीति चेत्॥ क्षणादिव्यतिरेकेणागृह्यमाणत्वात्॥ अपि चायं कालः संस्कृतस्वभावः सन्नस्तीति॥ एवमस्थितः कालो न विद्यते॥ यः क्षणादिपरिकल्पितः संस्कृतस्वभावो वा॥ उभयं संस्कृतपरं चायां प्रसिद्धं॥ उत्पादस्थितिभङ्गो नाम सिद्धो नास्ति संस्कृतं॥

संस्कृतस्याप्यसिद्धौ च कथं सत्सत्यसंस्कृतमित्यनेन॥ तदेवन्नास्ति त्ववस्थितः कालो यो गृह्यते॥ यश्चेदानीं कालो न गृह्यतास्ति तस्मादविद्यमानस्वरूपत्वात् स गृह्यमाणः सत्कथं क्षणादिभिः प्रज्ञपयितुं भावतः पश्यत इत्याह॥ अगृहीतश्च कालः प्रज्ञप्यते कथमिति॥ तस्मान्नास्त्येव कालः॥

अत्राह॥ सत्यं नास्ति नित्यः कालो नाम कश्चिद्रूपादिव्यतिरिक्तः स्वभावसिद्धः किं तर्हि रूपादीनेव संस्कारानुपादाय प्रज्ञप्तः कालः क्षणादिशब्दवाच्यो भवति॥ तस्माददोष इत्युच्यते॥ एवमपि भावं प्रतीत्य कालश्चाकालो भावो दृष्टः कुतः॥ यद्येवं भावमतीत्य कालो भवतीति भवता व्यवस्थाप्यते॥ यदा खलु भावनास्ति तदा नियतं सद्धेतुकोऽपि

कालो नास्तीति प्रतिपादयन्नाह ॥ नच कश्चन भावोऽस्तीति पूर्व्वं विस्तरेण प्रतिपादितस्य वक्ष्यमाणप्रतिषेधाच्च यदा चैवं न कश्चिद्भावोऽस्ति ॥ भावतस्तदा कुतः कालो भविष्यति ॥ कालात् ॥ कालाच्च न सन्ति चणलवमुहूर्त्तादयः कालभेदास्ते परिणामभूता इत्यतः। कुतः परिणामवत्त्वेन कालसिद्धिर्भविष्यति ॥ तस्मान्नास्त्येव भावानां स्वभाव इत्युक्तं हि भगवता आर्य्यहस्तिकोक्तसूत्रे ॥ यदि कश्चित् धर्म्मो भवेत् स्वभावः तत्रैव गच्छ जिनस्य श्रावको ऽकृतस्तधर्म्माणमियाणं न निस्पृषो भविता तु पण्डित इति ॥ तथा बुद्धसहस्रशताय अतीतधर्म्मसहस्रशतानि भविता नैव धर्म्मेण वास्तरत्तोणो नास्ति इति ॥ तद्यथा ॥ उत्पादकालो हि तथागतस्य मैत्रयनामात्विह यो भविष्यति ॥ भविष्यतीयं कनकासृता मही तस्याः सदानीं कुतः आगमोऽसौ ॥ उल्लापनाः कामगुणा हि पञ्चचित्रामनोमोहनमोष-धर्मिणः मध्याह्नकाले हि तथैव ग्रीष्मजलं मरीच्यां हि तथैव कामाः ॥

एकेन कल्पेन भवेद्धि लोक आकाशभूतो गगणस्वभावः। दाहं विनाशं च यान्ति मनवः ॥ कुत आगमः कुत्र गतिश्च तेषामिति तद्यथा ॥ पञ्चेमानि भिक्षवः॥ संज्ञामात्रं प्रतिज्ञामात्रं व्यवहारमात्रं सम्वृत्तिमात्रं यदुताऽध्वाऽनागतोऽध्वाऽकाशं निर्व्वाणं पुद्गलश्चेति ॥

## इत्याचार्य्यचन्द्रकीर्त्तिपादोपरचितायां मध्यमकवृत्तौ कालपरीक्षा नामैकोनविंशतितमं प्रकरणम् ॥

---

अत्राह। विद्यते कालः फलप्रवृत्तौ सहकारिकारणभावात्। यो नास्ति नासौ सह-कारिकारणभावेन प्रतिपद्यते। बन्ध्यातनयवत् तस्मादस्ति कालः सहकारिकारणभावात् ॥ इह बीजावनिसलिलज्वलनपवनगगणाभिधानहेतुप्रत्ययसामग्रीं प्रतीत्यायमङ्कुल उप-जायमानः सत्यामपि बीजादिप्रत्ययसामग्र्यामृतुविशेषासन्निधानान्नोपजायते ॥ यथा च बाह्येष्वेवमाध्यात्मिकेष्वपि ॥ यथोक्तं भगवता ॥

न प्रणश्यन्ति कर्म्माणि कल्पकोटिशतैरपि।
सामग्रीं प्राप्य कालञ्च फलन्ति खलु देहिनामिति ॥

यस्माच्चैवमस्ति कालोपेता तस्मादस्त्यसौ कालानामप्यङ्कुरादिप्रवृत्तौ सहकारिकारणं भवतीत्युच्यते ॥ स्यात् सहकारिकारणता कालस्य यद्यङ्कुरादिफलस्य प्रवृत्तिरेव स्यात् ॥ नत्वस्ति कथं कृत्वा इह बीजादिहेतुप्रत्यया सामग्रीतोऽङ्कुरादिफलादयः ॥ परिकल्प्यमानो-ऽव्यवस्थितस्य वा फलस्य सामग्री सत्यां तत उत्पादपरिकल्प्यताव्यवस्थितस्य वा किं चातः ॥ यदि तावद्व्यवस्थितस्य परिकल्पते तं न युज्यत इति प्रतिपादयन्नाह ॥

हेताश्च प्रत्ययानां च सामग्र्या जायते यदि।
फलमस्ति च सामग्र्या सामग्र्या जायते कथं ॥

यदि हेतुप्रत्ययसामग्र्याः त्वन्मते न फलमस्ति नत्वेवं सति यस्मात् सामग्र्यामस्ति कथं तया तज्जन्यते ॥ नहि कुण्डे दधि विद्यमानं कुण्डेन जन्यता अपि च यद्विद्यते तन्निष्पन्नत्वा निष्पन्नपुरोऽवस्थितघटवन्न पुनर्जन्मापेक्षते । अभिव्यक्तिः स्वल्पं वा सूक्ष्मात्मनो विद्यमान क्रियत इति चेन्नास्यापि पक्षस्य पूर्व्वमेवोत्तरत्वात् ॥ आगच्छत्यन्यतो नाग्निर्न विद्य तथेन्धन इत्यत्रोक्तमुत्तरं ॥ अथ नास्त्येव सामग्र्या फलमिति परिकल्प्यते एतदपि न प्रपद्य इति प्रतिपादयन्नाह ॥

हेताश्चप्रत्ययानाञ्च सामग्र्या जायते यदि ।
फलं नास्ति च सामग्र्यां सामग्र्या जायते कथं ॥

यदि हेताश्चप्रत्ययानां च सामग्र्यां नास्ति तत् फलं कथं तर्हि हेतुप्रत्ययसामग्र्यां फ जन्यते ॥ तत्राविद्यमानत्वात्सिकताभिनिवेशे नालं ॥ अतएवासम्भावयन्नाह ॥ फलं नास्ति च सामग्र्यां सामग्र्या जायते कथं ॥ न तत्फलं सामग्रीतो जायत इत्यभिप्रायः ॥ किं चान्यत्

हेताश्चप्रत्ययानाञ्च सामग्र्यामस्ति चेत् फलं ।
गृह्यते नतु सामग्र्यां सामग्र्या च न गृह्यते ॥

यद्यत्रास्ति तत्तत्र गृह्यते तद्यथा ॥ कुण्डे दधि यच्च यत्र नास्ति न तत्तत्र गृह्यते । तद्यथा ॥ सिकतासु तैलं मण्डूकजटायां शिरोमणिः । अथ स्याद्विद्यमाना अपि पदार्थ अतिसौक्ष्म्यादतिसन्निकर्षादतिप्रकर्षादिन्द्रियोपघातान्मूर्त्तिवद्द्रव्य-व्यवधानान्मूर्त्तान्तर्द्धानादा त्मनोऽनवस्थानात् परमाणुवदक्ष्णोरञ्जनसराकावत् ॥ आदित्यगतिवत् ॥ तैमिरिकैककाण वत् ॥ अन्धवधिरादिरूपशब्दादिवत् ॥ कत्त्र्यादिव्यवहितघटादिवत् ॥ सिद्धदेवपिशाचादि शरीरवद्विषयान्तरव्यापृतस्य विषयान्तरवन्न गृह्यन्त इति चेत् ॥ खल्वेषा गृह्यमाणानामस्तित्व लिङ्गयनेषामस्तित्वे सत्यनुपलब्धिरिति स्यादनुमानोपमागमैर्ग्रहणादेषामस्तित्वमिति चेत् ॥ न तर्हि तेषामनुपलब्धिरिति वक्तव्यमनुमानादिभिरनुपलभ्यमानत्वात् ॥ यद्रूपेन्द्रियग्राह्यं तदेभिः कारणैर्विद्यमानमपि सन्न गृह्यत इति चेदुच्यते ॥ किमस्माभिरेवमुक्तं रूपिन्द्रियै- र्विद्यमानं संगृह्यतेति किन्तर्हिसामान्येनेव यद्ब्रुमः ॥ गृह्यते नतु सामग्रीमिति ॥ अथापि मन्यसे यद्यत्र नास्ति न तत्तस्मादुत्पद्यते सिकताभ्यस्तैलवदुत्पद्यते च सामग्रीतः ॥ फलं तस्मादनुमानतः सामग्र्यां फलस्यास्तित्वमिति ॥ उच्यते ॥ यच्चत्रास्ति न तत्तस्मातुत्पद्यते ॥ तद्यथा ॥ कुण्डाद्दधीति ॥ अस्मादप्यनुमानादस्तित्वमस्यायुक्तमिति कृत्वा नास्त्येव सामग्री फलमिति ॥ किन्न गृह्यते ॥ अथापि स्यादुभयोरपि पक्षयोरनुमाननिरोधाद्यथास्तित्वं न युक्तमेवं नास्तित्वमपि नास्तित्वमित्युच्यते ॥ नचेयमस्यासत्त्वं प्रतिपादयामः ॥ किं तर्हि परपरिकल्पितं सत्त्वमस्य निराकुर्म्मः ॥ एवं नचेयमस्य सत्त्वं प्रतिपादयामः किन्तर्हि परपरि- कल्पितमसत्त्वमस्यापाकुर्म्मः अन्तद्वयपरिहारेण मध्यमायां प्रतिपदं प्रतिपादयितुमिष्टत्वादित्युक्तं चार्य्यदेवपादीयशतके ॥

स्तम्भादीनामलङ्कारो गृहस्यार्थे निरर्थकः।
सत्कार्य्यमेव यस्येष्टं यस्यासत्कार्य्यमेवेति॥

तदेवं न सामग्रीतः फलमुत्पद्यते॥ विद्यमानस्य ग्रहणप्रसङ्गादिति व्यवस्थितं॥ अथ मन्यसे नास्त्येव सामग्र्यां फलमिति॥ एवमपि—

हेतवः प्रत्ययानाञ्च सामग्र्यां नास्ति चेत् फलं।
हेतवः प्रत्ययाश्च स्युरहेतुप्रत्ययैः समाः॥

यथाहि ज्वालाङ्गारादिष्वङ्कुरो नास्तीति कृत्वा तस्य हेतुप्रत्यया न भवन्ति॥ एवं विवक्षितानामपि वीजानां हेतुप्रत्ययता न स्यात् तेष्वङ्कुरो नास्तीति कृत्वा न वा हेतुप्रत्ययेभ्यः फलप्रवृत्तिः युक्तेति॥ नास्ति स्वभावतः फलप्रवृत्तिः॥

अत्राह॥ नैव हि सामग्र्याः फलोत्पादनसामर्थ्यमस्ति यत इयं चिन्ता स्यात्॥ किं सामग्र्याः फलमस्ति उताहो नास्तीति॥ किं तर्हि हेतोः फलोत्पादनसामर्थ्यंसामग्रीतु हेतोरनुग्रहमात्रं करोति॥ सहेतुः फलस्योत्पत्त्यर्थं हेतुं दत्त्वा विरुध्यते तेन च हेतुनानुगृह्यमाणं फलमुत्पद्यत इत्युच्यते॥ नैव ह्यजातस्य फलस्य हेतोरनुग्रहणमस्ति। नचाप्यजातस्य वन्ध्यातनयस्य च केनचित् किञ्चिन्मात्रं कर्त्तुं शक्यं इत्ययुक्तैषा कल्पना॥ अपि वा हेतुकं फलस्य दत्त्वा च यदि हेतुर्निरुध्यते॥ यत् कृतं यन्निरुद्धं च हेतोरात्मद्वयं भवेत्॥ यदि हेतुः फलस्योत्पत्त्यर्थन्देवकुमाराणां दत्त्वा निरुध्यत इति परिकल्प्यते॥ एवं सति यद्धेतुमनिरुद्धं च तदात्मभावद्वयं हेतोः॥ स्यान्न चैतद्युक्तमर्द्धशाश्वतप्रसङ्गान्नित्यानित्ययोश्च परस्परविरुद्धयोरेकत्वाभावात्॥ अथ हेतोरात्मभावद्वयप्रसङ्गपरिहारार्थं सर्व्वात्मनो निरोधः॥ इष्यते फलस्योत्पत्त्यर्थं किञ्चिदप्यदत्त्वा एवमपि॥ हेतुफलस्यादत्त्वा च यदि सतु निरुध्यते॥ हेतौ निरुद्धे जातं तत्फलमहेतुकं भवेत्॥ यदि फलस्य किञ्चिदप्यदत्त्वा सर्व्वात्मना हेतुर्निरुध्यते ननु तस्मिन् हेतौ निरुद्धे यत्फलमुत्पद्यते तदहेतुकमेव स्यात् नचाहेतुकमस्तीत्ययुक्तैषा कल्पना॥ अत्राह॥ यद्येवं फलस्य हेतावनुत्पत्तौ दोष एवं सति सहोत्पन्नैव सामग्री फलस्य जनिकातु॥ तद्यथा॥ प्रदीपप्रभाया इति॥ यथापि कल्पना नोपपद्यते इति प्रतिपादयन्नाह॥

फलं सहैव सामग्र्या यदि प्रादुर्भवेत् पुनः।
एककालौ प्रसज्येते जनकोयश्च जन्यते॥

नचैककालयोः सव्येतरगोविषाणयोर्जन्यजनकत्वं दृष्टं॥ वामदक्षिणफलयोश्चरणयोश्चेत्ययुक्तैषा कल्पनेत्ययुक्तमेतत्॥ अत्राह जनकः॥ नैव ह्यभूत्वा भावानामुत्पत्तिर्युक्ता आक-

सिकत्वप्रसङ्गात् ॥ तस्माद्धेतुप्रत्ययसामग्रीतः पूर्व्वमेव तत्फलमनागतावस्थायां व्यवस्थित- मनागतात्मनस्तस्य हेतुप्रत्ययसामग्र्या वर्त्तमानावस्था जन्यते द्रव्यं तु व्यवस्थितमेवेति तावत् प्रत्युच्यते ॥

पूर्व्वमेव च सामग्र्याः फलं प्रादुर्भवेद्यदि ।
हेतुप्रत्ययनिर्म्मुक्तं फलमाहेतुकं भवेत् ॥

यदि भवतामभिप्रेतं सामग्रीतः पूर्व्वमेव फलं स्वरूपतः स्यादिति ॥ तद्धेतुप्रत्ययनिरपेक्षं स्यात् ॥ ततश्चाहेतुकं स्यात् ॥ न वा हेतुकानां पदार्थानामस्तित्वं युक्तं ॥ खरतुरगोरग- विषाणादीनामप्यस्तित्वप्रसङ्गात् ॥ पूर्व्वसिद्धस्य च पुनर्हेतुप्रत्ययापेक्षायान्निष्प्रयोजनत्वादि- त्ययुक्तमेतत् ॥ अन्ये पुनर्वर्णयन्ति ॥ हेतुरेव फलं जनयति न सामग्री ॥ न चोक्तदोष- प्रसङ्गो यस्मान्न ह्यन्यो हेतुरन्यत्फलं ॥ यतः किं हेतुं दत्त्वा फलस्य हेतुर्निरुध्यते ॥ उता दत्त्वैवेति विचारः स्यादपितुरेवा निरुद्धः फलात्मनो व्यवस्थित इत्युच्यते ॥ एवमपि ॥

निरुद्धं चेत् फलं हेतौ हेतोः संक्रमणं भवेत् ।
पूर्व्वजातस्य हेतोश्च पुनर्जन्मप्रसज्यते ॥

यदि निरुध्यते हेतौ भवन्मतेन फलमुत्पद्यते तच्च फलं हेत्वात्मकं एव भवतीति परि- कल्प्यते ॥ एवं सति हेतौ संक्रमणं भवेत् ॥ नटस्य दशान्तरपरित्यागेन वेशान्तरसङ्कारवत् हेतोः संक्रमणमात्रमेव स्यात् ॥ नत्वपूर्व्वस्य फलस्योत्पादः ततश्च हेतोर्नित्यतैव स्यात् ॥ नच नित्यानामस्तित्वं क्वचिदस्ति । यथोक्तं शतके ॥

अप्रतीत्यास्ति कालोऽस्ति कदाचित् कस्यचित् क्वचित् ।
न कदाचित् क्वचित् कश्चिद्विद्यते तमशाश्वत इति ॥

किं च एतस्य कल्पनायां पूर्व्वजातस्य च हेतोः पुनर्जन्म प्राप्नोति ॥ न च जातस्य पुनरपि युज्यते निष्प्रयोजनत्वात् ॥ पुनरस्य प्रसङ्गाच्च ॥ अथ मन्यसे येनात्मनो विद्यमानो न तेनैवात्मनो जायते ॥ ये न वात्मनोः विद्यमानस्तेनैव जायत इति ॥ एतदपि न युक्तं । अपरित्यक्तस्वभावस्य हेतुस्वरूपस्य फलमिति ॥ संज्ञात्र भेदादवस्थाभेदाच्च द्रव्यभेदस्य साधयितुमशक्यत्वात् फलावस्थायां च परित्यक्तहेतुस्वभावस्य फलशब्दवाच्यत्वाद्धेतुः फला- त्मना तिष्ठतीति यत्किञ्चिदेतत् किं चान्यत् । यदि हेतुफलं जनयेत निरुद्धा वा जनयेत् ॥ निरुद्धो वा फलमव्युत्पन्नं वा जनयेदनुत्पन्नं वा ॥ उभयथा च नोपपद्यते इति प्रति- पादयन्नाह ॥

जनयेत् फलमुत्पन्नं निरुद्धोऽस्तं गतः कथं।
तिष्ठन्नपि कथं फलेन जनयेद्वृतः॥

तिष्ठन्नपि हेतुरविकृतरूपाविद्यमानेन फलेन वृतः संबद्धः कथं जनयेत्॥ इह हि कारणं विकृतिं गच्छन्न जायते॥ अन्यस्य कारणमिति॥ कारणभावप्रतिपद्यमानस्य हेतोरवश्य-विकारेण भवितव्यं यस्तु नाविक्रियते सहेतुलक्षणयुक्त एव न भवतीति॥ फलेन च संबद्धः कथं जनयेत्॥ फलस्य विद्यमानत्वात् अथ मन्यसे विद्यमानस्य फलस्य पुनर्जनयितुमशक्यत्वा-दवृत एवासंबद्ध एव हेतुफलेन फलं जनयिष्यतीति॥ एतदप्ययुक्तमित्याह॥

अथावृतः फलेनासौ कतमज्जनयेत् फलं।
यदि हेतुफलेनासंबद्ध एवेष्यते तदा॥

कतमदिदानीं फलं जनयतु सर्व्वमेव वा फलं जनयदसंबद्धत्वात्॥ नवा किञ्चिज्जनय-दसंबद्धत्वादेवेत्यभिप्रायः किञ्चान्यत् यदि हेतुः फलं जनयेत्। सदृष्टो वा फलं जनयददृष्टो वा॥ उभयथा च न युज्यत इत्याह॥ न ह्यदृष्टस्य दृष्टस्य हेतुर्जनयते फलं तत्र यदि हेतुर्दृष्ट्वा जनयतीति परिकल्पिते तन्न युज्यते॥ यस्माद्धित्यमान एव द्रष्टुं पार्य्यतेनाविद्य-मानं विद्यमानं चेत्तन्यते विद्यमानत्वादिति॥ एवं तावद्धेतुफलं दृष्ट्वा जनयति॥ सर्व्वस्य फलस्य हेतोर्जनकत्वप्रसङ्गात्॥ अथ किमिदं दर्शनं किं वा अदर्शनमित्युच्यते प्रसिद्धमेत-ल्लोक उपलब्धिदर्शनमिति॥ नलेकवीजादिषु नेन्द्रियेषु संभवति सम्भवे तु भावानामस्मा-नास्माकमयं पर्य्यनुयोगः। किन्तर्हि तस्योत्पादवादिनः। तत्र यदुत्पादवादं ब्रूयात् दृष्ट्वा जन-यतीति सव्यक्तव्यानदृष्टमेतल्लोकयद्वीजादिकं पश्यतीति तस्मादयुक्तैषा कल्पना॥ अथ दृष्टेति कल्पयदेवमपि यावत्किञ्चिददृष्टं सम्भवति॥ तत्सर्व्वमुत्पादयन्न चोत्पादयति तस्मान्नादृष्टमपि जनयति॥ अनिष्टापत्त्या हि चेमां परिकल्पनां विचारयामास॥ संसाराटवीकान्तारगिरि-दरीप्रपातदुःखमालासमालामालतारतामिव बुद्धिपूर्व्वकर्त्तृकं च पुरुषादिकारणिनो जगद-भ्युपगच्छन्तो निग्रन्थ्यास्मैकन्द्रियं वीजादिकं प्रतिपन्नाः प्रसङ्गान्न व्यतिवर्त्तन्त इति॥ तस्मान्नास्ति दोषः॥ किञ्चान्यत्॥ यदि युष्मदभिमताद्धेतोः फलस्य वान्यान्यढौकनलक्षणं॥ संगमनं स्यात् स्यात्तदानीं तयोर्जन्यजनकभावो यस्मान्न हि परस्परासंगतयोरालोकान्धकारयोः संसार-निर्व्वाणयोर्जन्यजनकभावादृष्ट इति॥ अतोऽवश्यहेतुफलभावयोर्जन्यजनकभावमिच्छता परेण संगतिरभ्युपेया॥ स च कालत्रयेऽपि विचार्य्यमाणो न सम्भवति॥ अतो हेतुः फलं जनयति॥ यथा च संगतिर्वास्ति तथा प्रतिपादयन्नाह॥

नातीतस्य ह्यतीतेन फलस्य सह हेतुना।
नाजातेन तु नष्टेन संगतिर्जातु विद्यते॥

अतीतस्य तावत् फलस्यातीतेन सह जातु कदाचिदपि संगतिर्नास्ति अतीतत्वेनोभयो-रप्यविद्यमानत्वात् ॥ नाप्यजातेन हेतुनाऽतीतस्य फलस्य संगतिर्जातुविद्यते नष्टाजातत्वे-नोभयोरप्यविद्यमानत्वात् ॥ भिन्नकालत्वाच्च ॥ नापि जातेन वर्त्तमानेन हेतुना सहातीतस्य फलस्य संगतिः ॥ सम्भवविभिन्नकालत्वान्नष्टस्य च फलस्याविद्यमानत्वाद्वन्ध्यापुत्रेन च देवदत्तस्येत्यभिप्रायः ॥ यथा चातीतस्य फलस्यातीतेनागतवर्त्तमानेन हेतुना सह कदाचित् संगतिरस्ति ॥ एवं वर्तमानस्यापि फलस्य त्रैकालिकेन हेतुना सह नास्ति संगतिरिति तत्प्रतिपादयन्नाह ॥

नजातस्य ह्यजातेन फलस्य सह हेतुना ।
नातीतेन नजातेन संगतिर्जातु विद्यते ॥ २

जातस्य फलस्य भिन्नकालत्वादजातेन वातीतेन च हेतुना सह संगमनेनास्ति नापि वर्त्तमानस्य वर्त्तमानेन हेतुना सह संगतिरस्ति हेतुफलयोर्योगपद्याभावात् ॥ समाप्तसंगति-वैयर्थ्यात् ॥ किं तर्हि विद्यमानयोः परस्परनिरपेक्षयोः पुनः संगत्या प्रयोजनमिति नास्ति संगतिः ॥ इदानीं नागतस्यापि फलस्य यथातीता नागतप्रत्युत्पन्नेन हेतुना सह संगमनं नास्ति तथा प्रतिपादयन्नाह ॥

नाजातस्य हि जातेन फलस्य सह हेतुना ।
नाजातेन न नष्टेन संगतिर्जातु विद्यते ॥ २१

अजातं हि फलमसंविद्यमानं तस्य भिन्नकालेन वर्त्तमानेनातीतेन च हेतुना सह संगमनं भिन्नकालत्वादनागतेनापि हेतुना सह नास्ति संगमनेनोभयोरविद्यमानत्वाद्यदा चैवं सर्व्वथा हेतुफलयोः संगतिर्नास्ति तदा ॥ असत्यां संगतौ हेतुः कथं जनयते फलं नैव हेतुः कथं जनयते फलं नैव हेतुः फलं जनयति संगतेन विद्यमानत्वात् ॥ वन्ध्यापुत्रमिवेत्यभिप्रायः ॥ अथापि स्या सत्यामेव संगतौ हेतुफलं जनयतीति ॥ तदपि न युक्तं कालत्रयेऽपि संगत्य-नुपलब्धः ॥ अथापि कथञ्चिद्धेतुफलयोः संगतिं परिकल्प्यते । एवमपि सत्यां वा संगतौ हेतुः कथं जनयते फलं ॥ सहि तस्य फलस्य पुनर्जन्मवैयर्थ्यात् ॥ असन्निहितानां च संगतेन युक्तं स्यादित्यभिप्रायः ॥ किं चान्यद्धेतुः फलेन शून्यश्चेत् कथं जनयते फलं । यो यः फलस्य हेतुः फलस्य जनक इष्यते स तेन शून्यो वा भवन् फलमुत्पादयेदशून्यो वा ॥ तत्र हेतुः शून्यः फलेन रहितः फलं जनयति ॥ अहेतुवत् फलशून्यत्वात् फलेनाशून्योऽपि हेतुः फलं जनयति विद्यमानत्वात् फलस्य विद्यमानपुत्रदेवदत्त इव ॥ एवं तावत् फलशून्यो वा हेतुः फलं जनयति ॥ यच्चापि फलमुत्पद्यते तच्चाप्यशून्यं वा तत्र तावत् फलं नोत्पद्यते शून्यमशून्यं न निरोत्स्यते ॥

अनिरुद्धमनुत्पन्नमशून्यं तद्भविष्यति ॥

अशून्यं हि फलमप्रतीत्यसमुत्पन्नं स्वभावव्यवस्थितं तदेवंविधं फलं नैवोत्पत्स्यते ॥
अभावस्यानपायित्वाच्च न निरोत्स्यते। ततश्चाशून्यं तदिष्यमाणमनिरुद्धमनुत्पन्नवत् स्यात् ॥
। चैतदिष्टमित्यतोऽशून्यं तत्फलं न भवति ॥ उत्पादनिरोधाभ्युपगमात् ॥ इदानीं शून्यमपि
तत्फलं न सम्भवति ॥ अनुदयव्ययवत् स्वप्रसङ्गादिति प्रतिपादयन्नाह ॥

कथमुत्पद्यते शून्यं कथं शून्यं निरोत्स्यते।
शून्यमप्यनिरुद्धं तदनुत्पन्नं प्रसज्यते ॥

तत्र शून्यमुच्यते ॥ यत्स्वभावेन नास्ति। यच्च वस्तुस्वभावेन नास्ति तत् कथमुत्पत्स्यते ॥
थं वा निरोत्स्यते ॥ नहि स्वभावेनाविद्यमानस्याकाशवदनुदयव्ययौ दृष्टौ तस्माच्छून्यमपि
तत्फलमिष्यमाणमनिरुद्धमनुत्पन्नञ्च प्रसज्यते। किं चान्यत्। यदि हेतुः फलं जनयेत्।
। फलादव्यतिरिक्तो वा जनयेद्व्यतिरिक्तो वा॥ उभयथा नोपपद्यत इत्याह ॥

हेतोः फलस्य चैकत्वं नहि जातूपपद्यते।
हेतोः फलस्य चान्यत्वं नहि जातूपपद्यते ॥

तदेतत् प्रतिज्ञामात्रकमिति प्रतिपादयन्नाह ॥

एकत्वे फलहेत्वोः स्यादैक्यं जनकजन्ययोः।
पृथक्त्वे फलहेत्वोः स्यात्तुल्यो हेतुरहेतुनेति ॥

यदि हेतोः फलस्य चैकत्वं स्यात्तदा जन्यजनकयोरेकत्वे सत्युभयत्वं न स्यात् ॥ न वानयोरेकत्वं
पितापुत्रयोश्चक्षुश्चक्षुर्विज्ञानयो बीजाङ्कुरयोश्चैक्यप्रसङ्गात् ॥ एवं तावत् हेतोः फलस्य चैकत्वं
नास्ति ॥ इदानीमन्यत्वमपि नास्ति किं कारणं यदि हेतोः फलस्य च भवन्मतेनाभि-
मतमन्यत्वं स्यात्तदा परत्र निरपेक्षत्वाद्धेतुनिरपेक्षमेव फलं स्यात् ॥ न चैवमेवमित्यतोऽन्यत्व-
मपि हेतोः फलस्य न संभवति ॥ ययोश्चैवं विचार्य्यमानयोस्तत्त्वान्यत्वे न स्त स्तयोर्न कदा-
चिज्जन्यजनकभाव इष्यतेऽतो नैव हेतुः फलं जनयति। किञ्चान्यत्। यदि हेतुः फलं
जनयेत् तदा तत्फलं स्वभावेन सम्भूतं वा किं चात उभयथा च न युज्यत इत्याह ॥

फलं स्वभावसम्भूतं किं हेतुर्जनयिष्यति।
फलं स्वभावात् सम्भूतं किं हेतुर्जनयिष्यति ॥

तत्र सत्फलं स्वभावेन सम्भूतस्वभावेन विद्यमानेनैतन्न पुनर्जन्यते विद्यमानत्वात् विद्य-
मानघटवत् ॥ यदपि स्वभावेनासम्भूतं फलं तदपि हेतुर्न जनयति स्वभावेनासम्भूतत्वात् ॥

खरविषाणवत् ॥ प्रतिविम्बेनानैकान्तिकतेति चेत् भवत्वनैकान्तिकता निःस्वाभाव्यन्तु
षिद्धिभावानां ततश्च स स्वभाववादत्यागः स्यादस्मद्वादानुवर्णनमेव स्यात् ॥ स स्वभावश्च
न कश्चित् पदार्थो नामास्तीति प्रतिद्वन्द्यभावाभावान्निःस्वभावो नास्तीति । कुतो नैका-
न्तिकता नह्यस्माकं प्रतिविम्बकं सस्वभावं नापि निःस्वभावं धर्म्मिणमन्तरेण तद्धर्म्मयो-
रप्यभावात् नह्यार्य्याः प्रतिविम्बकं नाम किञ्चिन्निःस्वभावं सस्वभावं वोपलभन्त इति ॥
तत्र पूर्व्वफलं नोत्पतृस्यत इत्यादिना श्लोकद्वयेन मोचादुत्पत्तिक्रियाकर्त्तृत्वं फलस्य निषिद्धं ॥
इदानीं हेतोः फलोत्पत्तिक्रियाप्रयोजकत्वं प्रतिषिद्धमिति ॥ अयमस्य पूर्व्वकाविशेष इति
विज्ञेयं ॥

अत्राह ॥ यद्यपि हेतोः फलोत्पत्तिक्रियाप्रयोजकत्वं निषिद्धं तथापि हेतुस्तावत् स्वभा-
वतोऽस्ति न वा सति फलहेतौ हेतुत्व सिध्यति ॥ तस्मात् फलमपि भविष्यतीत्युच्यते
स्याद्धेतु र्यद्यजनयतोऽस्य हेतुत्वं न स्यात् ॥ न वा जनयमानस्य हेतोर्हेतुत्वमुपपद्यते ॥
अथ स्याद्र यद्यप्येवं हेतौ हेतुत्वं नास्ति तथापि फलं तावदस्ति नच हेतुमन्तरेण फलं
युक्तमिति । फलसद्भावाद्धेतुरपि भविष्यतीत्युच्यते । यदाऽजनयमानस्य हेतोर्हेतुत्वं नास्तीत्युक्तं ॥
तदा हेतुत्वानुपपत्तौ च फलं कस्य भविष्यतीति ॥ तस्मात् फलमिति नास्तीति ॥ अत्राह ॥
नैव हि केवलस्य हेतोः फलोत्पत्तिक्रियायाः प्रयोजनकत्वं किन्तर्हि हेतुप्रत्ययसामग्रीफलं
जन्यत इत्युच्यते ॥ उक्तदोषत्वान्न युक्तमेतत् ॥ अपि चेय हेतुप्रत्ययसामग्री यदि फलस्य
जनिकेति कल्प्यते किं सात्ययमेव तावदात्मानं जनयति उताहो न । यदि जनयतीति
कल्प्यते तन्न युज्यते ॥ न ह्यनयोरात्मभावस्य प्रयोजकत्वं दृष्टुमित्यतः सामग्र्या वास्य लब्धात्म-
भावया भवितव्यं न लब्धात्मभावायाः पुनः स्वात्मोत्पादप्रयोजकत्वं युक्तमित्यतो न सामग्री
स्वात्मानमुत्पादयति या चात्मानं नोत्पादयति सा कथं फलमुत्पादयितु शक्नोतीति प्रति
पादयन्नाह ॥

न च प्रत्ययहेतूनामियमात्मानमात्मना ।
या सामग्री जनयते कथं जनयतात् फलं ॥

प्रत्ययानां हेतूनां च येयं सामग्री तावदात्मनैवात्मानं नोत्पादयति स्वात्मनिवृत्ति
निराधात्मत्त्याः पुनरुत्पादवैयर्थ्याच्च ॥ या चैवमात्मानमेव तावन्न जनयति सा कथं फ
जनयिष्यति नहि वन्ध्यादुहिता आत्मानं जनयितुमशक्ता सतो पुत्रं जनयिष्यती
युज्यते ॥ सामग्र्यपि स्वात्माजनिका फलं जनयतीति न युज्यते तस्मान्न सामग्रीकृतं फल
अथापि स्याद् यदि सामग्रीकृतफलं संभवति । एवं तर्ह्यसामग्रीकृतं भविष्यतीति
उच्यते ॥ नासामग्रीकृतं फलं न सम्भवति तदा कथमत्यन्तविरुद्धमसामग्रीकृतं भविष्यति
असामग्रीकृतमिति फलन्न सम्भवति ॥ अथास्याद्यद्यपि नास्ति फलं स्वभावतस्तथ
हेतुप्रत्ययसामग्री तावदस्ति नच फलमन्तरेण हेतुप्रत्ययसामग्री सम्भवति ॥ फलमपि संभ
ष्यतीत्युच्यते ॥ स्याद्धेतुप्रत्ययसामग्री यदि फलमेव भवेत् ॥ यदा तु यथोदितेन न्या

फलमेव नास्ति॥ तदास्ति प्रत्ययसामग्री कुत एव फलं॥ विना फलाभावे सति निर्हेतुक हेतुप्रत्ययसामग्र्यपि नास्तीत्यभिप्रायः॥ उक्तं ह्यार्य्यललितविस्तरसूत्रे॥

कण्ठोष्ठप्रतीत्यतालुकं जिह्वापरिवर्त्तिरवन्तिरक्षराः।
नच कण्ठगतानतालुक अक्षरैकैकस्य नोपलभ्यते॥
सामग्रीप्रतीत्येवं च सा वाचमनबुद्धिवसननीश्वरी॥
मनोवाच अदृश्यरूपिणी वाह्यतान्तरिनोपलभ्यते॥
उत्पादव्ययं विपश्यतो वाचरुतघोषस्वरस्य पण्डितः॥
क्षणिका वशिका तदादृशी सर्वा वाचप्रतिश्रुतकोपमा॥

तथार्य्यपरिपरिपृच्छयामुक्तं भगवता॥ इह सामनिमूलमनो प्रव्रयया गृहिलिंगं जहित्वा बलवन्तो भविष्यथ अग्रा एषु निर्द्दिशितः कारुणिकेन॥ प्रव्रजित्वा गृहिलिङ्गं जहित्वा फल्य-फलस्य भविष्यति प्राप्तिः॥ पुनर्धर्म्मस्वभावतुलिः सर्व्वफलानफलानफला नत्र प्राप्तिः॥ अलभन्तफलन्तय प्राप्तौ आश्चर्य्यं पुनः जायति तेषां अहो अतिकारुणिका नरसिंहा मुष्टु प्रदर्शितसूक्तिजिनेनेति॥ यथार्य्यप्रज्ञापारमितायामष्टसाहस्रिकायां ते नहि कौशिक बोधि-सत्त्वेन महासत्त्वेन सहासं नादसन्नद्धेन न रूपे स्यातव्यं न वेदनायां न संज्ञायां न संस्कारे पुनर्विज्ञाने स्यातव्यं॥ नस्रोतआपत्तिफलेन सकृदागामिनाफलेनानागामिफलेनार्हत्वेन प्रत्येकबुद्धत्वेन सम्यक् सम्बुद्धत्वे स्यातव्यमिति॥

इत्याचार्य्यचन्द्रकीर्त्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
सामग्रीपरीक्षानामविंशतितमं प्रकरणम्॥

---

अत्राह। विद्यत एव स्वभावतः कालः सम्भवविभवनिमित्तत्वात्॥ इह कश्चित्काल-सपेक्षाङ्कुरोपपत्तिभावानामुत्पादो भवति कश्चित् कालविशषमपेक्ष्य विभवविनाशो भवति॥ न सर्व्वदाविद्यमानापि हेतुप्रत्ययसामग्रीत्यतो विद्यत एव कालः सम्भवविभवनिमित्त-त्वात् उच्यते॥ स्यात् सम्भवति भवनिमित्ततो कालस्य सम्भवविभवावेव स्यातां नतुस्तः॥ यथा च नस्तस्तथा प्रतिपादयन्नाह॥

विना वा सह वा नास्ति विभवः संभवेन वै।
विना वा सह वा नास्ति संभवो विभवेन वै॥

इह यदि संभवविभवौ स्यातां तावन्योन्यं सह भावेन वा स्यातां विना भावेन वा॥ उभयथा च विचार्य्यमाणौ न सम्भवतः कथं कृत्वा॥ तत्र तावद्यथा विना संभवमोत्पादे च

विभवो विनाशो नास्ति तथा प्रतिपादयन्नाह ॥ भविष्यति ॥ कथं नामविभवसम्भवं विना विनैव जन्ममरणविभवं नोद्भवं विना ॥ सम्भवं विना कथं नामविभवो विनाशो भविष्यति कथं नाम सत्येन प्रसिद्धमत्यन्तासम्भवं दर्शयति ॥ कथं नाम भविष्यतीति नैवेतत् सम्भवतीत्यभिप्रायः ॥ यदि पुनर्विनैव सम्भवं विभवः स्यात् कः स स्यादुच्यते विनैव जन्ममरणं स्यात् ॥ अजातस्य मरणं स्यान्न वा जातस्य मरणं दृष्टमिति ॥ तस्माद्विभवो नोद्भवं विना भवितुमर्हति ॥ आद्येनात्र श्लोकस्यार्द्धेन प्रतिज्ञामध्येनोपादनप्रसङ्गापादनं ॥ अन्तेन निमगनमिति विज्ञेयं ॥ एवं तावद्विना संभवेन विभवो न युक्त इति प्रतिपाद्येदानीं सह सम्भवेनापि विभवो यथा न सम्भवति तथा प्रतिपादयन्नाह ॥

संभवेनैव विभवः कथं सह भविष्यति ।
न जन्ममरणं चैव तुल्यकालं हि विद्यते ॥

यदि हि संभवेन सह युगपत्तस्य काले विभवः स्यादेवं सति जन्ममरणे युगपत् स्यातां परस्परविरुद्ध आलोकान्धकारवदेकस्मिन् काले विद्यत इति ॥ तस्मात् सदापि संसरणविभवस्य नास्ति सिद्धिरिति स्थितं ॥ यदा चैवं सभवेन विना वा सह वा विभवस्य नास्ति सिद्धिरेवं संभवस्यापि विना सह वा विभवेन नास्ति सिद्धिरिति प्रतिपादयन्नाह ॥

भविष्यति कथं नाम संभवो विभवं विना ।
अनित्यतो हि भावेषु न कदाचिन्न विद्यते ॥

नैव हि संभवो विभवेन विना युज्यते ॥ यस्मादनित्यतो हि भावेषु भवनधर्म्मकेषूत्पादधर्म्मकेषु न कदाचिन्न विद्यते ॥ किं वा तर्हि सर्व्वदेव विद्यते ॥ उक्तं हि ॥

जरामरणधर्म्मेषु सर्व्वभावेषु सर्व्वदा ।
तिष्ठन्ति कतमे भावा ये जरामरणं विनेति ॥

यदा चैवं नित्यमनित्यतोऽनुगताः सर्व्वे भावास्तदा कुतः सा काचिदवस्था या विनाशरहिता स्यादितोऽस्य नास्ति विभवेन विनोत्पादसम्भव इत्येवं तावद्विना विभवेन नास्ति सम्भवः ॥ शेषमत्र संस्कृतपरीक्षायां विचारितत्वान्न विचार्य्यते ॥ यस्तु सहेतुको विनाशः संस्कृतलक्षणत्वादुत्पादवदिति साधनमुक्तिव्यास्यचित्तलक्षणैरनैकान्तिकतामाह ॥ स न युक्तमाह ॥ तद्विनाशस्यापि जातिप्रत्ययत्वेन सहेतुकत्वात् साध्यसमत्वाच्चानैकान्तिकताभावात् ॥ यदपि निर्द्दिष्टं भावात्मभाव एवाभूत्वा भावादुत्पाद उच्यते ॥ तस्माद्व्यसदुत्पादसिद्धव्यवहारतोऽपि दृष्टान्तभाव इति ॥ तदपि न युक्तं ॥ अद्रव्यसतां प्रतिविम्बादि ॥ न सहेतुकत्वाभ्युपगमात् ॥ यथोक्तमाचार्य्यपादैः हेतुतामेव वा ॥ येषां तदभावान्न सन्ति यत् कथं नाम न तथेष्टं प्रतिविम्बसमागतमिति ॥ अस्मादागमात् कुतो व्यवहारतो दृष्टान्ता

सिद्धिः॥ यदि च भावात्॥ यत्तत्त्वान्यत्वेन न शक्यते वक्तुं तत्संवृत्यापि नास्तीत्युच्यते॥ नीलादिकमपि नास्तीत्युच्यते॥ यथोक्तं रत्नावल्यां।

रूपस्याभावमात्रत्वादाकाशं नाममात्रकं।
भूतैर्विना कुतो रूपं नाममात्रकमुच्यत इति॥

अपि च॥ कुतो माध्यमिकानां स्वभावरूपं सिद्धमलोकं यस्यावस्थाविशेष उत्पादयुक्तमेव दृष्टान्तासिद्धतोद्भावनं॥ यच्चोक्तन्न सहेतुको विनाशो विनाशत्वाद्यथाऽसंस्कृतमिति॥ तमेव ब्रुवता महान् विरोधोऽनेन हेतुना भवति॥ यथा ह्ययं हेतुर्विनाशस्य निर्हेतुकत्वं साधयति॥ एवं लक्षणं संस्कृतत्वाभावेष्वपि साधयति॥ तथा संस्कारस्कन्धसंग्रहप्रतीत्यसमुत्पादाङ्गसंग्रहादिकमपि सर्व्वं विरोधयतीति न युक्तमेतन्मतं॥ तथा न विज्ञानं विषयस्वरूपज्ञेऽकमविज्ञानवत्त्वादसंस्कृतवदित्यादिना सर्व्वविरोधान्मह्त्यनिष्टापत्तिर्नोपपद्यतेऽस्ति नास्त्येयमेतत्॥ इदानीं विभवेन सह यथा सम्भवस्य नास्ति सिद्धिस्तथा प्रतिपादयन्नाह॥

संभवो विभवेनैव कथं सह भविष्यति।
न जन्ममरणं चैव तुल्यकालं हि विद्यते॥

यदि हि सम्भवो विभवेनैव सह स्यात्तदा जन्ममरणयोस्तुल्यकालता स्यान्न च संभवति॥ तस्मात् सह भावेनापि संभवति भवयोर्नास्ति सिद्धिः॥ अथ स्याद्यद्यपि जन्ममरणयोरेकीभावेन वा नानाभावेन वा नास्ति तथापि विद्यते॥ एवं संभवविभवो वाच्यत्वाद्विज्ञानवदित्युच्यते॥ यदि वाच्यत्वेनानयोः सिद्धिरिष्यते वन्ध्यापुत्रस्यापीष्यतां॥ अपिच॥

सह नान्येन वा सिद्धिर्विना नान्येन वा ययोः।

सिद्धिः कथं नु खलु विद्यते। सहभावासहभावरहितं नास्ति॥ पक्षान्तरं यतः सम्भवविभवयोः सिद्धिः स्यादवाच्यतया सिद्धिर्भविष्यतीति चेत्॥ कथमवाच्यता नाम॥ यदि मिश्रीभावस्यानुपपन्नः। पृथग् पृथग् सिद्धयोर्मिश्रामिश्रीभावाभावात्॥ अनिद्धार्य्यमानो स्वरूपत्वाद्वन्ध्यापुत्रस्यामगौरतादिवन्न एव संभवविभवाविति स्यात्॥ यदा चैवं संभवविभवौ नस्तस्तदा तद्धेतुरपि कालो नास्तीति सिद्धं किञ्चान्यत्॥ इह तो संभवविभवौ परिकल्प्यमानौ क्षयधर्म्मिणौ वा भावस्य परिकल्पयतामक्षयधर्म्मिणां वा। उभयथा च नोपपद्यत इति प्रतिपादयन्नाह॥

अक्षयसंभवो नास्ति नाक्षयस्यास्ति संभवः।
क्षयस्य विभवो नास्ति विभवो नाक्षयस्य च॥

तत्र च यस्य क्षयलक्षणस्य भावस्य विरोधिधर्मसद्भावात् सम्भवो न युक्तः। अक्षयस्यापि भावलक्षणविमुक्तत्वात् खरविषाणस्य च संभवो न युक्तः॥ एवं क्षयस्य विभवो नास्ति नाक्षयधर्म्मा ह्यविद्यमानस्तस्य निराश्रयाविभवो न युक्तः। तथा विभवो नाक्षयस्य च। अक्षयधर्म्मो हि भावाभावलक्षणविलक्षणस्तस्याविद्यमानस्य कुतो विभवो भविष्यति। यौ न सम्भवविभवौ क्षयधर्म्मिणो नाक्षयधर्म्मिणो भावस्य संभवेत्तेनैव सम्भवत इति नस्तः सम्भवविभवौ॥ अत्राह॥ विद्येत एव भावानां सम्भवविभवौ तदाश्रयिधर्म्मिसद्भावात्॥ इह भावाश्रयौ संभवविभवौ स च तावद्भावोऽस्ति तत्सद्भावात्तदाश्रितावपि धर्म्मौ भविष्यत इत्युच्यते॥ स्यातां भावाश्रितावेतौ धर्म्मौ यदि भावः स्याद्यदा तु भावो नास्ति तदा॥

सम्भवो विभवश्चैव विना भावं न विद्यते॥

कस्मात् पुनर्भवाभावता नास्तीति चेत्॥ यस्मात्—

सम्भवं विभवं चैव विना भावो न विद्यते॥

भावस्य हि लक्षणभूतौ संभवविभवौ तौ च स्वरूपतो नस्त इति प्रसिद्धौ। यदा च तौ भावतः प्रतिषिद्धौ तदा च लक्षणं संभवं विभवं च विना कुतो वा लक्षणविलक्षणो भावो भविष्यति। भावं च विना नस्तः संभवविभवौ॥ अपरे तु पूर्व्वार्द्धं पश्चिमं कृत्वा व्याचक्षते॥ स्त एव संभवविभवौ भावधर्म्मित्वात्। इह यन्नास्ति न तस्यास्ति भावधर्मत्वं तद्यथा॥ मण्डूकजटाशिरोमणेः भावधर्म्मौ च सम्भवविभवौ तस्मात् स्त एव ताविति॥ यदि कश्चित् परमार्थतः सम्भवविभवौ स्यातां सभाव इति युक्तं स्यादभिधातुं तौ च नष्ट इति॥

सम्भवं विभवं चैव विना भावो न विद्यते॥

भावस्य संभवविभवत्वादिति भावः॥ सदसत्त्वे च हेतोरसिद्धार्थता तथा संभवो विभवश्चैव विना भावन्न विद्यते॥ आश्रयस्याभावादाश्रितस्यासिद्धिरित्यभिसन्धिरिति॥ किं चान्यत्॥ इह यौ सम्भवविभवौ परिकल्प्यमानौ शून्यस्य वा भावस्य परिकल्प्यतामशून्यस्य वा॥ उभयथा च नोपपद्यत इति प्रतिपादयन्नाह॥

संभवो विभवश्चैव न शून्यस्योपपद्यते।

अविद्यमानाश्रयत्वादाकाशचित्रवदित्यभिप्रायः। तथा संभवो विभवश्चैव नाशून्यस्योपपद्यते॥ अशून्यस्यासत्त्वात् निराश्रयौ सम्भवविभवौ नोपपद्यतः किञ्चान्यत्॥ इह यदि सम्भवविभवौ स्यातां तावेकत्वेन वा स्यातामन्यत्वेन वा॥ उभयथा च नोपपद्यत इत्याह॥

सम्भवो विभवश्चैव नैक इत्युपपद्यते॥

परस्परविरुद्धयोरालोकान्धकारयोरिवैकत्वानुपपत्तेः॥

सम्भवो विभवस्यैव न नानेत्युपपद्यते॥

उभयोः परस्परमव्यभिचारित्वात्॥ नहि सम्भवरहितस्य विनाशो न विभवरहितस्य सम्भवो दृष्ट इति॥ एवमुभयोः परस्परमव्यभिचारित्वात्॥

सम्भवो विभवस्यैव न नानेत्युपपद्यते॥

अथ स्यात् किमनयोः शून्योक्तिकयोरागोपालाङ्गनादिको हि जनादयस्मात् सम्भवविभवं च पश्यति तस्मात् स्तः सम्भवविभवौ॥ न ह्यविद्यमानो बन्ध्यातनयः शक्यो द्रष्टुमिति॥ एवमपि च सम्भवश्चैव विभवश्चैव तु भवेत्॥ उच्यते॥ अनैकान्तिकमेतत्॥ नहि यद्यल्लोकेनोभयं लभ्यते तस्य तस्यास्तित्वं॥ तथा ह्यागोपालांगणादिको जनो गन्धर्व्वनगरमायास्वप्नालातचक्रमरीचिकासलिलादिकमसंविद्यमानमपि पश्यति॥ इन्द्रियोपघातादेवमिममपि सम्भवविभव व्रसन्तो* मोहादेव पश्यतीत्याह॥

दृश्यते सम्भवश्चैव मोहाद्विभव एव च।

अथ कस्मात् पुनरेतदेवं निश्चीयत अविद्यमानस्वरूपाविमौ सम्भवविभवौ मोहादेव वावलोकेन दृश्यत इति॥ युक्त्यो ह्येतदेवं निश्चीयते॥ का पुनरत्र युक्तिरिह यदि कश्चिद्भावो नाम भवेन्नियतं स्वभावाद्वा जायते त्वभावाद्वा॥ तथा यद्यभावो नाम कश्चित् सोऽपि भावाद्वा जायते भावाद्वा॥ उभयथा वोभयोरप्यसंभव इत्याह॥

नभावो जायते भावो भावोऽभावान्न जायते॥

भावाभावसंभवाख्या भावस्य सम्भवाख्यस्योत्पादो नच विद्यते। कार्य्यकारणयोर्योगपद्याभावादुत्पादस्य च लब्धजन्मनः पुनरुत्पादवैयर्थ्यादभावादपि भावो न जायते किं कारणं। अभावो हि नामविभवो विनाशः स च भावविरुद्धः॥ तस्माद्भावविरुद्धात् कथं भावः स्यात्॥ यदि स्यात्तदा बन्ध्यादुहितुरपि पुत्रः स्यान्न चैतदेवमिति॥ तस्मादभावादपि भावेन भवति॥ इदानीमभावोऽप्यभावान्न भवति॥ भावनिवृत्तिरूपो ह्यभावस्तत्कुतोऽस्य कार्य्यकारणसामर्थ्यं यदि स्यान्निर्व्वाणस्यापि कार्य्यकारणसामर्थ्यं स्यात्॥ यदि वा भावादभावः स्यात्तदा बन्ध्यादुहितुरपि पुत्रः स्यान्न चैतदेवमिति॥ तस्मादभावादप्यभावो न भवति इदानीं भावादप्यभावो न भवति भावविरुद्धो ह्यभावः स कथं भावाद्भवेत्॥ यदि भवेत् प्रदीपोऽन्धकारः स्यात्॥ यतश्चैवं विचार्य्यमाणौ संभवविभवौ नस्तस्तस्मान्मोहादेव लोकेन दृश्यत इति विज्ञेयं॥ अथवायमन्यः पूर्व्वपक्षः इह हि यदि सम्भवविभवौ स्यातां तौ

---

* व्रसन्तो इत्यधायं पाठश्चिन्त्यः।

भावाश्रयौ वा स्यातामभावाश्रयौ वा तौ च भावाभावौ सर्व्वथा विचार्य्यमाणौ न सम्भवतः। ततश्च कुतो निराश्रयौ संभवविभवावित्यतो दृश्यते सम्भवश्चैव मोहाद्विभवश्चेति विज्ञेयं। यथा च भावाभावौ न संभवतस्तथा प्रतिपादयन्नाह ॥

नभावो जायते भावो भावोऽभावान्न जायते ॥
नाभावो जायतेऽभावोऽभावो भावान्न जायते ॥

अस्यार्थः पूर्व्ववत् ॥ अपिच यदि कश्चिद्भावो नाम स्यात् ॥ तस्मादयव्ययवत्वात्संभवविभवौ स्यातां नच कश्चिद्भावः स्वरूपतोऽस्ति खरविषाणवत् स्वभावानुपपन्नत्वादनुत्पन्नत्वमसिद्धमिति चेन्न सिद्धं यस्मात् ॥

न स्वतो जायते भावः परतो नैव जायते ।
न स्वतः परतश्चैव जायते जायते कुतः ॥

एतच्चाद्य एव प्रकरणे व्याख्यातत्वात् ॥ न पुनर्व्याख्यायते ॥ यश्चैवं यथोक्तं ॥ प्रकारैर्न जायते स इदानीं कुतो जायते नैव कुतश्चिज्जायत इत्यभिप्रायः ॥ अवश्यं चैतदेवमभ्युपेयं सर्व्वथा नास्ति भावस्योत्पाद इति ॥ भावसद्भावतोऽभ्युपगमे च भवतः शाश्वतोच्छेददर्शनमाप्यते ॥ वौद्धमतमनुगत्येत्याह ॥

भावमभ्युपपन्नस्य शाश्वतोच्छेददर्शनं ।

प्रसज्यते यस्मात् स्वभावो हि नित्योऽनित्यो वा भवेत् ॥ यो हि यथोदितपदार्थव्यवस्थामतिक्रम्य भावसद्भावदर्शनमभ्युपैति तस्यावश्यं प्रवचनात्यन्तविरुद्धं शाश्वतोच्छेददर्शनद्वयमापद्यते किं कारणं ॥ यस्मात् स्वभावः परिकल्प्यमानो नित्यो वा भवेदनित्यो वा । यदि नित्यस्तदा नियतं शाश्वतवादः । अथानित्यस्तदा नियतमुच्छेद इत्यत्राह ॥

भावमभ्युपपन्नस्य नैवोच्छेदो न शाश्वतं ।

किं कारणं ॥ यस्मादुदयव्ययसन्तानः फलहेतोर्भवः । स हि य इह हि हेतुफलयोरुदयव्ययानुप्रबन्धः स ह्यस्माकं भवेत् संसारस्तत्र यदि हेतुर्निरुध्यते तदा तद्धेतुकं फलं नोत्पद्य तस्मादुच्छेदवाददोषः ॥ यदि च हेतुरनिरुध्यते स्वरूपेणावतिष्ठेत्तदा स्याच्छाश्वतवाददर्शनदोषः न चैतदेवमिति तस्माद्भावाभ्युपगमेऽपि शाश्वतोच्छेददर्शनदोषद्वयप्रसङ्गः यत्र संसारो योऽयं हेतुफलाविच्छिन्नक्रमवर्त्ती—उत्पादव्ययानुप्रबन्धः संस्काराणामिति ॥ अतो नास्त्यस्माकमयं दोष इत्युच्यते ॥ यो ह्युदयव्ययसन्तानः फलहेतोर्भवः स चेत् ॥ नन्वेवमपि सति व्ययस्यापुनरुत्पत्तिहेतूच्छेदः प्रसज्यते ॥ यो हि हेतुलक्षणः फलस्योत्पत्तौ हेतुभावमुपेत्य निरुध्यते ॥ ननु तस्य व्ययवतो हेतुलक्षणस्य पुनरनुत्पादादुच्छेददर्शनमापद्यते ॥ तत्रायं कथं न दोष इति च भावमभ्युपपन्नस्यायं दोषो नच मयाभावोऽभ्युपगतः स्वभावानुत्पन्नत्वात् सर्व्वधर्म्माणां ॥

यत्रापि मया प्रतीत्य यद्यद्भवति नहि तावत्तदेव तत् ।
नचान्यदपि तत्तस्मान्नोच्छेदो नापि शाश्वतमित्युक्तं ॥

तत्राप्यमुना न्यायेन नैःस्वाभाव्यमेव भावानां प्रतिपादितं ॥ अथान्ये हि सतोः भावस्वभावस्वरूपबीजाङ्कुरयोः कथमन्यत्वं न स्यात्तस्मान्नायं प्रसङ्गोऽस्माकं बाधक इति ॥ एवं तावद्भावमभ्युपपन्नस्य हेतोः पुनरनुत्पादादुच्छेददर्शनप्रसङ्गमुद्भाव्येदानीं शाश्वतवादप्रसङ्गमुद्भावयन्नाह ॥

सद्भावस्य स्वभावेन नासद्भावस्य युज्यते ॥

यदि हेतोः सद्भावः स्वभावतः स्यात्तस्य पश्चादसद्भावो न स्यात् स्वभावस्यानपायित्वात् ॥ ततश्च शाश्वतदर्शनप्रसङ्गस्तदवस्थ एव क्रियान्यात् ॥

निर्व्वाणकाले वोच्छेदः प्रसङ्गाद्भवसन्ततेः ॥

यद्यपि हेतुफलयोरुदयव्ययसन्तानप्रवृत्त्या शाश्वतोच्छेददर्शनप्रसङ्गः परिह्रियते तथापि यथास्य सन्तानस्य पुनरप्यप्रवृत्तिस्तत्र निर्व्वाणनियतमुच्छेददर्शनमापद्यते ॥ उच्छेददर्शनं च प्रहातव्यमित्युक्तं भगवता ॥ एवम्विधमुच्छेददर्शनन्न भविष्यतीति चेदन्यदपि किमर्थं भविष्यतीति भावविच्छेदालम्बनत्वात् ॥ निर्व्वाणकालभावोच्छेदालम्बनवादित्यभिप्रायः । यच्चोक्तमुदयव्ययसन्तानः फलहेतोर्भवः स हीति तदपि नोपपद्यते ॥ कथं कृत्वा इह हि चरमाभवागतिवृत्तिलक्षणः प्रथमागतिसन्धिलक्षणस्तत्रचरमाभवानिरुध्यमानो हेतुत्वेनावतिष्ठते ॥ उपपत्तिलक्षणस्तु प्रथमाभवः फलरूपत्वेन व्यवतिष्ठते॥ अनयोः स्वभावयोः संसार इति संज्ञा कृता ॥ अत्र चेदं विचार्य्यते ॥ य एषः प्रथमाभवः फलरूपत्वेन व्यवस्थाप्यते ॥ स किं चरमभवनिरुद्ध उपजायते अथानिरुध्ये उत निरुध्यमाने यदा हेतुफलानुप्रबन्धात् सर्व्वथा विचार्य्यमाणो न सम्भवतीति प्रतिपादयन्नाह ॥

चरमे न निरुध्ये च प्रथमा युज्यते भवः ।
चरमे नानिरुध्ये च प्रथमा युज्यते भवः ॥

तत्र यदि चरमे भवे निरुध्ये प्रथमाभवो जायत इति परिकल्प्यते तदा निर्हेतुकः स्यात् ॥ इह न दग्धबीजादप्यङ्कुरोदयः स्यान्न चैतदिष्टं ॥ तस्माच्चरमनिरुद्धप्रथमाभवो नियुज्यते ॥ इदानीमनिरुद्धेऽपि चरमभवे प्रथमाभवो न युज्यते ॥ यदि स्यान्निर्हेतुकः स्याद्धिरूपतो चैकस्य सत्त्वस्य स्यादपूर्व्वसत्त्वप्रादुर्भावश्च पूर्व्वस्य च नित्यता स्यात् । अविनष्टे च बीज अङ्कुरोदयः स्यात् ॥ न चैतदेवमिष्टमिति ॥

अतश्चरमे नानिरुद्धे च प्रथमा युज्यते भव इति स्थितं ॥ इदानीं निरुध्यमानेऽपि चरमभवे प्रथमाभवो यथा नोपपद्यते तथा प्रतिपादयन्नाह ॥

निरुध्यमाने चरमे प्रथमा जायते गतिः।
निरुध्यमान एकः स्यात् जायमानः परो भवेत्॥

तत्र निरुध्यमानो वर्त्तमानो वर्त्तमानप्रत्ययान्तवाच्यत्वात् जायत इत्यपि वर्त्तमान एवोच्यते वर्त्तमानशब्दवाच्यत्वात्॥ अथवा निरुध्यमानो निरोधक्रियाकारकः। यश्चापि जायते स चापि जनः क्रियाकारकस्तौ चैककालाविद्यमाणौ यौगपद्येनैव स्तस्ततश्च निरुध्यमान एकोभवः स्याज्जायमानश्चापर इति यौगपद्येनैव द्वौ भवौ प्राप्नुतः। न चैकस्य युगपद् द्वौ भवौ सम्भव इत्ययुक्तमेतत्॥ तदेवं यथोक्तेन विचारक्रमेण न चेन्निरुध्यमानस्य जायमानस्य युज्यते॥

साद्धं च म्रियते येषु तेषु स्कन्धेषु जायते॥

च शब्दः समुच्चयार्थः। पृथक् पृथक् च तत्तत्सन्निधापयति॥ यथैवं यथोदितन्यायेन निरुध्ये चरमप्रथमाभवो न सम्भवति॥ अनिरुद्धेऽपि चरमप्रथमाभवो न सम्भवति॥ साद्धं चैकस्मिंश्च काले चरमेन भवेन सह प्रथमाभवो न संभवति॥ तत् किमिदानीं येष्वेव स्कन्धेषु म्रियते तेष्वेव जायत इति स्यात्॥ येषु स्कन्धेषु स्थितो म्रियते तेष्वेव जायत इत्यत्यन्तविरुद्धमेतत् नहि म्रियमानो जायत इति दृष्टं॥ तदेवं त्रिष्वपि कालेषु न युक्ता भवतां धीमतां भवसन्ततिः॥ चरमभवे निरुद्धेऽनिरुद्धनिरुध्यमाने यस्मात् प्रथमाभवो न सम्भवति तस्मात् त्रिष्वपि कालेषु भवसन्ततिर्नास्ति। या चेदानीं त्रिषु कालेषु नास्ति कुतः सान्येनात्मना भविष्यतीति॥ सर्व्वथा नास्ति भवन्मता भवसन्ततिः। ततश्च यदुक्तमुदयव्ययसन्तानः फलहेतूद्भवः सहेति तन्न युक्तं ततश्च भावाभ्युपगमे सति स एव शाश्वतोच्छेदवादप्रसङ्गो दुर्निवारो भवतामित्यतो नास्त्येव भावानां स्वभावत उत्पत्तिरिति सिद्धं॥ यथोक्तमार्य्यसमाधिराजभट्टारकेन॥

तहि कालि सो दशबलाऽनघो जिनुभाषत।
इमु समाधिवरं स्वप्नोपमा भगवती सकला॥
नच कश्चि जायते न वा म्रियते नच सत्व लभ्यति।
न जीवु नरा इमि धर्म्मफलेन कदलीसदृशाः॥
मायोपमा गगनविद्युसमोदकचन्द्रसन्निभमरीचिसमाः।
नच अस्मिंलोकि मृतु कश्चि नलो परलोकि संक्रमति गच्छति वा॥
नच कर्म्म नश्यति कदा विकृतं फलुदेति कृष्णशुभं संसरतो नच शाश्वतं।
नच उच्छेदपुनो नच कर्म्मसञ्चयु नचापि स्थिति।
नच सापि कृत्य पुनरस्पृशती नच अत्युकृत्य पुनर्वेदयते॥

नच संक्रमो नचपुना नागमनं नच सर्व्वमस्ति नच नास्ति पुनः।
नच दृष्टिस्थानगतिशुद्धिरिहा नच सत्यचारु सुप्रशान्तगतो॥
अनुत्पादु शान्त अनिमित्तपदं सुगतानुगोचरु जिनानुगुणाः।
वरधारणीदशबला न बलं।
बुद्धा नियं वृषभिता परमां चर शुक्लधर्म्मगुणमन्निचया।
गुणज्ञानधारणिबलं परममर्द्धविकुर्व्वणविधिः॥

परमा वरपञ्चाभिज्ञप्रतिलाभनय इति विस्तरः। तथा वीजस्य सतो यथाङ्कुरो नच यो वीजस्य नैवाङ्कुरो नच अच्युततो न चैतदसमुच्छेद अशाश्वतधर्म्मता। मुद्रातः प्रतिमुद्रा दृश्यते मुद्रासंक्रान्ति नैचोपलभ्यते॥ नच अनाने चैव सान्यता॥ एवमनुच्छेद अशाश्वत-धर्म्मतेति॥ अतएवोक्तमार्य्यनागार्ज्जुनपादैः।

स्वाध्ययदीपमुद्रादर्पणे घोषार्ककान्तवीजाम्लैः।
स्कन्धप्रतिसन्धिरसंक्रमश्च विदद्भिरवधार्य्यत इति॥

तथा भगवान् जायते व्ययते तत्रापि नच जातिर्न च च्युतिः। यस्य वीजानीते॥ एष समाधिर्नास्य दुर्लभ इति॥

तथा सुसुखिता सदतरलोके यहिरचिन्तिय शातिमिधर्म्माः।
नच धर्म्म अधर्म्मविकल्पो वित्तप्रपञ्च विभावित सर्वि॥
भाव अभाव विभाव विज्ञानं सर्व्वमचिन्तयि सर्व्वमभूतं।
य पुन वित्तवशानुगबाल्यास्ते दुःखिता भव कोटिशतेषु॥
यापि च चिन्तयि शून्यकधर्म्मान् सापि कुमार्गप्रपन्नकुबालः।
अचरकीर्त्तितशून्यकधर्म्मास्तव अनचर अचर उक्तः॥
शान्तप्रशान्तयचिन्तयि धर्म्मान् सापि च चिन्तन जातु नभूतः।
चित्तवितर्कणसर्विप्रपञ्चाः सूक्ष्म अचिन्तिय बुद्धितधर्म्मानिति॥

इत्याचार्य्यचन्द्रकीर्त्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
सम्भवविभवपरीक्षानामैकविंशतितमं प्रकरणम्॥

---

अत्राह ॥ विद्यत एव सन्ततिस्तथागतसद्भावात् ॥

इह हि भगवता महाकरुणोपायप्रज्ञाद्वयज्ञाननिरासमसकलत्रैधातुकाशेषसत्त्वजात्यादिदुःख-
व्युपशमैकमनसा त्रिभिः कल्पसंख्येयैः समभिवर्या नैरन्तर्य्यक्रमणोद्यच्छता तैस्तैर्निरतिशयैर्गति-
विचित्रैः पुण्यक्रियाप्रारम्भैः सकलजगद्धितादयैकक्रियालक्षणैः प्रियैकपुत्राद्यधिकतरं निरव-
शेषजगदनुग्रहतत्परेण महाकरुणापरवशेन तत्र तत्रोपपत्त्यायतने क्षितिसलिलज्वलनपवन-
साधारणभैषज्यमहामहीरुहवर्ज्जनानां स्वच्छतापभाग्यतामात्मानमुपगमयता कारणमार्व्वज्ञ
सर्व्वाकारपरिच्छेदिपदमधिगतं ॥ स एवमधिगतसर्व्वज्ञज्ञानो भगवान् यथाधर्म्माणां तत्त्वं
वावस्थितं तथैवाशेषता जगत्वाद्बुद्धत्वात्तथागत इत्युच्यते ॥ यद्यपि भवसन्ततिर्न स्यात्तदा
तथागतोऽपि न स्यात् न ह्येकेन जन्मना शक्यं तथागततत्त्वमनुप्राप्तुम् ॥ तस्माद्विद्यत एव
भवसन्ततिस्तथागतसद्भावादिति उच्यते ॥ भवदीयमेव हीदमतिमहदज्ञानं भवसन्तान-
स्याविच्छेदवर्त्तितां वातिदीर्घकालं च गमयति ॥ यस्य नाम भवतातिमहदज्ञानघनान्धकार-
मेव विचित्ररूपपत्तिशरच्चन्द्रज्ञानालोकैर्विध्वस्यमानमप्यविरतकालाभ्यासविस्तरोऽभिवृद्धमेघा-
विन विध्वंस्यते न विवर्त्तते ॥ यदि हि तथागतो नाम कश्चित् स्यात् स्वभावतस्तदा
तस्य महता कालेनाभिनिर्ष्पत्तिर्भवसन्ततिः स्यात् ॥ नच तथागतो नाम कश्चिद्भावस्वभावः
स्वभावत उपलभ्यते ॥ केवलन्तु भगवान्न विद्यातिमिरोपहतगतिनयनतयाद्विचन्द्रकशम-
शकादिवन्मिथ्या तथागतं नाम स्वभावत उपलभ्यते ॥ यथा च तथागतो नास्ति स्वभावत-
स्तथा प्रतिपादयन्नाह ॥

स्कन्धो ननान्यः स्कन्धेभ्यो नास्ति स्कन्धो न तेषु सः ।
तथागतः स्कन्धवान्न कतमोऽत्र तथागतः ॥

यदि हि तथागतो नाम कश्चित् पदार्थोऽमलो निष्प्रपञ्चः स्यात् स्कन्धस्वभावो वा
भवेत् रूपवेदनासंज्ञासंस्कारविज्ञानाख्यस्कन्धपञ्चकस्वभावो भवेत् ॥ यदि वा शीलसमाधि
प्रज्ञाविमुक्तिविमुक्तिज्ञानदर्शनाख्यपञ्चस्कन्धस्वभावस्तद्व्यतिरिक्तो वा भवेत् ॥ पूर्व्वका
एव पञ्चस्कन्धाः सत्त्वप्रज्ञप्तिनिमित्तत्वादिह विचारे परिगृह्यन्ते ॥ नोत्तरे अव्यापकत्वादेषां
पूर्व्वत्रैव प्रागभावयित्वादिति ॥ यदि वा पञ्चस्कन्धव्यतिरिक्तो भवेत् ॥ तत्र वा तथागते
स्कन्धाः स्युः स्कन्धेषु वा स भवेत्तथागतो धनवानिव देवदत्तः सर्व्वथा च विचार्य्यमाणो न
संभवति कथं कृत्वा तत्र तावत् स्कन्धा एव न तथागतः ॥ किं कारणमुक्तं हि यदीन्धनं
स चेदग्निरेकत्वं कर्त्तृकर्म्मणोर्भवेदिति तदिहापि योज्यं ॥ संवृत्ताया ह्युपादानसैकत्वं कर्त्तृ-
कर्म्मणोर्भवेदिति ॥ तथा आत्मा स्कन्धो यदि भवेदुदयव्ययभाग्भवेदित्युक्तं तदिहापि
योज्यं ॥ बुद्धः स्कन्धो यदि भवेदुदयव्ययभाग्भवेदिति ॥ एवं तावत् स्कन्धो न तथागतः ।
इदानीं नान्यस्कन्धेभ्यः तथागत इति ॥ किं कारणमुक्तं हि ॥

अन्यश्चेदिन्धनादग्निरिन्धनादप्यतद्भवेत् ॥

तथा परत्र निरपेक्षत्वादप्रदीपनहेतुकः ॥ पुनरारम्भवैयर्थ्येनैवं वा कर्म्मके सतीति । तथेहापि योज्यं ॥ बुद्धान्यस्येदुपादानं विना भवेत् ॥

तथा ।

परत्र निरपेक्षत्वादनुपादानहेतुकः ।
पुनरारम्भवैयर्थ्यमेवं वा कर्म्मके सतीति ॥

तथा ।

स्कन्धेभ्योऽन्यो यदि भवेत् भवेदस्कन्धलक्षणः । इति ॥

अन्यत्वाभावाच्च स्कन्धादीनां तथागतस्य च तथागतस्कन्धा नोपपद्यन्ते ॥ नापि स्कन्धेषु तथागत इत्युपपद्यते ॥ उक्तं चैतन्मध्यमकावतारे पक्षद्वयव्याख्याणं स्कन्धेष्वात्मा विद्यते नैव चामी सन्ति स्कन्धा नानात्मनीति हि यस्मात् ॥ स्वेभ्योऽन्यत्वे स्यादियं कल्पना चैतच्चानात्वं नास्त्यतः कल्पनैषा स्कन्धवानपि तथागतो यथा न भवति ॥ तथा तत्रैवोक्तं इष्टो नात्मा रूपवानस्ति यस्मादात्मा सत्त्वार्थापयोगो हि नातः । भेदगामान् रूपवानप्यभेदत्वान्यत्वे रूपता नात्मनः स्कन्धेभ्योऽन्यत्वे पक्ष एव तु पञ्चापि पक्षा अन्तर्गता वस्तुत ॥ सत्कायदृष्टि-प्रदृष्ट्यपेक्षया तु पञ्चपक्षाः समुपवर्ण्यन्ते ॥ आचायनेति विज्ञेयं यश्चैवं स्कन्धेषु पञ्चधा विचार्य्यमाणो नास्ति ॥ तथागतः सकलान्येनात्मनो भविष्यतीति ॥ सर्व्वथा न संभवत्येव तथागत इति भावस्वभावादपश्यन्त आचार्य्यपादाः प्राहुः कतमोऽत्र तथागत इति ॥ नास्त्येव सकलत्रैलोक्यवस्तुविपश्चिद्भावस्वभाव इत्यभिप्रायः ॥ तथागताभावाच्च भवसन्ततिरपि द्रव्य सन्ततिर्नास्तीति सिद्धं ॥ अत्रैके वदन्ति नैव हि स्कन्धास्तथागत इति ब्रूमो यथोक्तदोष-प्रसङ्गात् ॥ नापि स्कन्धा वातिरिक्तः । नापि तथागतेऽनाश्रवं स्कन्धं वर्णयामो हिमवति-पर्व्वत इव तरुखण्डं ॥ नापि स्कन्धेषु तरुखण्डे इव सिंहं नापि स्कन्धवन्तं वर्णयामो लक्षणवन्तमिव चक्रवर्त्तिनं ॥ एकत्वान्यत्वानत्युपगमादेव किन्तर्हि स्कन्धान् मलानुपादाय तत्त्वान्यत्वाद्यथोच्यन्ते तथागतं व्यवस्थापयामः ॥ तस्मान्नायं विधिरस्माकं बाधत इति ॥ अत्रोच्यते ॥

बुद्धः स्कन्धानुपादाय यदि नास्ति स्वभावतः ।
स्वभावतश्च यो नास्ति कुतः स परभावतः ॥

यदि हि बुद्धो भगवानमलो स्कन्धानुपादाय तत्त्वान्यत्वेनावक्तव्यः ॥ प्रज्ञप्यते न तर्हि स्वभावतः सास्तीति व्यक्तमापद्यते प्रतिविम्बवदुपायप्रज्ञप्यमानत्वात् ॥ यश्चेदानीं स्वभावतो नास्त्यात्मीयेन स्वरूपेण स कथमविद्यमानः स्वभावतः स्कन्धानुपादाय परभावतो भवि-ष्यतीति । न ह्यविद्यमानो वन्ध्यातनयः परभावमपेक्ष्य भवतीति युज्यते ॥ अथ स्याद्यथैव हि प्रतिविम्बकं स्वभावतः सम्विद्यमानमपि परभावमुखादर्शादिकमपेक्ष्य भवति ॥ एवं च

तथागतो निःस्वभावतोऽसंविद्यमानो नास्रवो पञ्चस्कन्धानुपादाय परभावतो भविष्यतीति ॥ एवमपि—

प्रतीत्य परभावं यः स नात्मा प्रतिपद्यते ।
यश्च नात्मा स च कथं भविष्यति तथागतः ॥

यदि प्रतिविम्बवत् परभावं प्रतीत्य तथागत इष्यते ॥ एवं सति प्रतिविम्बवदेव स तथागतोऽनात्मेत्युपपद्यते न तु स्वभावत इति युज्यते ॥ आत्मशब्दोऽयं स्वभावशब्द-पर्य्यायः यश्चात्मा निःस्वभावः प्रतिविम्बवदेव स कथं तथागतस्वभावरूपता भविष्यति ॥ अविपरीतमार्गगतो न भविष्यतीत्यभिप्रायः ॥ किं चान्यत् ॥ इह यदि तथागतस्य कश्चित् स्वभावः स्यात्तदा तत् स्वभावापत्तयात् स्कन्धस्वभावः परभाव इति स्यात् ॥ तं च परभावं प्रतीत्य तथागतः स्यात् । यदा तु तथागतस्य स्वभाव एव नास्ति तदा कुतः स्कन्धानां परत्वं स्यादिति प्रतिपादयन्नाह ॥

यदि नास्ति स्वभावश्च परभावः कथं भवेत् ॥

यदा चैवं स्वभावपरभावौ नस्तस्तदा स्वभावपरभावाभ्यां मृतकः स तथागतः पदार्थो-ऽभिभवन् स्वभावो भवेत् परभावो वा ताभ्यां तु विना कोऽसौ च परः पदार्थोऽस्ति यस्तथा-गत इति व्यवस्थाप्यते ॥ तस्मान्नास्ति स्वभावतः तथागत इति किं चान्यत् ॥

स्कन्धान्यदनुपादाय भवेत् कश्चित् तथागतः ।
स इदानीमुपादद्यादुपादाय ततो भवेत् ॥

यदि मन्यसे स्कन्धेभ्यस्तथात्वेनावक्तव्यस्तथागतः स्कन्धानुपादाय प्रज्ञप्यत इति तत् कदा युज्यते ॥ यदि स्कन्धाननुपादायागृहीत्वा पूर्व्वं कश्चित्तथागतो नाम भवेत् स स्कन्धानुपादद्यात् ॥ व्यतिरिक्त एव हि पूर्व्वसिद्धधनो देवदत्तो धनस्योपादानं कुरुते तद्वदेते स्कन्धाननुपादाय यदि कश्चित्तथागतः स्यात् ॥ स इदानीं स्कन्धानुपादद्यात् ॥ ततश्च तान् स्कन्धानुपादद्यात् ततो भवेद्विचार्य्यमाणस्तु सर्व्वथा स्कन्धान् वाप्यनुपादाय नास्ति कश्चित् तथागतः निर्हेतुकप्रतिसंगात् ॥ यश्च नाशानुपादायकः कथं अविद्यमानत्वादित्यभिप्रायः ॥ यदा चैवं न किञ्चिदप्युपात्तं तदा स्कन्धानुपादाय तथागतो नाम भविष्यतीति ॥ नोप-पद्यते यदा चैव तथागत उपादानात् ॥ पूर्व्वमविद्यमानत्वान्न किंचिदुपात्तं तदा तदुपा-दानस्यापि केनचिदप्यनुपादीयमानस्योपादानत्वं न संभवत्येवेति प्रतिपादयन्नाह ॥ न भव-त्यनुपादानं च किञ्चन ॥ यदा चैवमुपादानं केनचिदप्यनुपादीयमानत्वादुपादानं न भवतीति॥ तदुपादानाभावादुपादानोऽपि कश्चिन्नास्तीति प्रतिपादयन्नाह ॥ न चास्ति निरुपादानः कथं च न तथागत इति ॥ तदेव यथोपपादितन्यायेन तत्त्वान्यत्वेन मानोऽस्ति मृग्यमाणश्च पञ्चधा उपादानेन स कथं प्रज्ञप्यते तथागतः । यो हि तथागतो विचार्य्यमानो मृग्यमाणः

स्कन्धेभ्यः तत्त्वेन एकत्वं नास्ति ॥ अन्यत्वेन स्कन्धेभ्यः पृथक्त्वेन च यो नास्ति ॥ एवं त्वाप्य-त्वप्राप्तत्वात् ॥ आधाराधेयतद्वत्प्रोक्तप्रकारैर्मृग्यमाणो यो नास्ति स कथमत्यन्ततोऽसंविद्यमानस्तथागत उपादानेन शक्यः प्रज्ञपयितुमित्यतोऽपि नास्ति तथागतानामभावतः । न च केवलमनेन विचारेण तथागत एव नास्ति ॥

### यदपीदमुपादानं तत्स्वभावान्न विद्यते ॥

यदपीदमुपादानं रूपवेदनासंज्ञासंस्कारविज्ञानाख्यं स्कन्धपञ्चकं तदपि स्वभावेन न विद्यते प्रतीत्यसमुत्पादत्वात् ॥ स्कन्धपरीक्षायां च विस्तरेण प्रतिषिद्धत्वात् ॥ अथापि स्याद्यद्यपि स्वभावत उपादानं नास्ति तथापि हेतुप्रत्ययात्मकेभ्योऽभावाद्भविष्यतीति । तदपि नोपपद्यत इति प्रतिपादयन्नाह ॥

### स्वभावतश्च यन्नास्ति कुतस्तत्परभावतः ।

न हि वन्ध्यासूनुः स्वभावितोऽसंविद्यमानः शक्यः परभावेन प्रज्ञपयितुमित्यतः उपादानमपि नास्ति ॥ अथ वा यदपीदमुपादानं तत्स्वभावान्न विद्यते ॥ उपादातृसापेक्षत्वात् उपादातृनिरपेक्षस्य वोपादानत्वाभावो नास्ति स्वभावसिद्धमुपादानं ॥ अथ यद्यप्युपादातृनिरपेक्षमुपादानं स्वभावसिद्धं न सम्भवति ॥ एवं तत् क्रमादिष्वपेक्षमेव भवत्वित्युच्यते ॥ एवमपि स्वभावतश्च यन्नास्ति कुतस्तत्परभावतः । स्वभावतो यदुपादानं न सिद्धं तदविद्यमानस्वभावं कथमुपादातुः परभावतो भविष्यतीति तस्मादुपादानमपि नास्तीदानीं यथा प्रसाधितमेवार्थमुपदर्शयन्नाह ॥ एवं शून्यमुपादानमुपादाता सर्व्वशः सर्व्वेण प्रकारेण विचार्य्यमाणं शून्यमुपादानं निस्वभावमुपादाता च शून्यस्वभावरहितः । तेनेदानीमुपादानेन प्रज्ञप्यते च शून्येन कथं शून्यस्तथागतः । नैव तत्सम्भवति यदविद्यमानेनाविद्यमानस्य तथागतस्य प्रज्ञप्तिः स्यादिति ॥ तस्मात् स्कन्धानुपादाय तथागतः प्रज्ञप्यत इति नोपपद्यते ॥ अत्राह ॥ अर्हसि भवन्नार्हता प्रत्याशास्माकं यदि नाम वयं स्वविकल्पाविकल्पिता[illegible] क[illegible]विना कुदर्शनतरुतललताजालावबद्धेष्वनिर्व्वाणपुरगाम्यविपरीतमार्गगमनपरिभ्रष्टेषु अनतिक्रान्तसंसाराटवीकान्तारादुर्गे कणभक्षाक्षपाददिगम्बरजैमिनिनैयायिकप्रभृतिषु तीर्थकरेष्वविपरीतस्वर्गापवर्गमार्गोपदेशाभिमानिषु स्पृहां परित्यज्य निरवशेषानागतार्थं मतान्धकारोपघातकं स्वर्गापवर्गानुगामि विपरीतमार्गसंप्रकाशकम् ॥ सद्धर्म्मदेशनाति यद्गुतरकिरणव्याप्यशेषाणां सुखं विविधविविधविनेयजनमतिकमलकुमलविबोधनतत्परं यथावदवस्थितपदार्थतत्त्वार्थभाजनो समलोकचक्षुर्भूतं सकलजगच्छरणभूतमद्वितीयं दशबलवैशारद्य। वेणिकबुद्धधर्म्मामलमण्डलं महायानमहानयसारथिवरं बोध्यङ्गानुगतुरंगपदातियोजितं सकलत्रिभुवनजनजातिजरामरणसंसारकान्तारमरिदुःखापणतत्परं चतुरसममार्गातिसमरसरसंपातविजयिनं सकलजगदसत्राहरायग्रहविग्रहाग्रहनिराशितं तथागतसवितारमज्ञानघनगहनान्धकारनिराकरणाय मोक्षार्थिनामुत्तरममाक् सम्बोध्यार्थिनः शरणं प्रतिपन्नास्तस्य च त्वया ॥

एवं शून्यमुपादानमुपदाता च सर्व्वशः ।
प्रज्ञप्यते च शून्येन कथं शून्यस्तथागतः ॥

इत्यादिना स्वभावतोऽसत्वं ब्रुवता भवता हेतोरस्माकं मोक्षप्रत्याशानुत्तरसम्यक्सम्बोध्यागमाभिलाष इति ॥ तदलं भवता तथागतमहादित्यप्रच्छादकनाकालिकघनघनावलीविसरणे च जगदन्धकारोपमेनेति उच्यते अस्माकमेव हेताः प्रत्याशा भवद्भिर्व्विबुधजनेषु यदि नाम भवन्तो मोक्षकामतयान्यतीर्थ्यमतानि परित्यज्य भगवन्तं तथागतमप्यविपरीतं परमशास्तारं प्रतिपद्यपरमगम्भीरमनुत्तरं सर्व्वतीर्थ्यवादासाधारणं नैरात्म्यसिंहनादमसहमानास्तरङ्क्षा इव स्वाधिमुक्तिदरिद्रतया विविधकुदृष्टिव्यालमालाकुलं विपर्य्यस्तजनानुजातं तमेव महाघोरसंसाराटवीकान्तारचारकानुगमार्गमेव गाहन्ते नहि तथागताः कदाचिदप्यात्मनः स्कन्धानां वास्तित्वं प्रज्ञपयन्ति ॥ यथोक्तं भगवत्यां । बुद्धाप्यायुष्मन् सुभूते मायोपमस्वप्नोपमा बुद्धधर्म्मा अप्यायुष्मन् सुभूते मायोपमाः स्वप्नोपमा इति ॥ तथा धर्म्मस्वभावेतु शून्यविविक्तो बोधिस्वभावेत् शून्यविविक्तो योहि चरत्स्वपि शून्यस्वभावो ज्ञानवतो नतु बालजनस्येति ॥ नच वयं सर्व्वथैवेति प्रपञ्चानां तथागतानां तथागतानां नास्तित्वं ब्रूमो यदस्माकं तदपादकृतो दोषः स्यात् ॥ अपि च निःस्वभावं हि तथागतं व्याचक्षाणेनाविपरीतार्थ्यमविधित्सुना योगिना सता सर्व्वथा शून्यमिति वा भवेत् ॥ उभयं नोभयं चेति ॥ सर्व्वमेतन्न वक्तव्यमस्माभिः किमुक्तं यथावदवस्थितं स्वभावं प्रतिपत्ताप्रतिपत्तुर्न समर्थ इति ॥ अतो वयमप्यारोपताव्यवहारसत्य एवास्थित्वाव्यवहारार्थविनेयजनानुरोधेन शून्यमित्यपि ब्रूमः । अशून्यमित्यपि शून्याशून्यमित्यपि नैवशून्यं नाशून्यमित्यपि ब्रूमः । अत एवाह ॥ प्रज्ञप्त्यर्थन्तु कथ्यत इति यथोक्तं भगवता ॥ शून्याः सर्व्वधर्म्मा निःस्वभावयोगेन निर्निमित्ताः सर्व्वधर्म्मा निर्निमित्ततामुपादाय ॥ प्रणिहिताः सर्व्वधर्म्माः प्रणिधानयोगेन प्रकृतिप्रभास्वराः सर्व्वधर्म्माः प्रज्ञापारमिता परिशुध्यति ॥ अनागताशून्यमुक्तमतीतं चेद्भिक्षवं रूपन्नाभविष्यन्न श्रुतवानयं श्रावकोऽतीतं रूपणाभ्यनन्दिष्यत् ॥ यस्मात्तर्हि भिक्षवोऽस्त्यतीतं रूपं तस्मार्य्यश्रावकः श्रुतवानतीतं रूपमभिनन्दतीति ॥ अनागतो चेद्भिक्षवो रूपमित्यादि ॥ एवं यावदतीतं चेद्भिक्षवो विज्ञानं नाभविष्यदिति पूर्व्ववत् ॥ तथा सौत्रान्तिकमतीताऽतीतानागतं शून्यमन्यदशून्यं ॥ विप्रयुक्ता विज्ञप्तिः शून्या ॥ विज्ञानवादेऽपि कल्पितस्वभावस्य शून्यत्वमप्रतीत्यसमुत्पन्नत्वात् तैमिरिकद्विचन्द्रादिदर्शनवत् ॥

नशून्यं नापि वा शून्यं तस्मात् सर्व्वं विधीयते ॥

सत्वादसत्वाच्च मध्यमाप्रतिपच्च सति येन त्वभिप्रायेण शून्यत्वादिकमुपदिश्यते ॥ स आत्मपरीक्षातो बोद्धव्यः ॥ यथोक्तं सूत्रे ॥ मायोपमं जगदिदं भगवता नरङ्गस्वप्नसदृशं विहितं । नात्मासत्त्वेन च जीवगतो धर्म्मा मरीचि(उ)दकचन्द्रसमाः शून्यं च शान्तमनुत्पादमनुत्पादमयं अविजानदेव जगदुत्क्रमतीतपायनयपुक्तिशतैरवतारयस्यापि कृपालुतया ॥ रागादिभिस्त्वगर्द्धि रोगशतैः सन्त्रासितं सततमीक्षजगदवैद्योपमा विचरसेऽप्रतिमा परिमोचयसुगतसत्त्व-

सत्वान्। रथचक्रं विक्रमति॥ सर्व्वजगति यत्तप्रेतनिरयेषु गता मूढा अदेशिका अनाथगता-स्तेषां प्रदर्शयमि मार्गचरमिति॥ सर्व्वास्वतो कल्पना निष्प्रपञ्चे तथागतेन सम्भवन्ति न चैकवलं शून्यत्वादिकमेव चतुष्टयं तथागतेन सम्भवति॥ अपि वा—

शाश्वताशाश्वताद्यत्र कुतः शान्तचतुष्टयं।
अनन्तादिषु वाप्यत्र कुतः शान्तचतुष्टयं॥

इह चतुर्द्दशाव्याकृतवस्तुनि भगवता निर्द्दिष्टानि॥ तद्यथा॥ शाश्वतो लोकः अशाश्वतो लोकः शाश्वतश्चाशाश्वतश्च लोकः। नैव शाश्वतो नाशाश्वतश्च लोक इति चतुष्टयं॥ अन्तवान् लोकः। अनन्तवांश्चान्तवांश्च लोकः। नैवान्तवान् नानन्तवांश्च लोक इति द्वितीयं॥ भगवति तथागतः परं मरणान्न भवति तथागतः परं मरणाद्भवति नच भवति च तथागतः परं मरणान्न च भवति ननभवति तथागतः परं मरणादिति तृतीयं। सजीवतच्छरीरमन्या जीवाऽन्य-शरीरमिति॥ तान्येतानि चतुर्द्दशवस्तुनि अव्याकृतत्वादव्याकृतवस्तुनीत्युच्यते॥ तत्र यथा च वर्णितेन न्यायेन यथा शून्यत्वादिकं चतुष्टयं प्रकृत्या शान्तनिःस्वभावतथागतेन संभवति॥ एवं शाश्वताशाश्वतादिकमपि चतुष्टयस्य न सम्भवति॥ असंभवादेव न चतुष्टयं बन्ध्यापुत्रस्य श्यामगौरत्वादिवन्न व्याकृतं॥ भगवता लोकस्य यथा चैतच्चतुष्टयं तथागते न संभवति॥ एवमन्तानन्तादिकमपि शान्ततथागते न संभवति इदानीं भवति तथागतः परमरणादिकेभ्यो विकल्पनाचतुष्टयस्य प्रवृत्त्यसंभवमुद्भावयन्नाह॥

येन ग्राहो गृहीतस्तु येनास्तीति तथागतः।
नास्तीति वा विकल्पयन् निर्वृतस्यापि कल्पयेत्॥

येन हि घनतरो महताभिनिवेशेनास्ति तथागत इति ग्राहो गृहीतः परिकल्प उत्पादितः। सनियतं परनिर्वृत्तस्तथागतन्न भवति तथागतः। परमरणान्मरणादुत्तरकाले न भवत्या-च्छिन्नस्तथागतो न संविद्यते इति परिकल्पयेत्॥ तस्यैवं विकल्पयतः स्याद्दृष्टिकृतं॥ यस्य तु न कस्यांचिदवस्थायां स्वभावशून्यत्वात्तथागतस्यास्तित्वनास्तित्वं तस्य पक्षस्वभावतश्च शून्येऽस्मिंश्चिन्ता नैवोपपद्यते॥ परन्निरोधाद्भवति बद्धो न भवतीति वा॥ आकाशे चित्र-रूपकल्पनावत्॥ एषा कल्पना नास्तीति अभिप्रायः तदेवं प्रकृतिशान्तनिःस्वभावे तथागत-सर्व्वम्प्रपञ्चितमल्पबुद्धितया शाश्वताशाश्वतादिकतया नित्यानित्यास्ति शून्याशून्यसर्व्वज्ञादिकया कल्पनया प्रपञ्चयन्ति ये बुद्धप्रपञ्चया गौतमव्ययं॥ तत्प्रपञ्चहेतोः सर्व्वन्न पश्यति तथागतं। वस्तुनि बन्धनाद्धि प्रपञ्चाः स्मरवस्तुकः च तथागत कुतः प्रपञ्चो नाप्रवृत्तिसंभव इति॥ अतः प्रपञ्चातीतस्तथागतः॥ अनुत्पादस्वभावाच्च स्वभावान्तरागमनादव्ययः॥ तमित्थंविधं तथागतं स्वोत्प्रेक्षितमिथ्यापरिकल्पमलमलिनमानसतया विविधैरभूतैः परिकल्पविशेषैर्बुद्धं भग-वन्तं प्रपञ्चयन्ति॥ ते स्वकैरेव प्रपञ्चैर्हेतोः हन्तस्तथागतगुणसमृद्धतरात्यन्तपरोक्षवर्त्तिनो भवन्ति॥ ततश्च शवभूता एतस्मिन् प्रवचनेन पश्यन्ति तथागतं जात्यन्धा इवादित्यं॥

अतएवाह भगवान् ॥

ये मां रूपेणाद्राक्षु र्ये मां घोषेण अन्वयुः ।
मिथ्याप्रहाणप्रसृता मां द्रक्ष्यन्ति (न) ते जनाः ॥
धर्म्मतो बुद्धद्रष्टव्या धर्म्मकाया हि नायकाः ।
धर्म्मतो वाप्यविज्ञेया न सा शक्या विजानत इति ॥

द्रक्ष्यन्ति ते जनाः धर्म्मतो बुद्धद्रष्टव्या धर्म्मकाया हि नायकाः । धर्म्मतो वाप्यविज्ञेया न तदत्र तथागतपरीक्षायां सत्वलोकः सकलः ससुरासुरनरादिः परीक्षितः यथा चायं सत्वलोको निःस्वभावस्तथा वा जनलोकस्यापि वायुमण्डलादेरकनिष्ठवितानभुवनपर्य्यन्तस्य नैःस्वाभाव्यमुद्भावयन्नाह ॥

तथागतो यत्स्वभावस्तत्स्वभावमिदं जगत् ॥

इदं जगदित्ययं वाजनलोक इत्यर्थः ॥ किं स्वभावस्तथागतः पुनरित्याह ॥ तथागतो निःस्वभावमिदं जगदिति ॥ यथा च जगतो नैःस्वाभाव्यं तथा प्रत्ययपरीक्षादिभिः प्रतिपादितं ॥ अतएवोक्तं सूत्रे ॥ अनुत्पादधर्म्माः सततं तथागताः सर्व्वधर्म्माः सुगतेन सदृशाः निमित्तग्राहेण बालबुद्धयोऽसत्सधर्म्मेषु चरन्ति लोके ॥ तथागतो हि प्रतिविम्बभूतः कुशलस्य धर्म्मस्य अनास्रवस्य नैवात्र तथता न तथागतास्त्रिविम्बं च संदृश्यते सर्व्वलोक इति ॥ उक्तं भगवत्यां प्रज्ञापारमितायां ॥ अथ खलु ते देवपुत्रा आयुष्मन्तं सुभूतिं स्थविरमेतदवोचन् ॥ किं पुनरार्य्यसुभूते मायोपमास्ते सत्वा न ते मायाः ॥ एवमुक्त आयुष्मान् सुभूतिस्तान् देवपुत्रानेतदवोचत् ॥ मायोपमास्ते देवपुत्राः स्वप्नोपमास्ते देवपुत्राः सत्वा इति हि मायाश्च सत्त्वाश्च द्वयमेतदद्वैधीकारं ॥ इति हि स्वप्नश्च सत्त्वश्च द्वयमेतदधिकारं । सर्व्व धर्म्मा अपि देवपुत्रा मायोपमाः स्वप्नोपमाः स्रोतआपन्नोऽपि मायोपमः स्वप्नोपमः स्रोत आपत्तिफलमपि मायोपमं स्वप्नोपमं ॥ एवं सकृदागाम्यपि सकृदागामिफलमपि । अनागाम्यपि अनागामि फलमपि । अर्हन्नेऽपि मायोपमः स्वप्नोपमः । अर्हत्वफलमपि मायोपमं स्वप्नोपमं ॥ प्रत्येकबुद्धोऽपि मायोपमः स्वप्नोपमः । प्रत्येकबुद्धत्वमपि मायोपमं स्वप्नोपमं ॥ सम्यक् सम्बुद्धोऽपि मायोपमः स्वप्नोपम इति सम्यक् संबुद्धत्वमपि मायोपमं स्वप्नोपममिति वदामि ॥ अथ खलु देवपुत्रा आयुष्मन्तं सुभूतिमेमतदवोचत् ॥ सम्यक्क्ं बुद्धोऽपि मायोपमः स्वप्नोपम इति सम्यक्क्ं बुद्धत्वमपि मायोपमं स्वप्नोपममिति ॥ स आर्य्यसुभूते वदसि ॥ सुभूतिराह ॥ निर्व्वाणमपि देवपुत्रा मायोपमं स्वप्नोपममिति वदामि किं पुनरन्यं धर्म्मं ॥ देवपुत्रा आहुः । निर्व्वाणमप्यार्य्यसुभूते मायोपमं स्वप्नोपममिति वदसि ॥ सुभूतिराह ॥ यद्यपि देवपुत्रा निर्व्वाणादप्यन्यः कश्चित् धर्म्मो विशिष्टतरः स्यात्तमप्यहं मायोपमं स्वप्नोपममिति च वेदयमिति हि मायोपमस्वप्नोपमस्य निर्व्वाणं वाद्वयमेतदद्वैधीकारमिति ॥

इत्याचार्य्यचन्द्रकीर्त्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
तथागतपरीक्षानामद्वाविंशतितमं प्रकरणम् ॥

अत्राह ॥ विद्यत एव सन्ततिस्तत्कारणसद्भावात् ॥ इह हि क्लेशेभ्यः कर्म्म प्रवर्त्तते ॥ कर्म्मक्लेशहेतुकारजन्ममरणपरम्परोपजायते ॥ सा च भवसन्ततिर्व्यपदिश्यते ॥ तस्याश्च प्रधानं कारणं क्लेशाः प्रहीनक्लेशानां भवसन्ततेरभावात् ॥ ते च रागादयः क्लेशाः सन्ति तस्मात् कार्यभूतोऽपि जन्ममरणं परम्पराविच्छेदप्रबन्धेन भवसन्ततिरपि भविष्यतीत्युच्यते ॥ स्याद्भवसन्ततिर्यदि तद्धेतुभूताः क्लेशाः स्युः च तु सन्ति ॥ कथं कृत्वा । इह भगवद्भिर्बुद्धैः सकलत्रिभुवनजनसंक्लेशशत्रुविध्वंसिभिश्चतुर्मारारातिसमरपराजयैः ।

सङ्कल्पप्रभवोरागो द्वेषो मोहश्च कथ्यते ।
शुभाशुभविपर्य्यासात् सम्भवन्ति प्रतीत्य हि ॥

संकल्पो वितर्कः संकल्पात् प्रभवतीति सङ्कल्पप्रभवः ॥

कामं जानामि ते मूलं सङ्कल्पः किल जायते ।
नत्वां सङ्कल्पयिष्यामि ततो मे न भविष्यतीति ॥

गाथाभिधानात् सङ्कल्पप्रभवो रागो द्वेषो मोहश्च कथ्यते एतन्मूलकत्वादन्येषां क्लेशानां मुख्यत्वादेषामेवोपादानं त्रयाणां ॥ एते च त्रयः क्लेशाः शुभाशुभविपर्य्यासात् सम्भवन्ति प्रतीत्य हि ॥ यत्र हि शुभमाकारं प्रतीत्य राग उत्पद्यते ॥ अशुभं प्रतीत्य द्वेषः विपर्य्यासात् प्रतीत्य मोह उत्पद्यते ॥ सङ्कल्पस्तेषां त्रयाणामपि साधारणमुत्पत्तौ ॥ कथं पुनरेभिः सङ्कल्पप्रभव उच्यते ॥ उक्तं हि प्रतीत्य समुत्पादं भवता ॥ अविद्या हि भिक्षवः? सहेतुका सप्रत्यया सनिदाना ॥ कश्च भिक्षवः? अविद्यायाहेतुः ॥ अयोनिशो भिक्षवः? मनस्कारा अविद्याया हेतुः ॥ आविरो मोहो यो मनस्कारो भिक्षवः? अविद्यायाहेतुरित्यतोऽविद्याप्रभवो भवति ॥ ततश्च—

शुभाशुभविपर्य्यासात् सम्भवन्ति प्रतीत्य ये ।
ते स्वभावान्न विद्यन्ते तस्मात् क्लेशा न तत्त्वत इति ॥

यदि रागादयः स्वभावसिद्धाः स्युः । नैव ते शुभाशुभविपर्य्यासात् प्रतीत्य सम्भवेयुः स्वभावस्योत्कृत्रिमत्वात्यनिरपेक्षत्वाच्च भवन्ति च शुभाशुभविपर्य्यासात् प्रतीत्य ॥ तस्मान्निःस्वभावा एव ते तत्त्वतो न विद्यन्ते ॥ परमार्थतः स्वभावतो न विद्यन्त इत्यर्थः ॥ अपि च ॥

आत्मनोऽस्तित्वनास्तित्वे न कथञ्चिच्च सिध्यतः ।
तं विनास्तित्वनास्तित्वे क्लेशानां सिध्यतः कथम् ॥

आत्मनो यथास्तित्वनास्तित्वे नस्तस्तथोक्तं विस्तरेण ततश्च तदाश्रितस्य धर्म्मस्य कुतो-

ऽस्तित्वनास्तित्वे भविष्यतः॥ अथ स्यादुभयत्रास्तित्वनास्तित्वे आत्मनो नस्तस्तदा किमत्र क्लेशानामायत्तं॥ यतस्तेषामप्यस्तित्वनास्तित्वे नस्त इति उच्यते॥

कस्यचिद् विभवन्तीमे क्लेशाः स च न सिध्यति।
कश्चिदाह विना किञ्चित् सन्ति क्लेशा न कस्यचित्॥

इहामी रागादयः कुत्रचित् चेत् फलपक्वतादिवच्चोत्पत्तावाश्रयमपेक्षन्ते। ततश्च कस्यचिदेते भवन्ति न विना कश्चिदाश्रयं। स चाश्रयः परिकल्प्यमान आत्मा वा चित्तं वा भवेत्॥ स चैषामाश्रयः पूर्व्वमेव प्रतिसिद्धत्वान्नास्ति तं च कश्चिदाश्रयं विना कस्य क्लेशा भवन्ति। नैव कस्यचिद्भवन्ति तस्याविद्यमानत्वादित्याह॥ विना कश्चित् सन्ति क्लेशा न कस्यचिदित्याह॥ नैव हि क्लेशानां कश्चिदाश्रयः पूर्व्वसिद्धोऽभ्युपगम्यते न चात्मा नाम कश्चिदस्ति य आश्रयत्वेन व्यवस्थाप्यते निर्हेतुकत्वात् व्योमवृन्तकवत्॥ किं तर्हि क्लिष्टं चित्तं प्रतीत्य क्लेशा उपजायन्ते तच्च चित्तं सहैव क्लेशैरुपजायत इति॥ एतदपि न युक्तमित्याह॥

√स्वकायदृष्टिवत् क्लेशाः क्लिष्टाः सन्ति न पञ्चधा।
स्वकायदृष्टिवत् क्लिष्टं क्लेशेष्वपि न पञ्चधा॥

स्वकायो हि नामरूपादिलक्षनसंघातः। स्वकायदृष्टिः स्वकायेऽात्मदृष्टिरात्मियाकारग्रहणप्रवृत्तिः॥ यथेयं पञ्चधा विचार्य्यमाणा स्वकाय्ये न सम्भवति॥ तत्र क्लिश्यन्तीति क्लेशाः क्लिश्यत इति क्लिष्टः। तत्र यदेव क्लिष्टं तदेव क्लिष्टं तदेव क्लेशा इति न युज्यते दग्धृदाह्ययोरप्येकत्वप्रसंगात्॥ अन्यत् क्लिष्टमन्ये क्लेशा इति न युज्यते॥ परत्रनिरपेक्षत्वादक्लिष्टहेतुकक्लेशप्रसंगात्॥ अन्यत् क्लिष्टमन्यत् क्लेशा इति न युज्यते॥ परत्र निरपेक्षत्वादक्लिष्टहेतुकक्लेशप्रसङ्गात्॥

तदेवैकत्वान्येभ्यो भावादाधाराधेयतद्वत्पक्षाणां वा भावान्न क्लेशेषु क्लिष्टन्न क्लिष्टक्लेशाः॥ नापि क्लेशवत् क्लिष्टमित्येवं क्लिष्टं पञ्चधा विचार्य्यमाणाः क्लेशा न सम्भवन्ति यथा च क्लिष्टहेतुकाः क्लेशा न सम्भवन्ति। एवं क्लेशहेतुकमपि क्लिष्टं क्लेशे विचार्य्यमाणं पञ्चधा न सम्भवन्ति। नहि क्लेशा एव क्लिष्टं कर्त्तृकर्म्मणोरेकत्वप्रसंगात्। नान्ये क्लेशा अन्यत् क्लिष्टन्निरपेक्षत्वन्निरपेक्षत्वप्रसंगात्॥ नच क्लिष्टक्लेशा नच क्लेशेषु क्लिष्टं॥ न क्लिष्टवन्तः क्लेशा इत्येवं स्वकायदृष्टिवदेव क्लिष्टं क्लेशेष्वपि पञ्चधा नास्ति यतश्चैव स परस्परापेक्षयोऽपि क्लेशक्लिष्टयोर्नास्ति सिद्धिः।

अत्राह॥ यद्यपि त्वया क्लेशाः प्रतिसिद्धास्तथापि क्लेशहेतवः शुभाशुभविपर्य्यासास्ते च सन्ति तत्सद्भावाच्च क्लेशा सन्तीति॥ उच्यते स्युः क्लेशा यदि शुभाशुभविपर्य्यासा एव स्युर्यावतेऽपि स्वभावतो न विद्यन्ते शुभाशुभविपर्य्ययाः प्रतीत्यसमुत्पन्नत्वादक्ष्यमाणप्रतिषेधत्वाच्च॥ यदा च ते न सन्ति स्वभावतस्तदा प्रतीत्य कतमा न क्लेशास्तद्धेतुशुभाशुभविपर्य्ययाभावादित्यभिप्रायः॥ अत्राह॥ विद्यन्त एव क्लेशास्तदारम्बरसद्भावात्॥ इह हि यन्नास्ति न तस्या-

लम्बनमस्ति तद्यथा वन्ध्यासूनोः । अस्ति च रूपशब्दगन्धरसस्पृष्टव्यधर्म्माख्यं षाड्विधमालम्बनं ॥ तस्मादालम्बन-सद्भावाद्विद्यन्त एव क्लेशा इति उच्यन्त अस्मत्तो यद्भवद्भिः ॥

रूपशब्दरसस्पर्शा गन्धा धर्म्माश्च षड्विधं ।
वस्तुरागस्य दोषस्य मोहस्य च विकल्प्यते ॥

तत्रत्वालम्बनं वसतीति वास्मिन्रागादिकं तदुत्पत्तिरिति कृत्वा तच्च तदालम्बनं षोढा भवति ॥ इन्द्रियानां षष्णां प्रतिच्छेदकारिणमन्योन्याभेदात् ॥ रूपं शब्दा गन्धा रसाः प्रष्टव्यानि धर्म्माश्चेति ॥ तत्रेदमिहासुत्रेति निरूपणात् रूपणाच्च । शब्द्यन्ते प्रकाश्यन्ते समार्था इति शब्दाः ॥ गन्ध्यन्ते हिंस्यन्ते यत्र प्राणाः ततोऽन्यत्रगमनाद्गन्धाः । रस्यते स्वत आस्वाद्यते इति रसः । स्पृश्यते इति स्पर्शः । स्वलक्षणाधारणान्निर्व्वाणधर्म्माधारणाग्र-धर्म्माधारणाद्धर्म्माः । तदेतत् षड्विधं वस्तु भवति ॥ कस्य रागस्य द्वेषस्य मोहस्य तत्र रञ्जनं रागः रक्ताध्यवसानं रज्यते येन वा चित्तमिति रागः । दूषणं दोषः आघातः सत्त्वविषयोऽसत्त्वविषयो वा दुष्यते वा अनेन चित्तमिति दोषः मोहनं मोहः । संमोहः पदार्थः ॥ स्वरूपापरिज्ञानं ॥ मुह्यते वा अनेन चित्तमिति मोहः ॥ तदेषां क्लेशानां रूपादिकं षड्विधं वस्त्वारम्बनं भवति ॥ तत्र शुभाशुभकाराध्यारोपेण यथा रूपादिभ्यो राग उपजायते ॥ अशुभाकाराध्यारोपेण मोहः सम्भवतीति ॥ सत्यं विकल्प्यते एतद्वारजनैः षड्विधं वस्तु किन्त्वविद्यमानस्वभावसत्त्वाकस्मेतद्रागादीनामालम्बनत्वेन परिकल्प्यते भगवता तैमिरिकैरिवात्मक्लेशमशकमक्षिकाद्विचन्द्रादिकमिति प्रतिपादयन्नाह ॥

रूपशब्दरसस्पर्शा गन्धा धर्म्माश्च केवलाः ॥

केवला इति कल्पितमात्रा निःस्वभावाः कथं ह्युपलभ्यन्त इत्युच्यते । गन्धर्व्वनगराकारा मरीचिस्वप्नसन्निभा इति ॥ एत उपलभ्यन्ते ॥ यथा गन्धर्व्वनगरादिप्रख्या एते केवलं विपर्य्यासादुपलभ्यन्ते तदा ॥

अशुभं वा शुभं वापि कुतस्तेषु भविष्यति ।
मायापुरुषकल्पेषु प्रतिबिम्बसमेषु च ॥

तदनेन मिथ्याश्रयसमुत्पन्नत्वात् शुभाशुभयोरपि निमित्तयोर्मृषात्वमेवेति ॥ यथोक्तं ॥

अहङ्कारोद्भवाः स्कन्धाः साहङ्कारोऽनृतार्थतः ।
वीजं यस्यानृतं तस्य प्ररोहः सत्यतः कुतः ॥

स्कन्धानसत्यान्दृष्ट्वैवमहङ्कारः प्रहीयते ।
अहङ्कारप्रहाणाच्च न पुनः स्कन्धसम्भव इति ॥

न केवलमाश्रयमिथ्यात्वे शुभाशुभयोर्निमित्तयोर्मिथ्यात्वमपि वानयाप्युपपत्त्यानया मिथ्यात्वमिति प्रतिपादयन्नाह ॥

अनपेक्ष्याशुभं नास्त्यशुभं प्रज्ञपयेम हि ।
यत्प्रतीत्य शुभं तस्मात् शुभं नैवोपपद्यते ॥

इह यदि शुभं नाम किञ्चित् स्यात् नियतं तदशुभमपेक्ष्य भवेत् पारावाराद्वीजाङ्कुरवत् ह्रस्वदीर्घवद्वा शुभस्य सम्बन्धान्तरपदार्थसापेक्षत्वात् तच्चाप्यपेक्षणीयमशुभं शुभेन नास्ति ॥ शुभनिरपेक्षमशुभं नास्तीत्यभिप्रायः ॥ यदशुभं प्रतीत्य यदशुभमपेक्ष्य शुभं प्रज्ञपयेमहि, व्यवस्थापयेमहि ॥ उच्छेदानन्तरस्याशुभस्य परामर्शः ॥ प्रज्ञपयेमहीत्यनेनान्तरस्य शुभस्य सम्बन्धः ॥ यस्मैवं शुभस्य प्रज्ञप्तौ सम्बन्धान्तरमपेक्षणीयमशुभाख्यं पदार्थान्तरं पदार्थं नास्ति तस्माच्छुभं नैवोपपद्यते ॥ ह्रस्वासम्भवादिव दीर्घं पारासम्भवादिवापारमित्यभिप्रायः ॥ इदानीमशुभमपि यथा न सम्भवति तथा प्रतिपादयन्नाह ॥

अनपेक्ष्य शुभं नास्ति शुभं प्रज्ञपयेमहि ।
यत्प्रतीत्याशुभं तस्मादशुभं नैव विद्यते ॥

यदि ह्यशुभं नाम किञ्चित् स्यात् नियतं तच्छुभमपेक्ष्य भवेत् ॥ पारावारवद्दीर्घह्रस्ववद्वा शुभस्य सम्बन्धान्तरपदार्थसापेक्षत्वात् ॥ तद्यद्यपेक्षणीयं शुभेन विना नास्ति अनपेक्ष्य शुभं नास्ति अशुभनिरपेक्षशुभं न सम्भवतीत्यभिप्रायः। यच्छुभमपेक्ष्याशुभं प्रज्ञपयेमहि अशुभं व्यवस्थापयेमहि ॥ अत्रापि यच्छब्देनानन्तरस्य शुभस्य नास्ति नापरामर्शः। प्रज्ञपयेमहीत्यनेन वीत्तरस्याशुभस्य सम्बन्धः। यतश्चैव शुभस्य सम्बन्धः। यतश्चैवमशुभस्य प्रज्ञप्तौ सम्बन्धान्तरसापेक्षणीयं शुभाख्यं पदार्थान्तरं नास्ति तस्मादशुभं नैव विद्यते ॥ एष चैवं शुभाशुभस्य सम्बन्धः। यतश्चैव शुभस्य सम्बन्धः यतश्चैवमशुभस्य प्रज्ञप्तसम्बन्धा भवन्ति। अपेक्षणीयं शुभाख्यं पदार्थान्तरं नास्ति तस्मादशुभं नैव विद्यते। एतच्चैवं शुभाशुभयोरसम्भवासम्बन्धोऽतः।

अविद्यमाने च शुभे कुतो रागो भविष्यति ।
अशुभेऽविद्यमाने च कुतो द्वेषो भविष्यति ॥

शुभाशुभनिमित्तकयोः रागद्वेषयोरशुभाशुभनिमित्ताभावे सति निर्हेतुकत्वात् नास्ति सम्भव इत्यभिप्रायः ॥ तदेवं शुभाशुभनिमित्ताभावेन रागद्वेषयोरभावमुपपाद्य विपर्यासस्वभावाभावप्रतिपादनेन मोहस्याप्यधुना स्वभावो भावं प्रतिपादयन्नाह ॥

अनित्यमित्यमित्येवं यदि ग्राह्यो विपर्ययः ।
नानित्यं विद्यते शून्यं कुतो ग्राह्यो विपर्ययः ॥

इह चत्वारो विपर्य्यासा उच्यन्ते ॥ तद्यथा ॥ अनित्ये प्रतिक्षणविनाशिनि स्कन्धपञ्चके यो नित्यमिति ग्राहः स विपर्य्यासः ॥ अनित्यस्य ध्रुवायितं येन तद्दुःखं ॥ तस्मादनित्यं यत् स च दुःखन्तदिति जायत इत्यमुना न्यायेन यदनित्यं तद्दुःखात्मकस्कन्धपञ्चके* यत् सुखं तत् दुःखमिति विपरीतो ग्राहः स परो, विपर्य्यासः ॥ तथाहि ॥

शुक्रशोणितसम्पर्कवीजं विष्ठसुवर्द्धितं ।
अमेध्यरूपं आजानं द्रक्ष्यसेऽत्र कयेच्छया ॥

अमेध्यपुञ्जप्रच्छन्ने तत्कदार्द्रसचर्म्मणा ।
यः शयीत स नारीणां शयीत जयनोदर इत्यादि ॥

एवमिदं शरीरं सर्व्वात्मना सततमशुचिस्वभावं तत्र यो मोहाच्छुचित्वेन ग्राहोऽभिनिवेशः स विपर्य्यासः ॥ तथा पञ्चस्कन्धकमात्मलक्षणमस्तित्वादुदयव्ययधर्म्मित्वाच्च निरात्मकमात्मस्वभावशून्यं ॥ तस्मिन् य आत्मग्राहाभिनिवेशः अनात्मत्वाभिनिवेशः स विपर्य्यास इत्येतच्चत्वारो विपर्य्यासाः संमोहस्य हेतूभूताः । अत्रेदानीं विचार्य्यते । यदि नित्यत्वं नित्यदर्शनं स्वभावशून्येषु नित्यग्राहो विपर्य्यास इति व्यवस्थाप्यते ॥ न चानित्यत्वं विद्यते शून्यपदानित्यत्वस्याभावस्तदा कुतस्तद्विरोधि नित्यत्वं नित्यदर्शनं विपर्य्यासो भविष्यति इति भावः ॥ तस्मान्नास्ति विपर्य्यासः ॥ यथा चानित्यत्वं शून्येन सम्भवति ॥ भावस्वभावे नानुत्पन्ने एवं दुःखत्वमपि न सम्भवति ॥ अशुचित्वमपि नास्ति अनात्मत्वमपि नास्ति । यदा च स्वभावशून्याद्दुःखत्वादिकं नास्ति तदा कुतस्तद्विपक्षभूतानित्यसुखशु(भा)त्मविपर्य्यासा भविष्यन्ति ॥ तस्मान्न सन्ति विपर्य्यासाः स्वरूपतः तदभावकुले भविष्यत्यविद्या हेतुभावात् ॥ यथोक्तं भगवता ॥

अविद्यया नैव कदाचिदिद्यते अविद्यते प्रत्ययसम्भवस्य ।
अविद्यमानेयमविद्यलोके तस्मात्स या उक्ता अविद्ययैषा ॥

तथा कथं भगवन् मोहोधारणीयपदं ॥ भगवानाह ॥ अत्यन्तमुक्ता हि मञ्जुश्रीः मोहस्तेनोच्यते मोह इत्यादिविपर्य्यय इति व्यवस्थाप्यते ॥ न त्वेवं सति स्वभावाविद्यमानपदार्थे अनित्यत्वमित्यपि ग्राहो न सम्भवतीत्यसावपि कस्मान्न विपर्य्यास इति व्यवस्थाप्यते इति प्रतिपादयन्नाह ॥

अनित्यनित्यमित्येवं यदि ग्राहो विपर्य्ययः ।
अनित्यमित्यपि ग्राहः शून्ये किन्न विपर्य्ययः ॥

---

* अत्र यत् सुखं तत् दुःखमिति एवं पाठो युक्तः मूलपुस्तके लिपिकरप्रमादेन अन्येन वा केनचित् कारणेन य. सु॰ ख॰ खमिति लिखितमस्ति ।

यदा वोभयस्यापि चैव नित्यं नित्यस्यानित्यस्य च तदा तद्व्यतिरिक्तं तृतीयमपरं नास्ति यन्न विपर्य्ययः स्यात्॥ यदा वा विपर्य्यासो नास्ति तदा किमपेक्षाविपर्य्यासः स्यादिति॥ तस्मादमुनापि न्यायेन नास्ति विपर्य्ययः। तदस्याभावाच्च नास्ति अविद्यास्वरूपतः। यदा वानित्यनित्यमित्ययं ग्राहो विपर्य्यासो न सम्भवति एवं शेषविपर्य्यासासम्भवेऽपि योज्यं॥ अतएवोक्तं भगवतार्य्यदृढ़ाशयपरिपृच्छायां॥ भगवानाह॥ एवमेतत् कुलपुत्र? तस्य भवति मार्गेण निःसरणं पर्य्येषते॥ न कुलपुत्र तथागतनिरञ्जनीयान् धर्म्मान् परिवर्त्तरागप्रहाणं प्रज्ञप्तं एवं न दोषणीयान् मोहनीयान् धर्म्मान् परिवर्त्तनागतेन दोषमोहप्रहाणं प्रज्ञप्तं। तत् तस्माद्धेतोः न कुलपुत्र? तथागतः कस्यचिद्धर्म्मस्योत्सर्गाय वा प्रतिरम्भाय वा धर्म्मान् देशयन्ति न प्रतिज्ञायैव प्रहाणाय न साक्षात्क्रियैवमाह स मया येन संसारचरणतो येन निर्व्वाणगमनतो येनोत्क्षेपाय न प्रभेदाय। नहि कुलपुत्रद्वयप्रभाविता तथागतधर्म्मता॥ तत्र यद्दे प्रचरन्ति न ते सम्यक्संयुक्ता मिथ्याप्रयुक्ता स्ते च वक्तव्याः। कतमच्च कुलपुत्रद्वयं। अहं रागं प्रहास्यमीति द्वयमेतत् अहं द्वेषं प्रहास्यामीति द्वयमेतत्॥ अहं मोहं प्रहास्यामीति द्वयमेतत्॥ य एवं प्रयुक्ता न ते सम्यक्प्रयुक्ता मिथ्याप्रयुक्तास्ते वक्तव्याः। कतमच्च कुलपुत्रद्वयं॥ अहं रागं प्रहास्यामीति द्वयमेतत्॥ अहं द्वेषं प्रहास्यामीति द्वयमेतत्॥ अहं मोहं प्रहास्यामीति द्वयमेतत्॥ य एवंप्रयुक्ता न ते सम्यक्प्रयुक्ता मिथ्याप्रयुक्तास्ते च वेदितव्याः॥ तद्वयथापि नाम कुलपुत्र कश्चिदेव पुरुषो वा मायाकारो वा दत्तप्रत्युपस्थित-मायाकारनिर्म्मितास्ते यैर्दृष्ट्वा रागचित्तमुत्पादयेत्॥ सरागपरीतचित्तः येषच्छारद्यभयेभ्यया-सनादपक्रमात् सोऽपक्रम्यतामेवास्तीयमशुभता मनसि कुर्य्यादतीत्यतो दुःखेन शून्यतोऽनात्मतो मनसि कुर्य्यात्॥

भगवानाह॥ एवमेव कुलपुत्र भिक्षुभिक्षुण्युपासकोपासिका दृष्टव्याः॥ येऽनुत्पन्नान् धर्म्मानजातानशुभतां मनसि कुर्व्वन्ति॥ अनित्यतो दुःखतोऽनात्मतो मनसि कुर्व्वन्ति॥ नाहं तेषां मोहपुरुषाणाम् मार्गभावानां वदामि मिथ्याप्रयुक्तास्ते वेदितव्याः॥ तद्यथापि नाम कुलपुत्र कश्चिदेव पुरुषः सुप्तस्वप्नान्तरस्थगृहराजभार्य्यामप्यगेत् स तया सार्द्धं शय्यां कल्पयेत्॥ स्मृतिमंगोषाच्चैवं कल्पयेत् विरुद्धोऽस्मीति सभीतस्त्रस्तः पलायेत्॥ स मा राजा बन्धन् स मा मां जीवितं व्यपरोपयेत्॥ तत् किं मनसे कुलपुत्रोऽपि नु स पुरुषो भीत-त्रस्तः पलायमानस्त्रस्तो राजभार्य्यानिदानभयात् परिमुच्येत्॥ आह॥ नो भगवंस्तत् कस्य हेतोः॥ तथाहि भगवंस्तेन पुरुषेणास्त्रियां स्त्रीसंज्ञोत्पादिता॥ अभूतश्च परिकल्पितं॥

भगवानाह॥ एवमेव कुलपुत्र इहैककुलपुत्र भिक्षुभिक्षुण्युपासकोपासिका दृष्टव्याः॥ येऽरागे रागसंज्ञामुत्पाद्य रागभयभीता रागनिःसरणं पर्य्येषन्ते॥ एवमदोषे दोषसंज्ञा-मुत्पाद्य दोषभयभीता दोषनिःसरणं पर्य्येषन्ते॥ अमोहे मोहसंज्ञामुत्पाद्य मोहभयभीता मोहनिःसरणं पर्य्येषन्ते॥ नाहं तेषां मोहपुरुषाणां मार्गभावनं वदामि मिथ्याप्रयुक्तास्ते वेदितव्याः॥ तद्यथापि नाम कुलपुत्र? सपुरुषोऽभये भयसंज्ञामुत्पाद्य यदर्थं सत्समारोपयेत्॥ एवमेव कुलपुत्रसर्व्वबालपृथग्जना रागकोटिविरागकोटिमप्रजानन्तो रागकोटिभयभीता विरागकोटिनिःसरणं पर्य्येषन्ते॥ दोषकोटिमकिञ्चनकोटिमप्रजानन्तो दोषकोटिभयभीता

अकिञ्चनकोटिं निःसरणं पर्य्येषन्ते ॥ मोहकोटिं शून्यतां कोटिमप्रजानन्तो मोहकोटि-भयभीताः शून्यताकोटिनिःसरणं पर्य्येषन्ते ॥ नाहं तेषां कुलपुत्र मोहपुरुषाणां मार्गभावनां वदामि मिथ्याप्रयुक्तास्ते वेदितव्या इति विस्तरः ॥ अत्राह ॥ यद्यप्यनित्य एवं ग्राहो विपर्य्ययो न सम्भवति तथाप्येष तावद् ग्राहोऽस्ति ॥ ग्राहश्च नाम संग्रहणं भावरूपस्तस्य भावस्य साधनेन कारणेन भवितव्यम् ॥ साधकतमेन नित्यत्वादिना कर्त्रा च भवितव्यम्। स्वतन्त्रेण नित्यात्मना चित्तेन वा कर्म्मणा च कर्तुरीप्सिततमेन विषयेन रूपादिना वा ॥ सतां स्वभावकरणकर्तृकर्म्मणां सिद्धौ सर्व्वसिद्धेरिष्टसिद्धिः स्यादस्माकमित्युच्यते अलौ-कयोः प्रत्याशा ननु च यथोपवर्णितेन न्यायेन ॥

येन गृह्णाति यो ग्राहो गृहीता यच्च गृह्यते।
उपशान्तानि सर्वाणि तस्माद् ग्राहो न विद्यते ॥

इह हि कश्चिद्गृहीता येन विशेषणेन नित्यत्वादिना करणभूतेन किञ्चित् कर्म्मभूतं रूपशब्दादिकं वस्तु गृह्णाति ॥ तद्यथा न सम्भवति तथा पूर्व्वं प्रतिपादितं कथं कृत्वा ॥ अनित्ये नित्यमित्येवं यदि ग्राहो विपर्य्यय इत्यादिना यथा अनित्यादिककरणं न सम्भवति तथा प्रतिपादितगृहीताऽपि यथा नास्ति तथा आत्मनोऽस्तित्वे नास्तित्वेन कथञ्चिन्न सिध्यत इत्यनेन प्रतिपादितम्। यच्च गृह्यते तदपि यथा नास्ति तथा रूपशब्द-गन्धरसस्पर्शाश्च केवला इत्यनेन प्रतिपादितम् ॥ यदा चैव कर्तृकरणकर्म्माणि न सिद्धानि तदा कुतो हेतुको ग्राहो भविष्यति ॥ ततश्च येन गृह्णाति यो ग्राहो यच्च गृह्यते। उपशान्तानि सर्व्वाणि स्वभावेनानुत्पन्नत्वान्निवृत्तानि सर्व्वाणीत्यर्थः ॥ यतश्चैवमेव तस्माद् ग्राहो न विद्यते अथवा प्रत्ययपरीक्षादिभिः प्रकरणैर्यस्मात् सर्व्वेषामेव करणता कर्तृकर्म्मणां सर्व्वथानुत्पादः प्रतिपादितः तस्मात् सर्व्वाण्येतानि भावस्वरूपविरहादुपशान्तानि अतश्च ग्राहो न विद्यते ॥

अत्राह ॥ विद्यन्त एव विपर्य्यया विपरीतसद्भावात्। इह हि विपर्य्यासानुगतो देवदत्तो न विद्यते नच विना विपर्य्यासैः सविपर्य्यासानुगतः सम्भवति ॥ तस्मात् सन्ति विपर्य्यासा विपर्य्यस्तसद्भावादित्युच्यते ॥ इहास्माभिः करणकर्तृकर्म्मणामभावात् सर्व्वथा ग्राह एव नास्तीति प्रतिपादितम् ॥ ततश्च ॥

अविद्यमाने ग्राहे च मिथ्या वा सम्यगेव वा।
भवेद्विपर्य्ययः कस्य भवेत् कस्याविपर्य्ययः ॥

सम्यग्वा मिथ्या वा कस्यचित् किञ्चिदप्यगृह्णतः कुतो विपरीतत्वमविपरीतमेवेति ॥ तस्मान्न सन्ति विपर्य्ययाः ॥ अपि चैवमविपर्य्ययाः ॥ कस्यचिदिष्यमाणाविपरीतस्य परि-कल्पनेन अविपरीतस्य चाविपर्य्यस्यमानस्य वा सर्व्वथा च नोपपद्यन्त इति प्रतिपादयन्नाह ॥

न चापि विपरीतस्य सम्भवन्ति विपर्य्ययाः।
न चाप्यविपरीतस्य सम्भवन्ति विपर्य्ययाः॥

न विपर्य्यस्यमानस्य सम्भवन्ति विपर्य्ययाः।
विमृषस्य स्वयं कस्य सम्भवन्ति विपर्य्ययाः॥

तत्र तावद्विपरीतस्य च पर्य्यासा न सम्भवन्ति किं कारणम्? यस्माद् यो हि विपरीतः स विपरीत एव किं कस्य पुनरपि विपर्य्ययसम्बन्धं कुर्य्यान्निष्प्रयोजनत्वात्। अविपरीतस्यापि विपर्य्ययपयोर्न युज्येत विरुद्धबुद्धिनयनानामप्यज्ञाननिद्रातिमिरोपशमाद्बुद्धानां विपर्य्यय-प्रसङ्गात् तथा विपर्य्यस्यमानस्यापि न सन्ति विपर्य्ययाः विपर्य्यस्यमानस्य भावस्याभावात्॥ को हि नामासावपरः पदार्थो यो विपरीताविपरीतविनिर्म्मुक्तो विपर्य्यस्यमानो नाम भवि-ष्यति॥ अर्द्धविपरीताविपर्य्यस्यमान इति चेत् अर्द्धविपरीतो हि नाम यस्य किञ्चिद्विपरीतं किञ्चिदविपरीतम्॥ तत्र यदस्य किञ्चिद्विपरीतं तद्विपर्य्यासान् विपर्य्यासयति। विप-र्य्यस्तत्वात् यदप्यस्याविपरीतं तद्विपर्य्यासा न विपर्य्यासयत्यविषयत्वात्तस्माद्विपर्य्ययस्य चिद्विपर्य्यासा न सम्भवन्ति॥ ये चेदानीं विपरीताविपरीतं विपर्य्यस्यमाना न सम्भवन्ति भवानिदानीम्विमृषतु स्वयं प्रज्ञया मध्ये सुः तत् कस्य सम्भवन्ति विपर्य्यया इति॥ तदेव-माश्रयस्याभावा न सन्ति विपर्य्ययाः किञ्चान्यत्॥

अनुत्पन्ना कथं नाम भविष्यन्ति विपर्य्ययाः।
विपर्य्ययेष्वजातेषु विपर्य्ययगतः कुतः॥

ततः।

√ न स्वतो जायते भावः परतो नैव जायते।
न स्वतः परतश्चेति विपर्य्ययगतः कुतः॥

कुतो विपरीत इत्यर्थः॥ ततश्चेतदुक्तं सन्ति विपर्य्यया योगसद्भावादिति तन्नमुक्तम्॥ अथ्येषि कथञ्चिद्विपर्य्यासचतुष्टयमस्त्येवेत्यभ्युपगम्यते तथापि तस्य विपरीतस्य न शक्यमस्ति तु किं कारणं॥ यस्मात्

आत्मा च शुचिनित्यञ्च सुखञ्च यदि विद्यते।
आत्मा च शुचिनित्यञ्च सुखञ्चात्र विपर्य्ययः॥

यद्येतानि आत्मशुचिनित्यसुखानि विपर्य्यासा इति व्यवस्थाप्यन्ते। किमेतानि सन्ति अथ न सन्ति यदि विद्यन्ते न तर्हि विपर्य्यासाः विद्यमानत्वादनुत्पादि चेत्॥ अथ न

विद्यन्ते तदेषामविद्यमानत्वान्न केवलं नास्ति विपर्य्यासत्वं विपर्य्यासप्रतिद्वन्द्वभावादना-त्मादीनामप्यविपर्य्यासादीनां नास्ति सद्भाव इति प्रतिपादयन्नाह ॥

नात्मा च शुचिनित्यञ्च सुखञ्च यदि विद्यते ।
अनात्माऽशुच्यनित्यञ्च नैव दुःखञ्च विद्यते ॥

यद्यात्मा च शुचिनित्यञ्च न विद्यत इति मन्यसे विद्यमानस्य विपर्य्यासासम्भवादेवं सति आत्मादीनामप्यभावाद्यदेतदनात्मादिकविपर्य्यासत्वेन गृहीतं तदपि तर्हि त्यज्यतामप्रतिषेध्या-भावप्रतिषेधस्याभावात् ॥ यदा चैवमनात्मादिकं न सम्भवति तदा स्वरूपतोऽविद्यमानत्वा-दात्मादिवत् कथं न विपर्य्यासः स्यात् ॥ तस्माज्जातिजरामरणसंसारचारकागारबन्धना-न्मुमुक्षुभिः चेष्टाप्येतद्विपर्य्यासात् त्याज्या ॥ अस्य च यथोपवर्णितस्य विपर्य्यासः विचारस्या-विद्यादिप्रभानहेतुत्वेन पदार्थतामप्रतिपादयन्नाह ॥

एवं निरुध्यतेऽविद्याविपर्य्ययनिरोधनात् ।
अविद्यायां निरुद्धायां संस्काराद्यं निरुध्यते ॥

यदायं योगी यथोदितेन न्यायेन विपर्य्यासान्नोपलभ्यते तदेवं विपर्य्यासानुपलभन्ते न तद्धेतुकस्याविद्या निरुध्यते तन्निरोधाच्च संस्कारादयोऽविद्याहेतुकजरामरणशोकपरिदेव-दुःखदौर्मनस्यापायायासपर्य्यन्ता धर्म्मा निरुध्यन्ते ॥

अविद्या हि सकलस्यैव संक्लेशगणस्य जात्यादिदुःखस्य च हेतुभूता ॥ यथा हि कायेन्द्रिय-हेतुकानि सर्व्वाणि रूपेन्द्रियाणि कायेन्द्रियनिरुध्यमाने निरुध्यन्ते, एवमविद्याहेतुकानि संस्काराणि भवाङ्गानि प्रवर्त्तमानानि नियतविद्यायां निरुद्धायां निरुध्यन्त इति प्रति-पादयन्नाह ॥

अविद्यायां निरुध्यायां संस्कारो यन्निरुध्यत इति ।

अत्राह ॥ यदि विपर्य्यासनिरोधादविद्या निरुध्यतेऽस्ति ते ह्यविद्या यस्या एवं विपर्य्यय-विरोधान्निरोधो भवति ॥ तर्ह्यविद्यमानयोगगणभूतलतायाः प्रहाणोपायान्वेषणमस्ति ॥ तस्माद्विद्यत एवाविद्या तन्निरोधोपायान्वेषणसद्भावात् ॥ ततश्च सन्ति तद्धेतुका रागादयः क्लेशाः क्लेशसद्भावाच्चास्त्येव संसारभवसन्ततिरुच्यते ॥

अत्र हि नामेति महदनर्थप्राप्तित्वं परस्परयोर्हि नाम सर्व्वात्मनात्यन्तदुःखायासक्लेशा समङ्गलसंसारनिरन्तरंफुल्लफलप्रदेशक्लेशविषवृक्षपरार्यादयश्च बहुकल्पैः साधुभिः प्रज्ञाया महा-निरवशेषैर्निःश्रेयसस्तत्र तुल्यमनेन केवलन्न साहाय्यनावतिष्ठत ॥

अपि खलु तन्मूलकानामिति महानिरखलानामिव भावसद्भाववादमहाशैलायमान इवातिविरोधितया वस्थितो भगवानाह ॥ पुरुषिकया तस्यैव क्लेशविषया उपेत्यजातिजरामरणशोकायासविसरदुःखैकफलस्य सुतरां भावातिनिवेशतायासकैर्नैरोषणमाद्रियते ॥

अपि च। यद्यविद्यादीनां संक्लेशानां प्रहाणं सम्भवत्युत्तरप्रभावांशोपायान्वेषणान्वये तेषां प्रहाणं सम्भवति॥ यदि स्यात्तदा तत्स्वरूपतो विद्यमानासकैर्नैरोषणमाद्रियते॥ अपि च यद्यविद्यादीनां संक्लेशानां प्रहाणं सम्भवत्युत्तरप्रभावां सोपायान्वेषणान्वयास्तेषां प्रहाणं सम्भवति। यदि स्यात्तदा तत्स्वरूपतो विद्यमानानां वास्मादविद्यमानानां वा किं वा तत्र यदि स्वरूपतः सम्भूतानां क्लेशानां प्रहाणमिष्यते तन्नोपपद्यते किं कारणं यस्मात् यदि भूताः स्वभावेन क्लेशाः क्वचिद्धि कस्यचित् कथं नाम प्रहीयेरन् कः स्वभावं प्रहास्यति॥ स्वभावतो विद्यमानानां न शक्यः स्वभावो विनिवर्त्तयितुम्। नहि क्षित्यादीनां *"काठिनादीनां" स्वभावो निवर्त्तते। एवं यदीमे क्लेशाः स्वभावतः सम्भूताः स्युः क्वचिदित्यविद्यादयः कस्यचिदिति पुंगलस्य कथं नाम प्रहीयेरन्। नैव तत् कस्यचित् कथं नाम प्रहीयेरन् कस्मात् पुनर्न ते प्रहीयन्त इत्याह॥ कः स्वभावं प्रहास्यतीति स्वभावस्य विनिवर्त्तयितुमशक्यत्वात्॥ आकाशेनावरणविनिवर्त्तनासम्भववदित्यभिप्रायः॥

अथ स्वभावेनासम्भूता इति विकल्प्यते॥ एवमपि प्रहाणासम्भव एवेत्याह॥ यद्यभूताः स्वभावेन क्लेशाः क्वचिद्धि कस्यचित् कथं नाम प्रहीयेरन् कोऽसद्भावं प्रहास्यति॥ अभूता अपि क्लेशाः स्वभावेनाविद्यमाना अशक्या एव प्रहातुम्॥ न ह्यग्नेः शैत्यमविद्यमानं शक्यमपाकर्त्तुम्॥ एवमिमेऽपि क्लेशाः क्वचिद् यदि कस्यचित् स्वभावतो न विद्यन्ते कस्तान् प्रहास्यति॥ नैव कश्चित् प्रहास्यति॥ तदेवमुभयपक्षेऽपि प्रहाणासम्भवो नास्ति प्रहाणक्लेशानां प्रहाणाभावाच्च कुतः क्लेशप्रहाणोपायान्वेषणमिति॥ अतो यदुक्तं विद्यन्त एवाविद्यादयः क्लेशास्तत्प्रहाणोपायान्वेषणादिति तदुक्तमिति॥ यथोक्तमार्य्यसमाधिराजः॥

यो रज्यते यत्र वा रज्यते येन वा रज्यते। यो दुष्यते यत्र वा दुष्यते येन वा दुष्यते॥ यो मुह्यति यत्र वा मुह्यति येन वा मुह्यति। स तं धर्म्मं न समनुपश्यति तं धर्म्मं नोपलभते स तं धर्म्मं न समनुपश्यन्ननुपलभमानोऽरक्तोऽदुष्टोऽमूढोऽपि पर्य्यस्तचित्तः समाहित इत्युच्यते। तीर्णपारग इत्युच्यते संप्राप्त इत्युच्यत इति विस्तरः॥

आदर्शपृष्ठे तथा तैलपात्रे
निरीक्षते नारीमुखमलङ्कृतम्।
सा तत्र रागं जनयित्वा बाला
प्रधारिता काम गवेषमाणा॥

मुखस्य संक्राति यदा न विद्यते
मुखं नैव कदाचिल्लभ्यते।

---

* अयायं पाठविभ्रमः।

मूढा यथा सा जनयते रागं
तथोपमान् जानथ सर्व्वधर्म्मानित्यादि ॥

तथा रूपेण दर्शितो बोधिबोधाय ।
रूपदर्शितम्बिषभागेन शब्देन उत्तरो धर्म्मादेशितः ॥

शब्देन उत्तरं रूपङ्गम्भीरं सत्स्वभावं ।
समं रूपञ्च बोधिश्च नानात्वं चेत् स न लभ्यते ॥

यथा निर्व्वाणगम्भीरं शब्देन सम्प्रकाशितम् ।
लभ्यते न च निर्व्वाणं स च शब्दो न लभ्यते ॥

शब्दश्चाप्यनिर्व्वाणमुभयन्तन्न लभ्यते ।
एवं शून्येषु धर्म्मेषु निर्व्वाणं सम्प्रकाशितम् ।
निर्व्वाणन्निवृत्तिवृत्तं निर्व्वाणञ्च न लभ्यते ॥

अप्रवृत्तेषु धर्म्माणां यथा पश्चात्तथा पुरा ।
सर्व्वधर्म्मास्वभावेन निर्व्वाणं स च शब्दो न लभ्यते ॥

शब्दश्चार्य्यनिर्व्वाणमुभयन्तन्न लभ्यते ।
एवं शून्येषु धर्म्मेषु निर्व्वाणं सम्प्रकाशितं ॥

निर्व्वाणन्निवृत्तिवृत्तं निर्व्वाणं न च लभ्यते ।
अप्रवृत्तेषु धर्म्माणां यथा पश्चात्तथा पुरा ॥

सर्व्वधर्म्मस्वभावेन निर्व्वाणसमसंज्ञता ।
नैष्क्रम्यसारे हि ये युक्ता बुद्धबोधये ॥

तथा ज्ञानेन जानाम्यहं स्कन्धशून्यताम् ।
ज्ञात्वा च क्लेशे हि न समवसामि व्याहारमात्रेण ॥

व्याहरामि परिनिर्वृतो लोकमिमञ्चरामि।
तथा परिनिर्वृतो लोकमिमञ्चरामि॥

तथा परिनिर्वृतलोकितशूरा
यदि स्वभावतो ज्ञामि धर्माः।
कामगुणेर्हि चरन्ति असंगाः
संज्ञुविवर्ज्जियसत्वविनयन्तीति॥

इत्याचार्य्यचन्द्रकीर्त्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
विपर्य्यासपरीक्षानामत्रयोविंशतितमं प्रकरणम्॥

---

अत्राह।

यदि शून्यमिदं सर्व्वमुदयो नास्ति नव्ययः।
चतूर्णामार्य्यसत्यानामभावस्तत् प्रसज्यते॥

यदि युक्त्या नोपयुज्यत इति कृत्वा सर्व्वमिदं वाह्याध्यात्मिकं भावजातं शून्यमिति प्रतिपादितं न चैवं सति बहवश्च महाश्च दोषा भवत आपद्यन्ते। कथं कृत्वा यदि सर्व्वमिदं शून्यं स्यात्तदा यच्छून्यं तन्नास्ति यच्च नास्ति तदविद्यमानत्वाद्वन्ध्यापुत्रवन्नैवोत्पद्यते न चापि निरुध्यत इति न कस्यचित् पदार्थस्योदयव्ययश्च तदभावाच्च चतूर्णामार्य्यसत्यानामभावस्तं शून्यतावादिनः प्रसज्यते कथं कृत्वा इह हि पूर्व्वहेतुजनितं प्रतीत्यसमुत्पन्नदुःखमित्युच्यते। एतच्च दुःखमार्य्य एव विपर्य्यासप्रहाणे सति दुःखमिति संजानीते। नानार्य्याः विपर्य्यासानुगतत्वात्। यथा दर्शनञ्च पदार्थस्वभावव्यवस्थानात्॥ यथा हि विपर्य्यस्तेन्द्रियानां मधुरस्वभावमपि गुड़शर्करादिकं तिक्ततयोपलभमानानां जरादिरोगातुराणां तिक्ततैव सत्यं तं स्वानोपचयमसाधुर्य्यं तेनात्मनस्तस्य वर्णनेऽनुपलभ्यमानत्वादेवमिहापि पञ्चोपादानस्कन्धा-दुःखस्य भावा भवन्ति तथापि यत्र तान् दुःखात्मकान् पश्यन्ति तेषामेव दुःखं व्यवस्थाप्यते। न विपर्य्यासानुगमादन्यथोपलभमानानामिति॥ अत आर्य्याणामेव दुःखात्मना सत्यमिति कृत्वा दुःखमार्य्यसत्यमित्युच्यते। ननु वानयैव दुःखावेदना दुःखमिति परिच्छिद्यत इति॥ एवं ततकथं दुःखमार्य्याणामेव सत्यं। सत्यं न हि दुःखैरेव वेदना केवलं दुःखं सत्यं किं तर्हि पञ्चाप्युपमानस्कन्धा इत्यत आर्य्याणामेव तत् सत्यमिति कृत्वा आर्य्यसत्यमिति व्यवस्थाप्यते॥ यथोक्तम् –

ऊर्णापक्ष्मो यथैव हि
करतलसंस्थो न विद्यते पुंभिः ।
अक्षिगतस्तु स एव हि जनयत्य
रतिञ्च क्रीड़ाञ्च करतलसदृशः ॥

बालो न वेत्ति संस्कारं दुःखताऽपेक्ष्य ।
अक्षि सदृशस्तु विद्वान् तेनोद्वीक्ष्यते गाढ़मिति ॥

तस्मादार्य्याणामेव दुःखसत्यमिति ॥ दुःखमार्य्यसत्यं व्यवस्थाप्यते कदा च तद्दुःखमार्य्य सत्यं युज्यते यदा संस्काराणामुदयव्ययौ सम्भवतः यदा तु शून्यत्वान्न किञ्चिदुत्पद्यते नापि किञ्चिन्निरुध्यते तदा नास्ति दुःखम् । असति च दुःखे कुतः समुदयसत्यं यदा हि हेतोर्दुःखं समुदेति समुत्पद्यते सहेतुस्तृष्णाकर्म्मक्लेशलक्षणः समुदय इत्युच्यते ॥ यदा तु फलभूतं दुःखसत्यं नास्ति तदा फलरहितस्य हेतुकत्वानुपपत्तेः समुदयोऽपि नास्ति दुःखस्य च विगमः पुनरुत्पादनिरोध इत्युच्यते । यदा तु दुःखमेव नास्ति तदा कस्य विरोधः स्यादिति । अतो दुःखनिरोधोऽपि न सम्भवति । असति दुःखनिरोधे सत्यस्याप्यभावः असति च दुःखनिरोधे कुतो दुःखनिरोधगामिनि आर्य्याष्टाङ्गमार्गानुगा प्रतिपद्भविष्यतीति आर्य्यसत्यमपि नास्तीति तदेवं शून्यत्वं भावानां ब्रुवतश्चतूर्णामार्य्यसत्यानामभावः प्रसज्येत । ततश्च कोदोष इत्युच्यते ॥

परिज्ञा च प्रहाणञ्च भावना साक्षिकर्म्म च ।
चतूर्णामार्य्यसत्यानामभावान्नोपपद्यते ॥

चतूर्णामार्य्यसत्यानामभावप्रसङ्गे सति यदेतदनित्यादिभिराकारैर्दुःखसत्यपरिज्ञानं दुःखसमुदयस्य च दुःखनिरोधगामिनाश्च प्रतिबद्धा भावना दुःखनिरोधस्य च साक्षिकर्म्मसाक्षात्करणस्तन्नोपपद्यते ॥ यदि दुःखादीनामार्य्यसत्यानामभावे सति परिज्ञादिकन्नास्ति तदा को दोष इत्युच्यते ॥

तदभावान्न विद्यन्ते चत्वार्य्यार्य्यफलानि च ।
फलाभावे फलस्थानां न सन्ति प्रतिपन्नकाः ॥

संघो नास्ति न वै सन्ति तेऽसी पुरुषपुङ्गलाः ।
अभावाच्चार्य्यसत्यानां सद्धर्म्मोऽपि न विद्यते ।
धर्म्मे वा सति संघे च कथं बुद्धो भविष्यति ॥

यदा चैवं दुःखपरिज्ञानादिकं नास्ति तदास्मिन्न सति स्रोत आपत्ति सकृदागामिनोऽनागाम्यनर्हत् फलाख्यं फलचतुष्टयन्नोपपद्यते। कथं कृत्वा। इह क्लेशानां प्रहाणं सपिण्डितं फलाख्यं प्रतिलभ्यते ॥

तद्यथा। संयोजनत्रयप्रहाणे सति षोड़शे मार्गे ऽन्वयज्ञानक्षणे यत् क्लेशप्रहाणन्तत्स्रोतआपत्तिफलम्। कामावचराणां भावानाम्प्रहातव्यानां क्लेशानामतिमात्रमृदूनां प्रकाराणाम्पुनरधिमात्रमध्यमृदुप्रकारभेदेन प्रत्येकम्बिद्यमानानान्न च प्रकारो भवति ॥ तत्र कामावचरेषु क्लेशप्रकारपरिक्षये विमुक्तिमार्गे यत् प्रहाणं सकृदागामि फलं तेषामेव कामावचराणां क्लेशानान्नच न प्रकारक्लेशपरिक्षये विमुक्तिमार्गे यत् क्लेशप्रहाणं सदनागामि फलं रूपारूप्यावचराणां क्लेशानाम्भवेनाप्रहातव्यानां भूमौ भूमौ नैवं प्रकारभेद-भिन्नानां यावन्नैव संज्ञा नासंज्ञा येन भूमिकेनैवमक्लेशप्रकारपरिक्षयविमुक्तिमार्गे यत् प्रहाणन्तदर्हत् फलमित्येतानि चत्वारि फलानि तान्येतानि कथं युज्यन्ते यदि दुःखस्य परिज्ञानं सम्भवति समुदयस्य प्रहाणं निरोधस्य साक्षात्करणम्। आर्य्यमार्गस्य भावना भवति। यदा तु दुःखादीनामार्य्यसत्यानामभावे सति दुःखपरिज्ञानादिकन्नास्ति तदा न सन्ति तानि चत्वारि च फलानि। चतूर्णाञ्च फलानामभावे सति ये तेषु व्यवस्थिता श्चत्वार आर्य्य पुद्गलास्ते न सन्ति। अतएव प्रतिपन्नका अपि चत्वार आर्य्यपुद्गला न सम्विद्यन्ते इह हि षोड़शे मार्गेऽन्वयज्ञानक्षणात् पूर्व्वपञ्चदशक्षान्तिज्ञानक्षणास्ते यथा त्रैधातुकदुःखाभिसमयलम्बनाश्चत्वारः क्षान्तिज्ञानक्षणाः। तत्र कतमत्रैधातुकदुःखाभिसमये चत्वारः क्षान्तिज्ञानक्षणाः ॥

तद्यथा ॥ कामावचरणदुर्दर्शनप्रहातव्यः सत्कायान्तग्राहमिथ्यादृष्टिदृष्टिपरामर्शशीलव्रतपरामर्शविचिकित्सारागप्रतिघमानाविद्याख्यदेशानुशयप्रतिपक्षः। अनित्यदुःखशून्येनात्माकारोत्पन्नः कामावचरेण दुःखसत्यालम्बन आनन्तर्य्यमार्गक्षणो दुःखेऽन्वयज्ञानक्षान्तिक्षणस्तृतीयः। तदालम्बनाकाल एव विमुक्तिमार्गलक्षणो दुःखेऽधर्म्मज्ञानक्षणे द्वितीयः।

एवंरूपारूप्यावचरदुःखसत्यालम्बनः प्रतिघवर्ज्जितानन्तराक्लिष्टाः सानुनयप्रतिपक्षा दुःखाद्याकारोत्पन्ना आनन्तर्य्यमार्गलक्षणा दुःखान्वयज्ञानक्षान्तिक्षणास्तृतीयः। तदालम्बनाकाल एव विमुक्तिमार्गलक्षणो दुःखेऽधर्म्मज्ञानक्षणो द्वितीयः। एवंरूपारूप्यावचरलम्बनाकार एव विमुक्तिमार्गलक्षणो दुःखान्वयज्ञानक्षणस्तुर्थः। यथा यथाचैत्यत्रैधातुकावचरदुःखसत्याभिसमयक्षान्तिज्ञानक्षणाश्चत्वार एव कामावचरसमुदयसदनप्रहातव्यमिथ्यादृष्टिदृष्टिपरामर्शविचिकित्सारागप्रतिघमानो विद्याख्यसप्तानुशयप्रतिपक्षाद्धेतुसमुदायप्रभवप्रत्ययाकारोत्पन्नः कामावचरसमुदयसत्यावलम्बन आनन्तर्य्यमार्गलक्षणसमुदयधर्म्मज्ञानक्षान्तिक्षण एकः॥ तदालम्बनाकार एव च विमुक्तिमार्गलक्षणसमुदयधर्म्मज्ञानक्षणो द्वितीयः।

एवंरूपावचरसमुदयसत्यालम्बनप्रतिघवर्ज्जितानन्तराक्लिशद्वादशानुशयप्रतिपक्षसमुदयसत्याकारोत्पन्नः आनन्तर्य्यमार्गलक्षणः समुदायोऽचयज्ञानक्षान्तिक्षणस्तृतीयः। तदालम्बनाकार एव च मुक्तिमार्गलक्षणः समुदयोऽन्वयज्ञानक्षणश्चतुर्थः ॥

इत्येतत् त्रैधातुकावचरदुःखसमुदयसत्याभिसमये चत्वारः क्षणाः। यथा चैते चत्वारः

क्षणास्त्रैधातुकदुःखसमुदयसत्याभिसमय एवं कामावचरदुःखनिरोधदर्शनप्रहातव्यसमुदयोक्त-सप्तानुशयप्रतिपक्षानिरोधशान्तप्रणीतनिःसरणाकारोत्पन्नः कामावचरदुःखनिरोधसत्यालम्बन-श्चानन्तर्य्यमार्गलक्षणो निरोधे धर्म्मज्ञानक्षान्तिक्षण एकः। तदालम्बनाकारएव च विमुक्ति-मार्गलक्षणो दुःखनिरोधधर्म्मज्ञानक्षणो द्वितीयः। एतैरेवाकारै रूपारूप्यावचरदुःखनिरोध-सत्यालम्बनप्रतिघवर्ज्जितद्वादशानुशयप्रतिपक्ष आनन्तर्य्यमार्गलक्षणो रूपारूप्यावचरदुःख-निरोधेऽन्वयज्ञानक्षान्तिक्षणस्तृतीयः। तदालम्बनाकारे तु चरमविमुक्तिमार्ग लक्षणनिरोधे-ऽन्वयज्ञानक्षणश्चतुर्थः। इत्येतत्त्रैधातुकावचरदुःखनिरोधाभिसमये चत्वारः क्षणाः। एवं कामावचरदुःखगामीमार्गदेशनाप्रहातव्यनिरोधानुशयेषु शीलव्रतपरामर्शसृष्टसंप्रतिपत्त्याष्टानु-शयप्रतिपक्षमार्गन्यायप्रतिपन्नैः याणिकाकारोत्पन्नः कामावचरदुःखनिरोधगामिमार्गालम्बन आनन्तर्य्यमार्गलक्षणमार्गे धर्म्मज्ञानक्षान्तिक्षण एकः। तदालम्बनाकार एवं विमुक्तिमार्ग-लक्षणधर्म्मज्ञानक्षणो द्वितीयः। एतैरेवाकारै रूपारूप्यावचरदुःखनिरोधमार्गालम्बनप्रतिघ-वर्ज्जितश्चतुर्दशानुशयप्रतिपक्ष आनन्तर्य्यमार्गे लक्षणमार्गेऽन्वयज्ञानक्षान्तिक्षणस्तृतीयः।

इत्येते पञ्च दर्शनमार्गाभिधानाएवव्यवस्थिता आर्य्याः। स्रोतआपत्तिफल-साक्षात्क्रियायै प्रतिपन्नक इत्युच्यते। षोड़षे तु मार्गे ऽन्वयज्ञानस्थितः। स स्रोतआपन्न इत्युच्यते॥ तत्र तेषामशीतिरनुशयासत्यानान्दर्शनमात्रेण भावनामनपेक्ष्यैव प्रहीयन्त इति कृत्वा दर्शनप्रहा-तव्या इत्युच्यन्ते॥ यथा दृष्टसत्याकारभावयोस्तु स यश्चोत्प्रहीयन्ते ते भावना प्रहातव्यास्ते च दशानुशया भवन्ति॥ कामावचरा रागप्रतिघनामाविद्याः रूपावचरा एव प्रतिघवर्ज्जिता-स्त्रयः॥ आरूप्यावचराश्च तएत एवेति दश भवन्ति॥ एते च यथोक्तेन न्यायेन भूमौ भूमौ नवधा भिद्यन्ते॥ कामधातौ चतुर्षु ध्यानेषु चतुर्षु रूप्येषु एकैकस्य च क्लेशप्रकारस्य प्रहा-णार्थमानन्तर्य्यविमुक्तिमार्गभेदेन द्वौ द्वौ ज्ञानक्षणौ व्यवस्थाप्यते क्लेशक्षणविपर्य्ययेणाधि-मात्राधिमात्रो हि क्लेशप्रकारो मृदुमृदुभ्यामानन्तर्य्यविमुक्तिमार्गाभ्यामप्रहीयते॥ यावन्मृदु-मृदूक्तक्षणप्रकाराधिमात्राधिमात्राभ्यां क्षणाभ्यां प्रहीयते॥ स्फुलिङ्गमलमनल्पप्रयत्नसाध्यं सूक्ष्मन्तु महाप्रयत्नसाध्यं महाप्रयत्नरजकवस्त्रधावनस्य कर्म्मेण इति विज्ञेयम्॥ तत्र दर्शन मार्गादूर्द्ध्वं कामावचरभावना प्रहातव्या षट्क्षणप्रहारप्रतिपक्षविमुक्तिमार्गाख्यं ज्ञानाद र्व्वाग्ज्ञानक्षणावस्थितः आर्य्यसकृदागामी प्रतिपन्नक इत्युच्यते॥ सकृदिति सलोकमागत्य परिनिर्व्वाणात् सकृदागामीत्युच्यते॥ तत्फलार्थप्रतिपन्नपकः प्रयोगस्थः सकृदागामिफल-प्रतिपन्नक इत्युच्यते॥ षष्ठे तु क्षणे सकृदागामीषत्क्षणादूर्द्ध्वं न संक्लेशप्रकारप्रहाणविमुक्ति मार्गक्षणादर्व्वाग्ज्ञानक्षणेषु वर्त्तमान आर्य्यानागामी फलप्रतिपन्नक इत्युच्यते॥ अनागा-म्यसल्लोकं तत्रैव परिनिर्व्वाणादनागामीत्युच्यते॥ तत्फलार्थप्रतिपन्नक अनागामिफल-प्रतिपन्नक इत्युच्यते॥ नवमेतु क्षणेऽनागामीत्युच्यते॥ कामावचरनवमविमुक्तिमार्गक्षणा-दूर्द्ध्वमेव संज्ञा नासंज्ञायते न भूमिकनवमक्लेशप्रकारप्रहाणविभुक्तिमार्गक्षणादर्व्वाग्ज्ञान क्षणेषु वर्त्तमान आर्य्योऽर्हत्फलप्रतिपन्नक इत्युच्यते। सदेवमानुषासुराल्लोकात् पूजार्हत्वा-दर्हन्नित्युच्यते॥ तत्फलार्थप्रतिपन्नकः प्रयोगस्थः। भवाग्रिकनवमक्लेशप्रकारप्रहाणे तु नवम-

विमुक्तिमार्गे व्यवस्थितोऽर्हद्भवति। तत्र ते चत्वारः प्रतिपन्नकाः पुद्गलाश्च फलस्थाश्चत्वारश्च इत्येतेऽष्टौ महापुरुषपुद्गला भवन्ति। परमदक्षिणार्हा उक्ता भगवता यथोक्तं सूत्रे॥

पृष्टः स देवराजेन क्लेश(स्य) वशवर्त्तिना।
सूक्ष्मतां* जायमानानां प्राणिनां पुण्यकाङ्क्षिनाम्॥

कुर्व्वतां श्रद्दधानानां च पुण्यमौपधिकं सदा।
सुचेत्रं ते प्रवक्ष्यामि यत्र दत्तं महत् फलम्॥

प्रतिपन्नकाश्चत्वारश्चत्वारश्च फलस्थिताः।
एवं संघा दक्षिणीया विद्याचरणसाम्यदेति॥

तद्यदि चत्वार्य्यार्य्यसत्यानि न सन्ति तेषाञ्च परिज्ञानादीनि तदा सत्यदर्शनभावनालभ्यानां फलानामभावात् प्रतिपन्नफलस्य पुद्गलोनामभाव एव। अतश्च संघो नास्ति। तत्राधिगमधर्म्मेण प्रत्यक्षधर्म्मतया सर्व्वमारैरपि बुद्धोभवत्यभेद्यत्वादवेत्यप्रासादलाभेन संघः स न स्यात्। न चेत् सन्ति ते ऽष्टौ पुरुषपुद्गलाः आर्य्यसत्यानां चाभावात् सद्धर्म्मोऽपि न सम्भवति। सतामार्य्याणां धर्म्मः सद्धर्म्मस्तत्र निरोधसत्यं फलधर्म्मः मार्गसत्यन्तु फलावतारधर्म्मः। एष तावदधिगमधर्म्मस्तत्सम्प्रकाशिका देशना आगमधर्म्मः। सर्व्वएष आर्य्यसत्यानामभावे सति नास्तीति॥

अभावाच्चार्य्यसत्यानां सद्धर्म्मोऽपि न विद्यते।
धर्म्मे वा सति संघे च कथं बुद्धो भविष्यति॥

यदि हि यथोक्तधर्म्मःस्यात्तदा तद्धर्म्मानुधर्म्मप्रतिपत्त्या सर्व्वाकारं सर्व्वधर्म्माभिसम्बोधो बुद्धो भवतीति युक्तं स्यात्॥ यदि च संघः स्यात्तदा तदुपदेशैरुपचीयमानसम्भारस्तद्दानमानशरणगमनादिभिश्चोपचीयमानपुण्यसम्भारक्रमाद्बुद्धोभवेत्॥

अथवा असति संघे श्रोतआपत्तिफलं प्रतिपन्नकादीनामभावः स्यात्। न च प्रतिपन्नकादित्वसंप्राप्य बुद्धमाप्यते॥ अवश्यं हि पूर्व्वं भगवता कस्मिंश्चित् फले व्यवस्थातव्यम्। तत्र चेत् फलव्यवस्थितः संघोक्तः। यस्मिंश्च भगवान् भवति संघे वा सति नियतं नास्ति भगवान् बुद्धः॥

---

* सूक्ष्मताञ्जायमानानामिति वा पाठः॥

अथ भगवानप्यशैक्ष्यन्तर्भावात् संघान्तर्गत एव तथा च बुद्धप्रमुखो भिक्षुसंघ इत्यभिधानात् संघान्तर्गत एव भगवानिति। केचिद्वर्णयन्ति तेषामेतेन स्पष्टमेवैतत्॥

धर्म्मे वा सति संघे च कथं बुद्धो भविष्यतीति॥

मध्योद्देशिकास्त्र महावस्तूपदिष्टभूमिव्यवस्थया प्रथमभूमिस्थितं बोधिसत्त्वमुत्पन्नदर्शनमार्गं व्याचक्षाणाः संघान्तःपातिनं व्याचक्षते तदा संघे वा सति बोधिसत्त्वोऽपि नास्तीति। कथं बुद्धो भविष्यतीति स्पष्टमेवैतत्। तदेवं त्रिण्यपि रत्नानि ब्रुवाणः प्रतिबोधसे शून्यतां शून्यतामित्येवं वदन् बुद्धधर्म्मसंघाख्यानि त्रिण्यपि दुर्लभत्वात्॥ कदाचिदेवोत्पत्तितः अल्पपुण्यानाञ्च्छेदप्राप्तमहार्घमूल्यत्वाद्रत्नानि प्रतिबोधसे किं चान्यत्॥

शून्यतां फलसद्भावमधर्म्मं धर्म्ममेवच।
सर्व्वसंव्यवहारांश्च लौकिकान् प्रतिबोधसे॥

शून्यतां ब्रुवाण इत्यनेन सम्बन्धः॥ यदि सर्व्वमिदं शून्यं यदा सर्व्वमेव नास्ति तदा सर्व्वान्तःपातित्वाद्धर्म्माधर्म्मौ सहतद्धेतुकनष्टानष्टफले न च सम्भवतः॥ सर्व्वे एवामी लौकिका व्यवहाराः कुरुपे च खादतिपु गच्छागच्छेत्यनेन मोऽद्यापि सर्व्वान्तर्गतत्वात् सर्व्वधर्म्माणाञ्च शून्यत्वान्नैव युज्यन्त इति। अतो नायं यथोपवर्णितान्यपेक्षायामिति॥ अत्र ब्रूमः शून्यतायान्तु त्वं प्रयोजनम्॥ शून्यता शून्यतार्थं न तत्र एवम्विहन्यसे॥ स भवेत् स विकल्पनयैव नास्तित्वं शून्यतार्थं इत्येवम्विपरीतमध्यारोप्य यदि सर्व्वमिदं शून्यमुदयो नास्ति न व्यय इत्यादिनोपालम्भं ब्रुवाण उपालम्भं ब्रुवाणोऽस्मासु महान्तं खेदमापन्नोऽतीव विहन्यते। विविधैरभूतैः परिकल्प्य हन्यत इत्यर्थः। न त्वयमस्माभिरत्र शान्तः शून्यतार्थ उपवर्णितो यत् स्वरोपम इति परिगृहीतः शून्यतार्थम्वाजानानः शून्यतामपि न जानाति। न चापि शून्यतायां यत्प्रयोजनं तद्विजानाति॥ ततश्च यथावस्थितवस्तुस्वरूपापरिज्ञानेन एतत्त्वया बह्वया युक्तमस्य व्याख्यानासम्बन्धमेवोपवर्णितेन। अथ किं पुनः शून्यतायां प्रयोजनं तदुक्तमेव तदात्मपरीक्षायां कर्म्मक्लेशक्षयोमोक्षः कर्म्मक्लेशविकल्पतः ते प्रपञ्चात्प्रपञ्चवस्तु-शून्यतायान्निरुध्यत इति॥ अतो निरवशेषप्रपञ्चोपशमार्थं शून्यतापदिश्यते तस्मात् सर्व्व-प्रपञ्चोपशमः शून्यतायां प्रयोजनम् भवांस्तु नास्तित्वं शून्यतार्थम्परिकल्प्य यत्प्रपञ्चजालमेव समर्द्धयमानो न शून्यतायां प्रयोजनं वेत्ति॥

अथ का पुनः शून्यता सापि तत्रैवोक्ता। अपरप्रत्ययं शान्तप्रपञ्चितानिर्व्विकल्पमनानार्थ-मेतत्तत्त्वस्य लक्षणमिति॥ अतः प्रपञ्चनिवृत्तिस्वभावायां शून्यतायां कुतो नास्तित्वमिति॥ शून्यतामपि न जानाति भवान् यं वार्थमुपादाय शून्यताशब्दः प्रवर्त्तते तमपीहैव प्रतिपाद-यिष्यामः यत् प्रतीत्यसमुत्पादः शून्यतायां आचक्ष्महे॥



स प्रज्ञप्तिरुपादाय प्रतिपत् सैनमध्यमति
यः प्रत्ययैर्जायति स ह्यजाते न तस्य उत्पादु स्वभाव नास्ति।
यः प्रत्ययाधीनु स शून्य उक्तो यः
शून्यतायां जानति सोऽप्रमत्त इति भगवतो गाथावचनात् ॥

एवं प्रतीत्यसमुत्पादस्य शब्दस्य योऽर्थः स एव शून्यताशब्दस्यार्थो न पुनरभावशब्दस्य योऽर्थः स शून्यता अभावशब्दार्थस्याशून्यतार्थमित्यतोऽर्थमित्यध्यारोप्य भगवानस्मानुपालभते। तस्मात् शून्यता शब्दार्थमपि न जानाति अजानानश्च त्वमेवमुपालम्भं कुर्वन्ति यत्त्वं विहन्यसे कथास्माकं यथोक्तमुपालम्भं करोति॥ यो भगवान् प्रवचनादिष्टविपरीतसत्यद्वयविभागं जानाति॥ केवलन्तु ग्रन्थमात्राध्ययनपर एवेति। अत आचार्य्यः करुणयापरस्य मिथ्याप्रवचनार्थविरोधनिराशार्थं भगवत्प्रवचनो यदिष्टाविपरीतसत्यद्वयव्यवस्थामेव तावदधिकृत्याह ॥

द्वे सत्ये समुपाश्रित्य बुद्धानां धर्म्मदेशना।
लोकसंवृतिसत्यञ्च सत्यञ्च परमार्थतः ॥

इह हि भगवतां बुद्धानां सत्यद्वयमाश्रित्य धर्म्मदेशना प्रवर्त्तते॥ कतमत् सत्यद्वयं लोकसंवृत्तिसत्यञ्च परमार्थसत्यञ्च॥ तत्र स्कन्धात्मा लोक आख्यातस्तत्र लोकादिनिःश्रित इति वचनात् पञ्चधातुपादाय प्रज्ञप्यमानः पुद्गलो लोक इत्युच्यते॥ समन्ताद्वरणं सम्वृत्तिः। अज्ञानं हि समन्तात् सर्व्वपदार्थतत्त्वावच्छादनात् संवृत्तिरित्युच्यते॥ परस्परसंभवनं वा संवृत्तिः अन्योन्यसमाश्रयणेनेत्यर्थः॥ अथवा संवृत्तिः संकेतो लोकव्यवहार इत्यर्थः स चाभिधानाभिधेयज्ञानज्ञेयादिलक्षणः॥ लोकसंवृत्तिर्लोकसंवृतिः। किं पुनरलोकसम्वृतिरप्यस्ति यत एवं विशिष्यते लोकसंवृतिरिति। यथावस्थितपदार्थानुवाद एषा नात्रैव चिन्तातरति॥ अथवा तिमिरकामलाद्युपहतेन्द्रियविपरीतदर्शनावस्थानलोकास्तेषां या संवृत्तिरतो विशिष्यते लोकसंवृतिसत्यमिति॥ एतच्च लङ्कावतारे विस्तरेणोक्तम् ततो वेदितव्यम्। लोकसंवृत्यासत्यलोकसंवृतिसत्यसर्व्व एवायमभिधानाभिधेयज्ञानज्ञेयदिव्यावहारोऽशेषं लोकसंवृतिसत्यमित्युच्यते॥ न हि परमार्थत एव तत्सम्भवति॥ तत्र हि, –

निवृत्तमभिधातव्यं निवृत्तश्चित्तगोचरः।
अनुत्पन्नो निरुद्धो हि निर्व्वाणमिव धर्म्मतेति ॥

कृत्वा कुतस्तत्र परमार्थे वाचां प्रवृत्तिः कुतो वा ज्ञानस्य स हि परमार्थोऽपरप्रत्ययः शान्तप्रत्यात्मवेद्य आर्य्याणां सर्व्वप्रपञ्चातीतोऽस्मिन्नुपदिश्यते॥ न चापि ज्ञायते उक्तं हि, –

पूर्व्वमपरप्रत्ययं शान्तं प्रपञ्चैरप्रपञ्चितम्।
निर्व्विकल्पमनानार्थमेतत्तत्त्वस्य लक्षणमिति॥

परमश्चासावर्थश्चेति परमार्थः॥ तदेव सत्यं परमार्थसत्यम्॥ अनयोश्च सत्ययोर्विभागो विस्तरेण मध्यमकावतारादेव ज्ञेयः॥ तदेतत् सत्यद्वयमाश्रित्य बुद्धानां भगवतां धर्म्म-देशना प्रवर्त्तते॥ एवं व्यवस्थितः देशनाक्रमः॥

ये चानयोर्नजानन्ति विभागं सत्ययोर्द्वयोः।
ते तत्त्वं न विजानन्ति गम्भीरबुद्धशासने॥

अत्राह॥ यदि तर्हि परमार्थो निष्प्रपञ्चस्वभावः स एवास्तु तस्मिन्ननयोरपरयोः स्कन्धा धात्वायतनयोर्यत्सत्यं प्रतीत्य समुत्पादादिदेशनया प्रयोजनमपरमार्थो यः। अतत्त्वं हि परि-त्याज्यं यच्च परित्याज्यं किं तेनोपदिष्टेन॥ कथ्यते॥ सत्यमेतदेव किन्तु लौकिकं परमार्थ-मेवेत्युपगम्याभिधानाभिधेयज्ञानज्ञेयादिलक्षणमशक्य एव परमार्थो दर्शयितुम्॥ अदेशितश्च न शक्योऽधिगन्तुम्॥ अनधिगम्य च परमार्थं न शक्यं निर्व्वाणमधिगन्तुमिति प्रति-पादयन्नाह॥

व्यवहारमनाश्रित्य परमार्थो न देश्यते।
परमार्थमनागम्य निर्व्वाणं नाधिगम्यत इति॥

तस्मान्निर्व्वाणाधिगमापायत्वादवश्यमेव स्थिता सम्वृतिरादावेवाभ्युपेया भोजनमिव सलि-लार्थिनेति॥ तदेवं यो यः संवृतिपरमार्थलक्षणसत्यद्वयस्य व्यवस्थामपाकृत्य शून्यतां वर्ण-यति तत्तथाविधं पुद्गलम्बिनाशयेऽदिष्टाशून्यतामन्दमेधसं॥ सर्पो यथा दुर्गृहीता विद्या वा दुष्प्रसाधिता॥ संवृतिसत्यं ह्यज्ञानमात्रसमुत्थापितं निःस्वभावं बुद्धा तस्य परमार्थलक्षणां शून्यताम्प्रतिपद्यमानो यो नान्तद्वये पतति॥ किन्तदा आसीद् यदिदानीं नास्तीत्येवं पूर्व्व-स्भावस्वभावानुपरम्भात् पश्चादपि नास्तितां न प्रतिपद्यते प्रतिविम्बाकारायाश्च लोकसंवृते-रबाधनात् कर्म्म कर्म्मफलधर्म्माधर्म्मादिकमपि न बाधते। न चापि परमार्थम्भाव स्वभाव-त्वेन समानोपयन्ति। निःस्वभावानामेव पदार्थानां कर्म्मफलादिदर्शनात्॥ सस्वभावानां वा दर्शनात् यत् स्वयं सत्यद्वयविभागमपश्यन् शून्यतां संस्काराणां पश्यति सशून्यतां पश्यन् मुमुक्षुर्नास्तितां वा संस्काराणां परिकल्प्य यद्यदिष्या शून्यतां काश्चिद्भावतः सन्ति तस्याश्चा-श्रयार्थं भावस्वभावमपि परिकल्पयेत्॥ उभयथा वाप्य दुर्दृष्टा शून्यता नियतं विनाशं परि-कल्पयेत्॥ कथं कृत्वा यदि तावत् सर्व्वमिदं शून्यं सर्व्वं नास्तीति परिकल्पयेत् तदास्य मिथ्या-दृष्टिरापद्यते॥ यथोक्तम्॥

विनाशं याति दुर्दृष्टो धर्म्मोऽयमविपश्चितः ।
नास्तिता दृष्टिसमले यस्मादस्मिन्निमज्जतीति ॥

अथवा सापवादं कर्त्तुर्नेच्छति तदा नियतं तदानियतमनियतमस्य शून्यतायाः प्रतिक्षेप आपद्यते ॥ कथं नामामी भावाः सकलसुरासुरनरलोकैरुपलभ्यमाना अपि शून्या भविष्यन्ति ॥ तस्मान्न निःस्वभावार्थः शून्यतार्थ इत्येवं प्रतिक्षिप्य सद्धर्म्मव्यसनसंवर्त्तनीयेन पापकेन कर्म्मणा नियतमपायत्वात् ॥ यथोक्तमार्य्यरत्नावल्याम् ॥

अपरोऽप्यस्य दुर्ज्ञानान्मूर्खः पण्डितमानिकः ।
प्रतिक्षेपविनष्टात्मा यात्यवीचिमधोमुख इति ॥

एवन्तावदभावो गृह्यमाणः शून्यतां ग्रहीतारं विनाशयति ॥ यथायं भगवान् शून्यतां परिकल्पयेत् ॥ तदाश्रयाणाञ्च संस्काराणामस्तित्वमेवमपि निर्व्वाणगामिनि मार्गे विप्रतिपन्नत्वात् ॥ शून्यतापदेश एवावद्धुलोको जायते ॥ तदेवं भावरूपेणापि शून्यतागृह्यमाणो गृहीतो गृहीतारम्विनाशयति ।

ननु च यदुपकारकं तदन्यथागृह्यमाणो महान्तं धनस्कन्धमावहति शिरोमणिग्रहणात् तेन च व्यालग्राहिकानां जीविकाकल्पनात् । यथोद्देशतिरस्कारेण तु गृह्यमाणो ग्रहीतारमेव विनाशयति । यथा च यथोपदेशप्रसाधिता विद्या साधनमनुगृह्णाति ॥ उपदेशपरिभ्रष्टात् साध्यमाना साधकमेव विनाशयति ॥ एवमिहापि यथोपदेशं शून्यतामर्हति विद्यासाध्यमाना गृह्यमाणा भावाभावाभिग्राहतिरस्कारेण मध्यमया प्रतिपदा ग्रहीतारं परमेण जातिजरामरणादिदुःखहुताशनशमनैकरसेन निरुपधिशेषनिर्व्वाणजलधारावर्षसुखेन योजयति ॥ यथोपदेशविशेषविगमे न तु गृह्यमाणो नियतं यथोदितेन ग्रहीतारं एव विनाशयति ॥ यतश्चैवं शून्य उद्गृहीतो ग्रहीतारं विनाशयति ॥
मन्दप्रज्ञैश्चाशक्या सम्यग्ग्रहीतुम् ॥

अतश्च प्रत्युदावृत्तं चित्तं देशयति मुनेः ।
धर्मं मत्वास्य धर्म्मस्य मन्दैर्दुरवगाहताम् ॥

यस्मादयं शून्यतालक्षणो धर्म्मो मन्दमेधसमल्पप्रज्ञं सत्त्वं विपर्य्यासग्रहणाद्विनाशयति ॥ अतएवास्य धर्म्मस्य मन्दैर्दुरवगाहतां मत्वानुत्तरां सम्यक् सम्बोधिमभिसंबुध्य सर्व्वसत्त्वधातुम्वावलोक्य धर्म्मस्य वातिगाम्भीर्य्यं सद्धर्म्मं देशयितुं चित्तं प्रतिवृत्तं मुनेर्बुद्धस्य भगवतो महापायज्ञानविशेषशालिनः ॥ यथोक्तं सूत्रे ॥ अथ भगवतोऽविनाभिसंबुद्धस्यैतदभवत् ॥
अधिगतो मया धर्म्मो गम्भीरावभासोऽतर्कोऽतर्कावचरः सूक्ष्मः पण्डितविज्ञवेदनीयः स

वेत्तमहं परेषां रोचयेयम् ॥ परे चेमे न विभावयेयुः । सममविद्यातः स्यात् तेमयः स्याद्वेतसोऽनुदयः स्यात् ॥ योऽन्वहं एकाकी अरण्ये प्रविविक्तदृष्टधर्म्मसुखविहारमनुप्राप्तो विहरेयमिति विस्तरः ॥ तदेवं सत्यद्वयाविपरीतव्यवविज्ञायशून्यतायामधिलयं यत्पुनः कुरुत भवान् दोषः प्रसङ्गो नास्माकं सशून्यतापपद्यते ॥ योऽयं भगवतां महान् दोषप्रसङ्गोऽस्मासु प्रक्षिप्तः ॥ यदि शून्यमिदं समुदयो नास्ति ८ स्तुम + नव्यय इत्यादिना यस्मात् सत्यद्वयव्यवस्थानाभिज्ञेन सता शून्यतार्थशून्यताप्रयोजनश्च यथावदबुद्धापत्तिप्तः सोऽस्माकं शून्ये शून्यतावादेनोपपद्यते ॥ यतश्च नोपपद्यते अतोऽयं भवान् दोषप्रसङ्गं शून्यताया-मुद्भावयन् शून्यतायामधिलयमधिक्षेपन्निराकरणं प्रतिक्षयं करोति ॥ साभिरयोस्माकं नोप-पद्यते ॥ अभावार्थं हि शून्यतार्थमध्यारोप्यप्रसङ्ग उद्भावितो भवता ॥ न च वयमभावार्थं शून्यतार्थं शून्यतार्थं व्याचक्ष्महे किं तर्हि प्रतीत्यसमुत्पादार्थमित्यतो न युक्तमेतत् शून्यतादर्शने च केवलं यथोक्तदोषप्रसङ्गोऽस्मत्पत्ते नावतरति ॥ अपि खलु सर्व्वमेव सत्यादिव्यवस्थानं सुतरामुपपद्यत इति प्रतिपादयन्नाह ॥

> सर्व्वं च युज्यते तस्य शून्यता यस्य युज्यते ।
> सर्व्वं न युज्यते तस्य शून्यं यस्य न युज्यते ॥

यस्य हि सर्व्वभावस्वभावशून्यतेयं युज्यते तस्य सर्व्वमेतद्यथोपवर्णितं युज्यते ॥ कथं कृत्वा यस्मात् प्रतीत्यसमुत्पादं हि वयं शून्यताभ्यो वक्ष्महे ॥

> यः प्रत्ययैर्जायति सह्यजातः
> न तस्य उत्पादस्वभावतोऽस्ति ।
> यः प्रत्ययाधीनः स शून्य उक्तः ।
> यः शून्यतां जानाति सोऽप्रमत्त इति ॥

गाथा वचनात् ॥ शून्याः सर्व्वधर्म्मा निःस्वभावयोगेनेति प्रज्ञापारमिताभिधानात् ॥ तस्माद् यस्येयं शून्यता युज्यते रोचते क्षमते तस्य प्रतीत्यसमुत्पादो युज्यते ॥ यस्य प्रतीत्य-समुत्पादो युज्यते तस्य चत्वार्य्यार्य्यसत्यानि युज्यन्ते कथं कृत्वा यस्मात् प्रतीत्यसमुत्पन्नमेव हि दुःखम्भवति नाप्रतीत्यसमुत्पन्नम् । तच्च निःस्वभावत्वाच्छून्यं सति दुःखे दुःखसमुदयो दुःख-निरोधो दुःखनिरोधगामिनी च प्रतिपद् युज्यते ॥ ततश्च दुःखपरिज्ञानं समुदयप्रहाणं निरोधसाक्षात्करणं मार्गभावनावयुज्यते ॥ सति च दुःखादिसत्यपरिज्ञानादिकफलानि युज्यन्ते ॥ सत्सु च फलेषु फलस्था युज्यन्ते सत्सु च फलस्थेषु प्रतिपन्नका युज्यन्ते सत्सु च प्रतिपन्नफलस्थेषु संघा युज्यन्ते युज्यन्ते ॥ आर्य्यसत्यानाञ्च सद्भावे सति सद्धर्म्मोऽपि युज्यते सति च सद्धर्म्मसंघे च बुद्धोऽपि युज्यते ॥ ततश्च त्रिण्यपि रत्नानि युक्ता लौकिकलोकोत्तराश्च

पदार्थाः सर्व्वविशेषाधिगमा युज्यन्ते ॥ धर्म्माधर्म्मतत्फलं सुगतिदुर्गतिलौकिकाश्च सर्व्वे-संव्यवहारा युज्यन्ते ॥ तदेवं सर्व्वञ्च ते तस्य शून्यता यस्य युज्यते ॥ तस्य तु सर्व्वभावस्वभाव-शून्यता युज्यते ॥ तस्य सर्व्वमेतद्यथोदितं युज्यते संपद्यत इत्यर्थः ॥ तस्य तु शून्यता यथो-दिता न युज्यते तस्य प्रतीत्यसमुत्पादाभावात् । सर्व्वं न युज्यते । यथा च न युज्यते । तथा विस्तरेण प्रतिपादयिष्यति । तदेवमास्माकीने पक्षे सुपरिशुद्धतरसर्व्वव्यवस्था स्वविरुद्धव्यव-स्थितप्रतीत्यधर्म्मानधिगतिविहीनैर्वान्तदृष्टीयकरो निःश्रेयः ॥ सहेतुसत्ययो धर्म्मं जानाति । अहेतुप्रत्यये नास्ति धर्म्मेति भगवद्वचनात् ॥ अतिस्थूलेऽप्यासन्ने तद्विरुद्धे च स्वकीयपक्ष-दोषवति अतिमोघौ यथावदवस्थितौ गुणदोषावपश्यन् सर्वं दोषानात्मीयानस्मासु परि-पातयन् ॥ अश्वमेवाभिरूढः सन्नश्वमेवाभिविस्मारः ॥

यदा हि कश्चिदश्वमेवाश्वमारूढस्तमेव विस्मृतः ।
संस्तरदपहारदोषेण . . . . . परानुपालभते ॥

एवमेव भवान्प्रतीत्यसमुत्पादलक्षणशून्यतादर्शनाश्वारूढ एवात्यन्तविक्षेपात्तमनुपलभमानो-ऽस्मान् परिवदति ॥ ये पुनस्ते परस्य दोषा याननुपालभ्यमानः शून्यतावादिनमेवोपालभत इति तान् प्रतिपादयन्नाह ॥

स्वभावाद् यदि भावानां सद्भावमनुपश्यसि ।
अहेतुप्रत्ययाद् भावात् स्त्वमेवं सति पश्यसि ॥

सति वा हेतुफलत्वाभ्युपगमात् ॥

कार्य्यञ्च कारणञ्चैव कर्त्तारं करणक्रियाम् ।
उत्पादञ्च निरोधञ्च फलञ्च प्रतिबाधसे ॥

कथं कृत्वा यदीह घटं स्वभावतोऽस्तीति परिकल्पयसि ॥ तदास्य स्वभावतो विद्यमानस्य किं मृदादिभिर्हेतुप्रत्ययः प्रयोजनमिति तेषामभावः स्यात् ॥ निर्हेतुकं च कार्य्यं यतो दुःखं नोपपद्यते असति वास्मिंश्चक्रादिकस्य कारणस्य कर्त्तुः कुम्भकारस्य घटकारणक्रियायाश्चाभावा-दुत्पादनिरोधयोरभावः ॥ असतोश्चोत्पादनिरोधयोः कुतः फलमिति सस्वभावाभ्युपगमे सति सर्व्वमेतत् कार्य्यादिकं प्रतिबाधसे तदेवं भवतः सस्वभावाभ्युपगमे सति सर्व्वमेव न युज्यते ॥ अस्माकं तु भावस्वभावशून्यतावादिनां सर्व्वमेतदुपपद्यते ॥ किं कारणं यस्माद्वयम् ॥

यः प्रतीत्यसमुत्पादः शून्यतां तां प्रवक्ष्यते ।
सा प्राप्तिरुपादाय प्रति यत्सैव मध्यमा ॥

योऽयं प्रतीत्यसमुत्पादो हेतुप्रत्ययापेक्ष्य रूपविज्ञानादीनां प्रादुर्भावः सस्वभावेनानुत्पादश्च॥ यश्च स्वभावेनानुत्पादशभावानां सा शून्यता॥

यः प्रत्ययैर्जायति सद्व्यजातो
न तस्य उत्पाद स्वभावतोऽस्ति।
यः प्रत्ययाधीनः स शून्य उक्तो
यः शून्यतां जानाति सोऽप्रमत्त इति॥

तथाचार्य्यलङ्कावतारे॥ स्वभावानुत्पत्तिं सन्धाय महामते सर्व्वधर्म्माः शून्या इति मया दर्शिता इति॥ घृद्धशतिकायां शून्याः सर्व्वधर्म्माः निःस्वभावयोगेनेति॥ याचेयं स्वभावशून्या सा प्रज्ञप्तिरुपादाय सैव शून्यता॥ उपादाय प्रज्ञप्तिरिति व्यवस्थाप्यते॥ चक्रादीन्युपादाय रथाङ्गानि रथः प्रज्ञप्यते॥ तस्य या स्वाङ्गान्युपादाय प्रज्ञप्तिः सा स्वभावेनानुत्पत्तिः परशून्यतास्यैव स्वभावानुत्पत्तिलक्षणा शून्यता मध्यमा प्रतिपदिति व्यवस्थाप्यते॥ यस्य हि स्वभावेनानुत्पत्तिस्तस्यास्तित्वाभावः स्वभावेन वानुत्पन्नस्य विगमाभावो नास्तित्वाभाव इति॥ अतो भावाभावान्तद्वयरहितत्वात्॥ सर्व्वस्वभावानुत्पत्तिलक्षणा शून्यता मध्यमा प्रतिपन्मध्यमा मार्ग इत्युच्यते॥ तदेवं प्रतीत्यसमुत्पादस्यैवेता विशेषसंज्ञाः शून्यतामुपादाय प्रज्ञप्तिमध्यमा प्रतिपदिति विचार्य्यमाणं च सर्व्वथा॥

अप्रतीत्य समुत्पन्नो धर्म्मः कश्चिन्न विद्यते।
यस्मात् तस्मादशून्योऽधिधर्म्मः कश्चिन्न विद्यते॥

योऽप्रतीत्यसमुत्पन्नो धर्म्मः स न संविद्यते॥ तथोक्तं शतके॥

अप्रतीत्यास्तिता नास्ति कदाचित् कस्यचित् क्वचित्।
न कदाचित् क्वचित् कश्चिद्विद्यते तेन शाश्वत इति॥

आकाशादीनि कथ्यन्ते नित्यानीति पृथग्गुणैः।
लौकिकेनापि ते ह्यर्थान पश्यन्ति विचक्षणा इति॥

उक्तश्च भगवता।

प्रतीत्यधर्म्मानधिगच्छते विदु
न वान्तदृष्टी यः करोति निश्चयम्।
स हेतु स प्रत्यय धर्म्म जानति
अहेतुप्रत्यय नास्ति धर्म्मतेति॥

एवम्

> अप्रतीत्य समुत्पन्नो धर्मः कश्चिन्न विद्यते ।
> प्रतीत्यसमुत्पन्नस्य शून्यस्तस्मादशून्यो धर्मो नास्ति ॥

यत एतदेवमतोऽस्माकं सर्व्वधर्म्माश्च शून्या न च परोक्तदोषप्रसङ्गः । भवतस्तु सस्वभाववादिनः ।

> यद्यशून्यमिदं सर्व्वमुदयो नास्ति न व्ययः ।

तदा नियतमुदयव्यययोरभावेनेति ।

> चतूर्णामार्य्यसत्यानामभावस्ते प्रसज्यते ।

किं कारणं स्यात् ।

> अप्रतीत्यसमुत्पन्नं कुतोदुःखं भविष्यति ।
> अनित्यमुक्तं दुःखं हि तत् स्वाभाव्यं न विद्यते ॥

यद्धि स स्वभावं न तत्प्रतीत्योत्पद्यते यच्चाप्रतीत्य न तदनित्यं भवति । न हि गगनकुसुममविद्यमानमनित्यं अनित्यञ्च दुःखमुक्तं भगवता यदनित्यदुःखमिति ॥ तथाच शतकशास्त्रे ॥

> अनित्यस्य ध्रुवायिता (ध्रुवायिता) यस्य न तत्सुखम् ।
> तस्मादनित्यं यत्सर्व्वं दुःखं तदेति यत इति ॥

यच्चानित्यं स्वाभाव्ये स स्वभावत्वेऽभ्युपगम्यमाने भावानां न विद्यत इति ॥ एवं तावत् स्वभावत्वे सति भावानां दुःखं न युज्यते न च केवलं दुःखं एव न युज्यते सति स स्वभावाभ्युपगमे समुदयोऽपि न युज्यत इति प्रतिपादयन्नाह ॥

> स्वभावतो विद्यमानं किं पुनः समुपदिश्यते ।
> तस्मात् समुदयो नास्ति शून्यता प्रतिबाधते ॥

इह समुदयत्यस्माद्दुःखमिति दुःखस्य तु समुदय इत्युच्यते ॥ तदस्य दुःखस्य शून्यताप्रतिबाधयमानस्य सस्वभावं दुःखमभ्युपगच्छतस्तस्य पुनरुत्पादवैयर्थ्यात् तद्धेतुकल्पनावैयर्थ्यमेवेत्येवं शून्यतां प्रतिबाधयमानस्य समुदयोऽपि भगवतो न युज्यते ॥ स्वाभाविकमेव दुःखमभ्युपगच्छतो दुःखनिरोधोऽपि न युज्यत इति प्रतिपादयन्नाह ॥

न निरोधः स्वभावेन सतो दुःखस्य विद्यते।
स्वभावपर्य्यवस्थानान्निरोधं प्रति बाधसे॥

यदि स्वभावतो दुःखं स्यात्तदा स्वभावस्यानपायित्वात् कुतोऽस्य निरोधत्वमिति॥ एवं स्वभावपर्य्यवस्थानात् स्वभावं गृहीत्वा प्रत्यवतिष्ठमानो दुःखनिरोधमपि प्रतिबाधसे॥ इदानीं आर्य्यमार्गोऽपि सस्वभाववादिना यथा नोपपद्यते तथाप्रतिपादयन्नाह॥

स्वभावेनेति मार्गस्य भावना नोपपद्यते।
अथासौ भाव्यते मार्गः स्वाभाव्यन्तु न विद्यते॥

यदि हि स्वभावो भवेयुस्तदा मार्गोऽपि सस्वभाव एवेति कृत्वा अविभावित एवासावस्ति तस्य किं पुनर्भावेनेति एवम्॥

स्वभावेनेति मार्गस्य भावना नोपपद्यते।

अथास्य मार्गस्य भावना अभ्युपगम्यते भवता एवन्तर्हि स्वभावता आर्य्यमार्गस्य न स्यात् कार्य्यत्वादित्यभिप्रायः। अपिच दुःखस्य निरोधप्राप्त्यर्थं समुदयस्य च प्रहाणार्थं भावनामार्गस्य इष्यते॥ पूर्व्वोक्तेन तु न्यायेन सस्वभाववादिनो भवेत्॥

यदा (तु) दुःखं स ज्ञेयो निरोधस्य न विद्यते।
मार्गो दुःखनिरोधत्वात् कतमं प्रापयिष्यति॥

नास्ति वासौ दुःखनिरोधोऽयं निरोधत्वात् मार्गो भावितः संप्रापयिष्यति॥ तस्मादार्य्यमार्गोऽप्येवं नोपपद्यत इति॥ एवं सस्वभावभाववादिनश्चतुर्णामार्य्यसत्यानामभावः प्राप्नोति॥ इदानीं दुःखादिपरिज्ञानादिकमपि यथा परस्परं भवति तथा प्रतिपादयन्नाह॥

स्वभावेनापरिज्ञातं यदि तस्य पुनः कथम्।
परिज्ञातं ननु किल स्वभावः समवस्थितः॥

यदि पूर्व्वदुःखमपरिज्ञातस्वभावं तत्पश्चात् परिज्ञायत इति परिकल्प्यते, तदयुक्तम्॥ किं कारणम्॥ यस्य ननु किल स्वभावः समवस्थितः। योहि स्वभावः स किल लोके समवस्थितो नैवान्यथात्वमापद्यते वह्न्यौष्ण्यवत्। यदा च स्वभावस्यान्यथात्वं नास्ति तदा पूर्व्वमपरिज्ञातस्वभावस्य दुःखस्य पश्चादपि परिज्ञानेनोपपद्यत इति॥ अतो दुःखपरिज्ञानं न सम्भवति। यदा चैतद्दुःखपरिज्ञानमपि न सम्भवति॥ तदा

प्रहाणसाक्षात्करणे भावना चैवमेव ते।
परिज्ञावन्न युज्यन्ते चत्वार्य्यपि फलानि च॥

यदेतत् समुदयस्य प्रहाणं निरोधस्य च साक्षात्करणं तदेतद्दुःखप्रहाणसाक्षात्करणे या च मार्गस्य भावना एतापि एवमेतद्दुःखपरिज्ञानासम्भवान्नयुज्यते॥ समुदयस्य स्वभावेनाप्रहीणस्य स्वभावस्यानपायित्वात् पश्चादपि प्रहाणं नोपपद्यते। एवं भावना साक्षात्करणेऽपि योज्यम्। न च केवलं परिज्ञानादिकमेव न सम्भवति सस्वभाववादे॥ अपिच॥

परिज्ञावन्न युज्यन्ते चत्वार्य्यपि फलानि च।

यथा स्वभावेनापरिज्ञातस्य दुःखस्य परिज्ञानं न युक्तमेवं स्वभावेनाविद्यमानस्य पूर्व्वं स्रोत-आपत्ति-फलस्य पश्चादस्तित्वं न सम्भवति यथा स्रोत-आपत्ति-फलस्य॥ एवं सकृदागाम्य-नागाम्यर्हत्वफलानामभावो वेदितव्यः॥ न च केवलमेतानि फलानि परिज्ञावन्नयुज्यन्ते किं तर्हि अधिगमोऽप्येष न युज्यत इति प्रतिपादयन्नाह॥

स्वभावेनानधिगतं यत्फलं तत्पुनः कथम्।
शक्यं समधिगन्तुं स्यात् स्वभावं परिगृह्णतः॥

स्वभावःस्याद्बीजहेतुप्रकृतिकत्वाद्भावस्वभाववादमभ्युपगच्छतः पूर्व्वमधिगतस्वभावानां पश्चादप्यधिगमो नोपपद्यते॥ ततश्च,–

फलाभावे फलस्थाना न सन्ति प्रतिपन्नकाः।
संघो नास्ति न चेत् सन्ति ते ऽष्टौ पुरुषपुङ्गलाः॥
अभावाच्चार्य्यसत्यानां सद्धर्म्मोऽपि न विद्यते।
धर्म्मे वा सति संघे च कथं बुद्धो भविष्यति॥

अनयोश्च श्लोकयोः पूर्व्ववदेवार्थो वेदितव्यः। अपिच सस्वभावाभ्युपगमे सति।

अप्रतीत्यापि बोधिं न तव (बोधिः) प्रसज्यते।
अप्रतीत्यापि बुद्धं च तव बोधिः प्रसज्यते॥

यदि हि स्वभावतो बुद्धोनाम कश्चिद्भावः स्यात् स बोधिं सर्व्वज्ञज्ञानमप्रतीत्यापि अनपेक्षोपि स्यात्॥ अकृत्रिमः स्वभावो हि निरपेक्षः पर एवेति वचनात्। तथा विनापि बुद्धेन बोधिः स्यादनपेक्षोपि बुद्धो निराश्रयो बोधिः स्यात् स्वभावविद्यमानत्वात् किं वाच्यत्॥

यश्चाबुद्धः स्वभावेन स बोधाय घटन्नपि।
न बोधिसत्त्वचर्य्यायां बोधिस्तेऽधिगमिष्यति॥

इह हि बुद्धत्वात् पूर्व्वमेव बुद्धस्वभावस्य पुद्गलस्य सत्यामपि बोधिसत्त्वचर्य्यायां बोध्यर्थं घटमानस्यापि नैव बोधिः स्यात्। अबुद्धस्वभावस्य व्यावर्त्तहेतुमशक्यत्वात् किं चान्यत्।

न च धर्म्ममधर्म्मं वा कश्चिज्जातु करिष्यति।
किमशून्यस्य कर्त्तव्यं स्वभावः क्रियते न हि॥

सति हि स्वभाववादाभ्युपगमधर्म्माधर्म्मयोः करणं नोपपद्यते॥ किं ह्यशून्यस्य कर्त्तव्यं न हि स्वभावस्याशून्यस्य करणमुपपद्यते विद्यमानत्वात् किं चान्यत्॥

विना धर्म्ममधर्म्मञ्च फलं हि तव विद्यते।
धर्म्माधर्म्मनिमित्तञ्च फलं तव न विद्यते॥

यद्येतद्धर्म्माधर्म्मनिमित्तकमिष्टानिष्टफलं हि तत्स्वभावतोऽस्ति तद्विनापि धर्म्माधर्म्माभ्यां स्यात्। यदा च विना धर्म्माधर्म्मं च फलं तवास्ति तदा धर्म्माधर्म्मजं फलं तव न सम्भवति॥ धर्म्माधर्म्मयोः पुनर्वैयर्थ्यं स्यात्॥ धर्म्माधर्म्मनिमित्तञ्च फलं तव न विद्यत इत्याह॥ अथ धर्म्माधर्म्मनिमित्तकं फलं भवतीति परिकल्प्यते न तर्हि तत्फलमशून्यमिति प्रतिपादयन्नाह॥

धर्म्माधर्म्मनिमित्तं वा यदि तद्विद्यते फलम्।
धर्म्माधर्म्मसमुत्पन्नमशून्यन्तत्कथं फलम्॥

शून्यमेवैतत् प्रतीत्यसमुत्पन्नत्वात् प्रतिबिम्बवदित्यभिप्रायः॥ अपि च सर्व्व एव ह्येते गच्छ कुरुष्व च वयं तिष्ठत्येवमादयो लौकिका व्यवहाराः॥ प्रतीत्यसमुत्पन्नांस्तानादि सस्वभावानिच्छति भवान्॥ तदा भवता प्रतीत्यसमुत्पादो बोधिसत्त्वो भवति। तद्बोधनाच्च सर्व्व एव लौकिका व्यवहारा बोधिसत्त्वा भवन्तीति प्रतिपादयन्नाह॥

सर्व्वसंव्यवहारांश्च लौकिकान् प्रतिबाधसे।
यत्प्रतीत्यसमुत्पादं शून्यतां प्रतिबाधसे॥

यच्छब्दः क्रियाविशेषणं यद्बाधस इति॥ अनेन स बध्यते किं चान्यत्।

न कर्त्तव्यं भवेत् किञ्चिदनारब्धा भवेत् क्रिया ।
कारकः स्यादकुर्व्वाणः शून्यतां प्रतिबाधते ॥

यदि हि स्वरूपशून्याः पदार्थाः न भवेयुः स स्वत एव भवेयुः । तदा स्वभावस्य विद्यमानत्वान्न केनचित् कस्यचित् किञ्चित् कर्त्तव्यं स्यात् । नहि नभसोऽनावरणत्वं केनचित् क्रियते अक्रियमाणाच्च क्रिया स्यात् । क्रियां वा कुर्व्वाणस्य कारकत्वं स्यात् । न चैतदेवमिति ॥ तस्मान्नाशून्याः पदार्थाः किं चान्यत् ॥

अजातमनिरुद्धञ्च कूटस्थञ्च भविष्यति ।
विचित्राभिरवस्थाभिः स्वभावरचितं (हि तत्) ॥

स्वभावेनैव रचितमप्रतीत्यसमुत्पन्नं जगत् स्वभावशून्यवादिनां स्यात् ॥ यथोक्तं पितापुत्रसमागमसूत्रे ॥ स्याद्यदि किंचिदशून्यं नचेदर्जिनु तस्य व्याकरणं तथा हि स्थितं तत् स्वकस्वकभावे कूटस्थमविकारं न तस्य वृद्धिर्नपरिहानिरिति ॥ तथार्य्यह्यास्तिकसूत्रे ॥ यदि कश्चिद्धर्म्मो न भवेत् स्वभावस्तत्रैव गच्छेय जिनः स श्रावकः कूटस्थः । धर्म्मानिर्मियाननिर्वृतीनभिष्पपञ्चो भविता तु पण्डित इति ॥ न च केवलं सस्वभाववादाभ्युपगमलौकिका एव व्यवहारा नोपपद्यन्ते ॥ अपि च लोकोत्तरा एव व्यवहारा नोपपद्यन्त इति प्रतिपादयन्नाह ॥

असंप्राप्तस्य च प्राप्तिर्दुःखपर्य्यन्तकर्म्म च ।
सर्व्वक्लेशप्रहाणञ्च यद्यशून्यं न विद्यते ॥

यदि ह्यशून्यं सस्वभावं सर्व्वमेतत् स्यात्तदा यदसंप्राप्तं तदसंप्राप्तमेवेति असंप्राप्तस्य च फलस्य प्राप्तिर्न स्यात् ॥ तदा दुःखपर्य्यन्तकरणञ्च पूर्व्वणाभूदिति साम्प्रतमपि न स्यात् सर्व्वेषाञ्च क्लेशानां पूर्व्वप्रहाणं नाभूदिति पश्चादपि प्रहाणं न स्यात् । तदेवं यस्मात् सस्वभाववादाभ्युपगमे सति सर्व्वमेतन्न युज्यते ॥ अतः—

यः प्रतीत्यसमुत्पादं पश्यतीदं स पश्यति ।
दुःखं समुदयञ्चैव निरोधं मार्गमेव च ॥

यो हि सर्व्वधर्म्मप्रतीत्यसमुत्पादलक्षणां स्वभावशून्यतां सम्यक् पश्यति स चत्वार्य्यार्य्यसत्यानि पश्यति यथाभूतानि तत्त्वतः । यथोक्तमार्य्यमञ्जुश्रीपरिपृच्छायां ॥ येन मञ्जुश्रीरनुत्पादसर्व्वधर्म्माणां दृष्टस्तेन दुःखं परिज्ञातम् ॥ येन नास्तिता सर्व्वधर्म्माणां दृष्टा तस्य

समुदयः प्रहीणः येनात्यन्तपरिनिर्वृत्ताः सर्व्वधर्म्मा दृष्टास्तेन निरोधः साक्षात् कृतः ॥ येन मञ्जुश्रीरभावः सर्व्वधर्म्माणां दृष्टस्तेन मार्गो भावित इति विस्तरः ॥ उक्तञ्चार्य्यध्यायित मुष्टिसूत्रे ॥

अथ खलु भगवान् मञ्जुश्रियं कुमारभूतमेतदवोचत् ॥ चतुर्णां मञ्जुश्रीरार्य्यसत्यानां यथाभूतादर्शनात् चतुर्भिर्विपर्य्यासैर्विपर्य्यस्तचित्ताः सत्त्वा एवमिमं भूतं संसारं नातिक्रामन्ति ॥ एवं मञ्जुश्रीकुमारभूतो भगवन्तमेतदवोचत् । देशयतु भगवान् कस्योपालम्भतः सत्त्वाः संसारं नातिक्रामन्ति ॥ भगवानाह ॥ आत्मा आत्मीयोपालम्भतो मञ्जुश्रीः सत्त्वाः संसारं नातिक्रामन्ति ॥ तत्कस्य हेतोर्यो हि मञ्जुश्रीरात्मानं परं च समनुपश्यति तस्य कर्म्माभिसंस्कारा भवन्ति । बालो मञ्जुश्रीरश्रुतवान् पृथक्त्वेनात्यन्तपरिनिर्वृतः सर्व्वधर्म्मा न प्रजायमान आत्मानं परं चोपलभते उपलभ्य विनिवेश्यते ॥ अभिनिविष्टः सन् रज्यते दुष्यते मुह्यते सरक्तो दुष्टो मूढः संत्रिविधं कर्म्माभिसंस्कारातिकायेन वाचा मनसा ॥ सोऽसत्संसारो येन विकल्पयति अहं रक्तोऽहं दुष्टोऽहं मूढ इति ॥ तस्य तथागतशासनप्रव्रजितस्यैवं भवति ॥ अहं शीलवानहं ब्रह्मचारी अहं संसारं समतिक्रमिष्यामि ॥ अहं निर्व्वाणमनुप्राप्स्यामि ॥ अहं दुःखेभ्यो मोक्ष्यामि सकल्पमतीतधर्म्माः कुशला इमे धर्म्मा अकुशला इति ॥ इमे धर्म्माः प्रहातव्या इमे धर्म्माः साक्षात् कर्त्तव्याः ॥ दुःखं परिज्ञातव्यं समुदयः प्रहातव्यो निरोधः साक्षात् कर्त्तव्यो मार्गो भावयितव्यः संकल्पयति ॥ अनित्याः सर्व्वसंस्कारा आदीप्ताः सर्व्वसंस्काराः ॥ योऽन्वहं सर्व्वसंस्कारेभ्यः परापेयं तस्यैवमवेक्षमानस्योत्पद्यते निर्व्विद्सहगतो मनसिकारः । अनिमित्तपुरोगतस्तस्यैव भवति ॥ एषा सा दुःखपरिज्ञा येयमेषां धर्म्माणां परिज्ञा तस्यैव भवति ॥ योऽन्वहं समुदयं प्रजहेयम् । स सर्व्वधर्म्मेभ्य आर्त्तीयते उज्जीयते वितरति विजुगुप्सते उत्त्रस्यति संत्रस्यति संत्रासमापद्यते ॥ तस्यैवं भवति ॥ इयमेषां धर्म्माणां साक्षात्क्रिया ॥ इदं समुदायप्रहाणं यदिदमेभ्यो धर्म्मेभ्योऽर्त्तीयना ॥ तस्यैवं भवति निरोधः साक्षात् कर्त्तव्यः ॥ स दयं कल्पयित्वा निरोधं संजानाति ॥ तस्यैवं भवति ॥ एषा निरोधसाक्षात्क्रिया ॥ तस्यैवं भवति ॥ यन्नूनमहं मार्गं भावयेयम् ॥ स एष रहोगतस्तान् धर्म्मान् मनसिकुर्व्वन् समथं प्रतिलभते ॥ तस्य तेन निर्व्विद्सहगतेन मनसिकारेण समथं उत्पद्यते ॥ तस्य सर्व्वधर्म्मेषु चित्तं न प्रलीयते प्रतिवदति प्रत्युदावर्त्तते ॥ ततस्मार्त्तीयते उज्जीयते अनभिनन्दनाचित्तं समुत्पद्यते । तस्यैवं भवति मुक्तोऽस्मि सर्व्वदुःखेभ्यो न स भूय उत्तरी किञ्चित्करणीयमर्हन्नास्मीति आत्मानं स जानाति ॥ स मरणकालसमये उत्पत्तिमात्मनो देवेषु पश्यति ॥ तस्य काङ्क्षा विचिकित्सा च भवति ॥ बुद्धबोधौ चिकित्सा पतितः कालगतो महानिरयेषु प्रपतति तत्कस्य हेतोः ॥ यथापीदमनुत्पन्नान् सर्व्वधर्म्मान् विकल्पयित्वा तथागतविचित्सां विमतिमुत्पादयति ॥

अथ खलु मञ्जुश्रीः कुमारो भगवन्तमेतदवोचत् कथं पुनर्भगवन् चत्वार्य्यार्य्यसत्यानि द्रष्टव्यानि ॥ भगवानाह । येन मञ्जुश्रीरनुत्पन्नाः सर्व्वधर्म्मा दृष्टास्तेन दुःखं परिज्ञातम् ॥ येन समुत्थितः सर्व्वधर्म्मा दृष्टास्तस्य समुदयः प्रहीणः । येनात्यन्तपरिनिर्वृताः सर्व्वधर्म्मा-

दृष्टास्तेन निरोधः साक्षात्कृतः ॥ येनात्यन्तशून्याः सर्व्वधर्म्मा दृष्टास्तेन मार्गो भावितः ॥ येन मञ्जुश्रीरेवं चत्वार्य्यार्य्यसत्यानि दृष्टानि स न कल्पयति ॥ इमे धर्म्माः कुशलाः इमे धर्म्माः प्रहातव्या इमे धर्म्माः साक्षात्कर्त्तव्याः दुःखं परिज्ञातं समुदयः प्रहातव्यो निरोधः साक्षात्कर्त्तव्यो मार्गो भावयितव्य इति ॥ तथा हि स न धर्म्मं न समनुपश्यति नोपलभते । यः परिकल्प्यो वालपृथग्जनास्त्वेतान् धर्म्मान् कल्पयन्तो रज्यन्ति च मुह्यन्ति च । स न कञ्चिद्धर्म्ममायूहति निर्यूहति ॥ तस्यैवमनायुहतोऽनिर्यूहतः त्रैधातुकचित्तं न सज्जति ॥ अजातं सर्व्वत्रैधातुकं समनुपश्यति मायोपमं स्वप्नोपमं प्रतिश्रुत्कोपमम् ॥ एवं स्वभावान् सर्व्वधर्म्मान् पश्यन् अनुनेयप्रतिघायगतो भवति ॥ सर्व्वसत्त्वेषु तत्कस्य हेतोस्तथा हि स तान् धर्म्मान् नोपलभते ॥ यत्रानुनीयेत वा प्रतिहन्येत वा ॥ स आकाशं समनुचित्तं न बुद्धमपि न समनुपश्यति धर्म्ममपि न समनुपश्यति संघमपि न समनुपश्यति । सर्व्वधर्म्मान् शून्यानिति समनुपश्यन् लब्धचित्तधर्म्मविचिकित्सामुत्पादयति ॥ अविचिकित्सन् निरुपादानो भवति निरुपादानोऽनुपादाय परिनिर्व्वातीति विस्तरः ॥

इत्याचार्य्यचन्द्रकीर्त्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
आर्य्यसत्यपरीक्षा नाम चतुर्व्विंशतितमं प्रकरणम् ।

---

अत्राह ॥

यदि शून्यमिदं सर्व्वमुदयो नास्ति नव्ययः ।
प्रहाणाद्वा निरोधाद्वा कस्य निर्व्वाणमिष्यते ॥

इह हि भगवता उषितब्रह्मचर्य्याणां तथागतशासनप्रतिपन्नानां धर्म्मानुधर्म्मप्रतिपत्तियुक्तानां पुद्गलानां विविधं निर्व्वाणमुपवर्णितं सोपधिशेषं निरुपधिशेषं च ॥ तत्र निरवशेषस्याविद्यारागादिकस्य क्लेशगणस्य प्रहाणात् सोपधिशेषं निर्व्वाणमिष्यते ॥ तत्रोपधीयतेऽस्मिन्नात्मस्नेह इत्युपधिः ॥ उपधिशब्देनात्मप्रज्ञप्तिनिमित्ताः पञ्चोपदानस्कन्धा उच्यन्ते ॥ शिष्यत इति शेषः ॥ उपधिरेवशेष उपधिशेषः सह उपधिशेषेण वर्त्तत इति सोपधिशेषः किं तन्निर्व्वाणम् ॥ तच्च स्कन्धमात्रकमेव केवलं सत्कायदृष्ट्यादिक्लेशतस्कररहितमवशिष्यते ॥ निहताशेषचौरगणग्राममात्रावस्थानसाधर्म्म्येण तस्योपधिशेषं निर्व्वाणं यत्र तु निर्व्वाणे स्कन्धमात्रकमपि नास्ति तन्निरुपधिशेषं निर्व्वाणं निर्गत उपधिशेषोऽस्मिन्निति कृत्वा निहताचौरगणस्य ग्राममात्रस्यापि विनाशसाधर्म्म्येण ॥ तदेववोधिकृत्योच्यते ॥ अभेदिकाया निरोधिसंवेदनापर्य्यैरहितेषु सम्बोधिमसमासस्कराणां विज्ञानसामसदिति ॥ यथा

असंलीनेन कायेन वेदनामधिवासयेत्।
प्रद्योतस्येव निर्वाणं विमोक्षस्तस्य चेतस इति ॥

तदेवं निरुपधिशेषनिर्वाणं स्कन्धानां निरोधाल्लभ्यते ॥ एतच्च द्विविधं निर्वाणं कथं युज्यते ॥ यदि क्लेशानां स्कन्धानां च निरोधो भवति। यदा तु सर्वमिदं शून्यं नैव किञ्चि-दुत्पद्यते नापि किञ्चिन्निरुध्यते ॥ तदा कुतः क्लेशाः कुतो वा स्कन्धा येषां निरोधे निर्वाणं स्यादिति तस्माद्विद्यत एव भावानां स्वभाव इति ॥

अत्रोच्यते ॥ नन्वेवमपि सस्वभावभावाभ्युपगमे—

यद्यशून्यमिदं सर्वमुदयो नास्ति न व्ययः।
प्रहाणाद्वा निरोधाद्वा कस्य निर्वाणमिष्यते ॥

स्वभावेन हि व्यवस्थितानां क्लेशानां स्कन्धानां च स्वभावस्यानपायित्वात् कुतो निवृत्ति-र्यतस्तन्निवृत्त्या निर्वाणं स्यादिति ॥ तस्मात् स्वभाववादीनां नैव निर्वाणमुपपद्यते न च शून्यतावादिनः ॥ क्लेशनिवृत्तिलक्षणं वा निर्वाणं सिद्धमिति यतस्तेषामयं दोषः स्यादिति ॥ अतोऽनुपलम्भ एवायं शून्यतावादिनां। यदि खलु शून्यतावादिनः क्लेशानां स्कन्धानां वा निवृत्तिलक्षणं निर्वाणं नेच्छन्ति किं लक्षणं तदिच्छन्ति ॥ उच्यते ॥

अप्रहीणमसंप्राप्तमनुच्छिन्नमशाश्वतम्।
अनिरुद्धमनुत्पन्नमेवं निर्वाणमुच्यते ॥

यद्धि नैव प्रहीयते रागादिवत् नापि प्राप्यते श्रामण्यफलवत् नाप्युच्छिद्यते स्कन्धादिवत् यच्चापि न नित्यमशून्यवत् ॥ तत्स्वभावतो निरुद्धमनुत्पन्नं च सर्वप्रपञ्चोपशमलक्षणं निर्वाणमुक्तं तत् कुतस्तस्मिन्नित्थं विधिनिष्प्रपञ्चक्लेशकल्पना येषां क्लेशानां प्रहाणाधिगमो लक्षणनिर्वाणमुक्तम्। सर्वप्रपञ्चपरिक्षयादेव त अधिगमात् ॥ अथ स्याद् यद्यपि निर्वाणं, न सन्ति क्लेशा न चापि स्कन्धा तथापि निर्वाणाद्‌र्वाग्विद्यते ॥ ततस्तेषां परिक्षयो निर्वाणं भविष्यतीत्युच्यते ॥ त्यज्यतामयं ग्राहो यस्मान्निर्वाक् स्वभावतो विद्यमानानां न पुनरभावः शक्यते कर्त्तुम् ॥ तस्मान्निर्वाणाभिलाषिणां त्याज्यैषां कल्पना वक्ष्यति हि ॥

निर्वाणस्य च या कोटिः कोटिःसंसरणस्य च।
विद्यादन्तरं किञ्चित् सुसूक्ष्मं विद्यत इति ॥

तदेवं निर्वाणेन कस्यचित् प्रहाणं नापि कस्यचिन्निरोध इति विज्ञेयम् ॥ ततश्च निरवशेषकल्पनाक्षयरूपमेव निर्वाणमुक्तं भगवता ॥

निवृत्तिधर्म्मा न न अस्ति धर्म्मा
येनेह नास्ति न ते जातु अस्ति।
अस्तीति नास्तीति कल्पना च
तामेव चरन्तो नन दुःखं शाम्यतीति॥

अस्या गाथाया अयमर्थः। निर्व्वृतौ निरुपधिशेषे निर्व्वाणधातौ धर्म्माणां क्लेशकर्म्मजन्मलक्षणानां स्कन्धानां वा सर्व्वथासंगमादस्तित्वं नास्ति एव च सर्व्वाद्दीनामभिमतम्॥ ये तर्हि धर्म्मा इह निर्वृतौ न सन्ति प्रद्दीपादपादन्धकारोपलब्धरक्तसर्व्वभयादिवन्न ते जातु॥ सन्ति न ते धर्म्माः क्लेशकर्म्मजन्मादिलक्षणाः कस्मिंश्चित्काले संसारावस्थायामपि तत्त्वतो विद्यन्ते॥ नहि नक्तमन्धकारावस्थायां स्वरूपतः सर्पोऽस्ति॥ सम्भूतसर्पवदन्धकारेऽप्या लोकेऽपि कायचक्षुर्भ्यामग्रहणात् कथं तर्हि संसार इति चेदुच्यते॥ आत्मात्मीया सग्रहग्रस्तानां बालपृथग्जनानां असत्स्वरूपा अपि भावात्। सत्यतः प्रतिभासन्तिमिरिकानामिवासत्क्लेशमशकादय इत्याह॥ अस्तीति नास्तीति कल्पना च तामेवं चरन्तो न दुःखं शाम्यतीति अस्तीति भावसद्भावकल्पना च तां जैमिनिकाणादकापिलादीनां वैभाषिकपर्य्यन्तानां नास्तीति कल्पना च तां नास्तिकानामपायगतिनिम्नानां तदन्येषां वातीतानागतसंस्कानां विज्ञप्तिविप्रयुक्तसंस्कारे नास्तिवादिनां तदन्यदस्तिवादिनां कल्पितस्वभावस्य नास्तिवादिनां परतन्त्रपरिनिष्पन्नस्वभावयोरस्तिवादिनामेवमस्ति नास्तिवादिनामेवं चरतां न दुःखं संसारः शाम्यतीति॥ तथा यथा शङ्कितेन विषसंज्ञातामभ्युपैति॥

नो वापि काष्ठगन्तु साविष्टोपपद्यते।
एवमेवानुपगता अङ्गसंज्ञा एषा॥

संज्ञायजापि क्रियते सदा अभूता इति तदेवं न कस्यचिन्निर्व्वाणे प्रहाणं नापि कस्यचिन्निरोध इति विज्ञेयम्॥ ततश्च सर्व्वकल्पनाक्षयरूपमेव निर्व्वाणम्॥ यथोक्तमार्य्यरत्नावल्याम्॥

न चाभावोऽपि निर्व्वाणं कुत एवास्य भावना।
भावाभावपरामर्शक्षयो निर्व्वाणमुच्यत इति॥

ये तु सर्व्वकल्पनोपशमरूपं निर्व्वाणमप्रतिपद्यमानाभावाभावे तदुभयानुभयरूपं निर्व्वाण परिकल्पयन्ति तान्युच्यन्ते॥

भावस्तावन्न निर्व्वाणं जरामरणलक्षणम्।
प्रसज्यतास्ति भावो हि न जरामरणं विना॥

तत्रैकभावता निर्व्वाणमभिनिविष्टा एवमाचक्षते ॥ इह क्लेशकर्म्मजन्मसन्तानप्रवृत्ति- नियतरोधभूतः स तु स्थानीयानिरोधात्मकः पदार्थस्तन्निर्व्वाणं न चाविद्यमानस्वभावो धर्म्मो एवाकार्य्यकारी दृश्यते ॥ ननु च योऽस्य नन्दी रागसहगतायास्तृष्णायाः क्षयो विरागो निरोधो निर्व्वाणमित्युक्तम् । नापक्षयमात्रं भावे भवितुमर्हति तथा प्रद्योतस्य निर्व्वाण- विमोक्षस्तस्य चेतस इत्युक्तम् ॥ न च प्रद्योतस्य निवृत्तिभाव इत्युपपद्यत उच्यते ॥ न चेदेवं विज्ञेयम् ॥ तृष्णायाः क्षयस्तृष्णाक्षय इति किं तर्हि तृष्णायाः क्षयेऽस्मिन्निति निर्व्वाणस्य धर्म्मे सति भवति ॥ स तृष्णाक्षय इति वक्तव्यम् ॥ प्रदीपस्य निर्व्वाणमात्रं तत्रापि यस्मिन् सति चेतः स्याद्विमोक्षो भवतीति वेदितव्यमिति । एवं भावे निर्व्वाणे व्यवस्थापिता आचार्य्या निरूपयन्ति भावस्तावन्न निर्व्वाणं किं कारणं यस्माज्जरामरणलक्षणं प्रसज्यते भावस्य जरामरणलक्षणाव्यभिचारित्वात् ॥ ततश्च निर्व्वाणमेव तन्न स्यात् ॥ जरामरण- लक्षणत्वाद्विज्ञानादिवदित्यभिप्रायः ॥ तामेव च जरामरणलक्षणव्यभिचारितां स्पष्टयन्नाह ॥

अस्ति भावोहि न जरामरणंविनेति ॥

यो हि जरामरणरहितः स भाव एव न संभवति खपुष्पवज्जरामरणरहितत्वात् । किञ्चान्यत् ॥

भावस्य यदि निर्व्वाणं निर्व्वाणं संस्कृतं भवेत् ।
नासंस्कृतो हि विद्येत भावः क्व च न कश्चन ॥

यदि निर्व्वाणं भावः स्यात् तदा तन्निर्व्वाणं संस्कृतं भवेद्विज्ञानादिवद्भावित्वात् ॥ यस्त्व- संस्कृतोऽसौ भावः । तद्यथा खरविषाणवदिति व्यतिरेकमुपदर्शयन्नाह ॥ नासंस्कृतो हि विद्यते भावः क्व च नेत्यधिकरणे दशेकारे सिद्धान्ते वा कश्चनेत्याध्येय आध्यात्मिको वाह्यात्मिको वाह्यो वेत्यर्थः ॥ किञ्चान्यत् ॥

भावस्य यदिनिर्व्वणमनुपादाय तत्कथम् ।
निर्व्वाणं नानुपादाय कश्चिद्भावो हि विद्यते ॥

यदि भवन्मतेन निर्व्वाणं भावः स्यात् तदुपादाय भवेत् स्वकारणसामग्रीमाश्रित्य भवे- दित्यर्थः । न चैवमुपादाय निर्ब्बाणमिष्यते किं तर्ह्युपादाय ॥ तद्यदि भावो निर्व्वाण- मनुपादाय तत्कथं निर्व्वाणं स्यात् नैवानुपादाय स्यात् भावत्वाविज्ञानादिवत् ॥ व्यति- रेककारणमाह ॥ नानुपादाय कश्चिद्भावो हि विद्यत इति ॥

अत्राह ॥ यदि भावो हि निर्व्वाणं यथोदितदोषप्रसङ्गात् ॥ किन्तर्ह्यभाव एव निर्व्वाणं क्लेशजन्मनिर्वृत्तिमात्रत्वादित्युच्यते ॥ एतदप्ययुक्तं यस्मात्, —

यदि भावो न निर्व्वाणमभावः किं भविष्यति।
निर्व्वाणं यत्र भावो न नाभावस्तत्र विद्यते॥

यदि भावो निर्व्वाणं नेष्यते यदि निर्व्वाणं भाव इति नेष्यते तदा किमभावो भविष्यति निर्व्वाणम्॥ अभावोऽपि न भविष्यतीत्यभिप्रायः॥ क्लेशजन्मनोरभावो निर्व्वाणमिति चेदेवं तर्हि क्लेशजन्मनोरनित्यता निर्व्वाणमिति स्यात्॥ अनित्यतैव हि क्लेशजन्मनोरभावो नान्यदित्यतोऽनित्यतैव निर्व्वाणं स्यात् न चैतदिष्टम्॥ अयत्नेनैव मोक्षप्रसङ्गादित्ययुक्तमेवैतत्॥ किञ्चान्यत्॥

यद्यभावश्च निर्व्वाणमनुपादाय तत्कथम्।
निर्व्वाणं न ह्यभावोऽस्ति यानुपादाय विद्यते॥

तत्राभावोऽनित्यताभावं वोपादाय प्रज्ञप्यते खरविषाणादीनामनित्यतानुपलम्भात् लक्षणमाश्रित्य लक्ष्यं प्रज्ञप्यते लक्ष्यमाश्रित्य च लक्षणम्॥ अतः परस्परोपपत्तिभ्यां लक्ष्यलक्षणप्रवृत्तौ कुतो लक्ष्यं भावमनपेक्ष्य नित्यता भविष्यति॥ तस्मादभावोऽप्युपादाय प्रज्ञप्यते। ततो यद्यभावश्च निर्व्वाणं तत्कथमनुपादाय निर्व्वाणं भवेदुपादायैव तद्भवेत् अभावाद्भिनाशवत्॥ एतदेव स्पष्टयन्नाह॥ नह्यभावोऽस्ति योऽनुपादाय विद्यत इति॥ यदि तर्ह्यभावोऽनुपादाय नास्ति किमिदानीमुपादाय वन्ध्यापुत्रादयोऽभावा भविष्यन्ति॥ केनैतदुक्तं वन्ध्यापुत्रादयोऽभावा इति॥ उक्तं हि —

पूर्व्वं भावस्य चेदप्रसिद्धिरभावो नैव सिध्यति।
भावस्य ह्यन्यथाभावमभावं ब्रुवते जना इति॥

तस्मान्न वन्ध्यापुत्रादीनामभावं अत्राप्युच्यते॥

आकाशं शशशृङ्गञ्च वन्ध्यायाः पुत्र एव च।
असन्तश्चाभिरज्यन्ते तथा भावेषु कल्पना इति॥

तत्रापि भावकल्पनाप्रतिषेधमात्रं नाभावकल्पना भावत्वासिद्धेरेवेति विज्ञेयम्॥ वन्ध्यापुत्र इति शब्दमात्रमेवैतन्नाप्यर्थं उपलभ्यते॥ यस्यार्थस्य भावत्वमभावत्वं च स्यादिति कुतोऽनुपलभ्यमानस्वभावस्य भावाभावकल्पना योज्यते॥ तस्मान्न वन्ध्यापुत्रभाव इति विज्ञेयम्॥ ततश्च स्थितमेव न ह्यभावोऽस्ति योऽनुपादाय विद्यात उति॥

अत्राह॥ यदि भावो निर्व्वाणं न भवति अभावोपि किं तर्हि निर्व्वाणमित्युच्यते॥ इह हि भगवद्भिस्तथागतैर्य आजवं जवीभावमुपादाय प्रतीत्य वा सोऽप्रतीत्यानुपादाय

निर्व्वाणमुपदिश्यते। तत्राजवं जवीभाव आगमनगमनभावजन्ममरणपरम्परेत्यर्थः॥ स खायं आजवं जवीभावः कदाचिद्धेतुप्रत्ययसामग्रीमाश्रित्यास्तीति प्रज्ञाप्यते॥ न दीर्घ-ह्रस्ववत्॥ कदाचिदुत्पद्यत इति प्रज्ञाप्यते प्रदीपप्रभावत् वीजाङ्कुरवत्॥ सर्व्वथा यद्ययमुपादाय प्रज्ञाप्यते यदि वा प्रतीत्य जायत इति व्यवस्थाप्यते॥ सर्व्वथास्य जन्म-मरणपरं। पराप्रबन्धस्याप्रतीत्य वानुपादाय वा याऽप्रवृत्तिस्तन्निर्व्वाणमिति व्यवस्थाप्यते॥ न चाप्रवृत्तिमात्रं भावाभावेति परिकल्पितुं पार्यत इति॥ एवं न भावनाभावनिर्व्वाणम्॥ अथवा येषां संस्काराः संसरन्तीति पक्षस्तेषां प्रतीत्य य उत्पादश्च विनाशश्च सोऽप्रतीत्य प्रवर्त्तमानो निर्व्वाणमिति कथ्यते॥ येषां तु पुद्गलः संसरति तेषां तस्य नित्यानित्यत्वे-नावाच्यतत्तदुपादानमाश्रित्य य आजवं जवीभावः स उपादाय प्रवर्त्तते॥ स एवोपादायो-पादाय प्रवर्त्तमानः सन्निदानीमनुपादाय प्रवर्त्तमानो निर्व्वाणमिति व्यपदिश्यते॥ न च संस्काराणां पुद्गलस्य वा प्रवृत्तिमात्रकं भावोऽभावो व्यतिशक्यं परिकल्पयितुमित्यतोऽपि न भावो नाभावो निर्व्वाणमिति युज्यते॥ किञ्चान्यत्॥

प्रमाणं वा प्रवीच्छास्ता भवस्य विभवस्य च।
तस्मान्न भावो नाभावो निर्व्वाणमिति युज्यते॥

तत्र सूत्र उक्तम्॥ ये केचिद्भिक्षवो भवेन भवस्य निःसरणं पर्य्येषन्ते विभवेन वा परि-ज्ञानं तत्तेषामिति॥ उभयं ह्येतत् परित्याज्यं भवेत् तृष्णा विभवे तृष्णा च न चैतन्निर्व्वाणं प्रहातव्यम्॥ उक्तं भगवता किं तर्ह्यप्रहातव्यम्। तद्यदि निर्व्वाणं भावरूपं स्यादभावरूपं वा तदपि प्रहातव्यं भवत्येव च प्रहातव्यम्॥ तस्मान्न भावो नाभावो निर्व्वाणमिति युज्यते॥ येषामपि क्लेशजन्मनोस्तत्राभावादभावरूपं निर्व्वाणं स्वयं च भावरूपत्वाद्भावरूपमित्युभयरूपं येषामुभयरूपमिति निर्व्वाणं नोपपद्यत इति प्रतिपादयन्नाह॥

भवेद्भावो ऽभावश्च निर्व्वाणमुभयं यदि।
भवेदभावो भावश्च मोक्षस्तच्च न युज्यते॥

यदि भावाभावोभयरूपं निर्व्वाणं स्यात् तदा भावस्याभावश्च मोक्ष इति स्यात्॥ ततश्च यः संस्काराणामात्मलाभस्तस्य च विरमः स एव मोक्षः स्यात्॥ न च संस्कार एव मोक्ष इति युज्यते॥ अतएवाह तच्च न युज्यत इति किं चान्यत्—

भवेदभावो भावश्च निर्व्वाणमुभयं यदि।
नानुपादाय निर्व्वाणमुपादायोभयं हि तत्॥

यदि भावाभावरूपं निर्व्वानं स्यात्तदा हेतुप्रत्ययसामग्रीमुपादायाश्रित्य भवेन्नानुपादाय किं कारणं तस्मादुपादायोभयं हि तत् भावमुपादायाभावोऽभावं वोपादाय भाव इति कृत्वा

उभयमेतद्भावं वाभावं वोपादायैव भवति नानुपादाय ॥ एवं निर्व्वाणं भवेद्भावाभावरूपम् । न चैतदेवमिति न युक्तमेतत् । किञ्चान्यत् ॥

भवेदभावो भावश्च निर्व्वाणमुभयं कथम् ।
असंस्कृतं (च) निर्व्वाणं भावाभावौ च संस्कृतम् ॥

भावो हि स्वहेतुप्रत्ययसामग्रीसम्भूतत्वात् संस्कृतः । अभावोऽपि प्रतीत्यसम्भूतत्वाज्जाति-प्रत्ययजरामरणभवनाच्च संस्कृतः । तद्यदि भावाभावस्वभावं निर्व्वाणं स्यात्तदा नासंस्कृत-संस्कृतमेव तस्मान्न च संस्कृतमिष्यते ॥ तस्मान्न भावोभावस्वरूपं निर्व्वाणं युज्यते ॥ अथापि स्यान्नैव हि निर्व्वाणं भावाभावस्वरूपं किं तर्हि निर्व्वाणं भावाभावाविति ॥ एवमपि न युक्तम् ॥ कुतो यस्मात् –

भवेदभावो भावश्च निर्व्वाणमुभयं कथम् ।

भावाभावयोरपि परस्परविरुद्धयोरेकत्वे निर्व्वाणे नास्ति सम्भव इति ॥ यतः –

भवेदभावो भावश्च निर्व्वाणमुभयं कथम् ।

नैव भवेदित्यभिप्रायः ॥ इदानीं यथा नैव भावो नैवाभावो निर्व्वाणं युज्यते तथा प्रति-पादयन्नाह ।

नैवाभावो नैव ते भावो निर्व्वाणमिति याञ्जना ।
अभावे चैव भावे च सा सिद्धे सति सिध्यति ॥

यदि हि भावो नाम कश्चित् स्यात् तदा तत्प्रतिषेधेन चैव भावो निर्व्वाणमित्येषा कल्पना यदि कश्चिदभावः स्यात्तदा तत्प्रतिषेधेन चैवाभावो निर्व्वाणं स्यात् ॥ यदा च भावाभावे नस्तस्तदा तत्प्रतिषेधोऽपि नास्तीति तस्मान्नैव भावो नैवाभावो निर्व्वाणमिति या कल्पना सापि नोपपद्यत एवेति ॥ न युक्तमेतत् किञ्चान्यत् ॥

नैवाभावो नैवाभावो निर्व्वाणं यदि विद्यते ।
नैवाभावो नैवाभाव इति कमेतदिष्यते ॥

यदेतन्निर्व्वाणं नैवाभावं नैवभावरूपमस्तीतिकल्प्यते ॥ केन तदानीं तदित्थंविधं नोभ-यरूपं निर्व्वाणमस्तीति । अज्यते गृह्यते प्रकाश्यते वा किं तत्र निर्व्वाणे कश्चिदेवंविधः प्रतिपन्नोऽस्ति ॥ अथ नास्ति यद्यस्ति एवं सति निर्व्वाणेऽपि तदात्मस्यान्न वेष्टुं निरु-पादानस्यात्मनोऽस्तित्वाभावात् ॥ अथ नास्ति केनैतदित्थंविधं निर्व्वाणमस्तीति परिच्छि-द्यते ॥ संसारावस्थितं परिच्छिनत्तीति चेत् । यदि संसारावस्थितः परिच्छिनत्ति स किं

विज्ञानेन परिच्छिनत्ति उत ज्ञानेन। यदि विज्ञानेनेति परिकल्प्यते तन्न युज्यते किं कारणं निमित्तालम्बनं विज्ञानं न च विज्ञाने किञ्चिन्निमित्तमस्ति तस्मान्न तत्तावद्विज्ञाने ालम्बते। ज्ञानेनापि न ज्ञायते किं कारणं यस्माद् ज्ञानेन हि शून्यतालम्बनेन भवित- ग्रम्॥ तच्चानुत्पादरूपमेवेति कथम्। तेनाविद्यमानस्वरूपेणैवाभावो नैवभावो निर्व्वाण- मति गृह्यते सर्व्वप्रपञ्चातीतरूपत्वाज्ज्ञानस्येति। तस्मान्न केनचिन्निर्व्वाणं नैवाभावो वभाव इति अञ्यते॥ अनज्यमानमप्रकाश्यमानमगृह्यमाणं तदेवमस्तीति न युज्यते॥ र्व्वथा यथा च निर्व्वाणे एतास्तस्रः कल्पना न सम्भवन्त्येवं निर्व्वाणाधिगन्तुर्यदि तथागत ताः कल्पना नैव सम्भवं प्रतिपादयन्नाह॥

परं निरोधाद्भगवान् भवतीत्येव नोह्यते।
न भवत्युभयं चेति नोभयं चेति नोह्यते॥

उक्तं हि पूर्व्वं –

घनग्राहगृहीतस्तु येनास्तीति तथागतः।
नास्तीति वा कल्पयन् स निर्वृतस्य विकल्पयेदिति॥

एवं तावत्परं निरोधाद्भवति तथागतो न भवति चेति नोह्यते। एतद्द्वयस्याभावादुभय- मित्यपि नोह्यते उभयस्याभावादेव नोभयमिति। नोह्यते न गृह्यते न च केवलं परं निरोधाच्चतुर्भिः प्रकारैर्भगवान्नोह्यते॥ अपि च –

अतिष्ठमानोऽपि भगवान् भवतीत्येव नोह्यते।
न भवत्युभयं चेति नोभयं चेति नोह्यते॥

यथाच नोह्यं न चाज्यं तथा तथागतपरीक्षायां प्रतिपादितम्। अतएव –

संसारस्य च निर्व्वाणात् किञ्चिदस्ति विशेषणम्।
न निर्व्वाणस्य संसारात् किञ्चिदस्ति विशेषणम्॥

यस्मात्तिष्ठन्नपि भगवान् भवतीत्येवमादिना नोह्यते परिनिर्वृतोऽपि नोह्यते भवतीत्येव- मादिना अतएव संसारनिर्व्वाणयोः परस्परयोर्नास्ति कश्चिद्विशेषाविपर्य्यमानयोस्तुल्यरूप- त्वात् यच्चापीदमुक्तं भगवता – अनवराग्रो हि भिक्षवो जातिजरामरणसंसार इति॥ तदप्यत्र वोपपन्नं संसारनिर्व्वाणयोर्विशेषस्याभावात्तथाहि – निर्व्वाणस्य च या कोटिः संसरणस्य च न तयोरन्तरं किञ्चित्सुसूक्ष्ममपि विद्यते॥ न च केवलं संसारस्य निर्व्वाणेनापि विशिष्टता पूर्व्वापरकोटिकल्पना न संभवति॥ या अप्येताः।

परं निरोधादन्ताद्याः शाश्वताद्याश्च दृष्टयः।
निर्व्वाणमपरान्तं च पूर्व्वान्तं च समाश्रिताः॥

ता अप्यतएव नोपपद्यन्ते॥ संसारनिर्व्वाणयोरुभयोरपि प्रकृतिशान्तत्वेनैकरसत्वात् तत्र परं निरोधादित्यनेनोपलक्षणेन न च तत्राद्दृष्टयः परिगृह्यन्ते॥ तद्यथा भवति तथागतः परं मरणात् न भवति तथागतः परं मरणात्॥ भवति च न भवति च तथागतः परं मरणात्॥ नैव भवति न न भवति तथागतः परं मरणादिति॥ एताश्चतस्रो दृष्टयो निर्व्वाणपरामर्शेन प्रवृत्ताः। अन्ताद्या अपि च दृष्टयः॥ तद्यथा अन्तवान् लोकोऽनन्तवांश्चानन्तवांश्च नैवान्तवान्नानन्तवान् लोक इति॥ एताश्चतस्रो दृष्टयोऽपरान्तं समाश्रित्य प्रवृत्ताः॥ तत्रात्मनो लोकस्य वानागतमुत्पादमपश्यन् अन्तवान् लोक इत्येवं कल्पयन् अपरान्तमालंव्यप्रवर्त्तते॥ एवमनागतमुत्पादं पश्यन् अनन्तवान् लोक इति प्रवर्त्तते। पश्यंश्चापश्यंश्चोभयथा प्रतिपद्यते। द्वयोः प्रतिषेधेन नैवान्तवान् नानन्तवानिति प्रतिपद्यते॥ शाश्वतो लोकोऽशाश्वतो लोकः शाश्वतश्चाशाश्वतश्च नैव शाश्वतो नैवाशाश्वतो लोक इत्येताश्चतस्रो दृष्टयः पूर्व्वान्तं पूर्व्वान्तं समाश्रित्य प्रवर्त्तते॥ तत्रात्मनो लोकस्य वातीतमुत्पादं पश्यन् शाश्वतो लोक इति प्रतिपद्यते॥ अपश्यन्न शाश्वत इति प्रतिपद्यते॥ पश्यंश्चापश्यंश्च शाश्वतश्चेति प्रतिपद्यते॥ नैव पश्यन् नैवापश्यन् नैव शाश्वतो नाशाश्वतश्चेति प्रतिपद्यते॥ पूर्व्वान्तमाश्रित्यताश्चैताद्दृष्टयः कथं युज्यन्ते॥ यदि कस्यचित् पदार्थस्य कश्चित् स्वभावो भवेत्तस्य भावाभावकल्पनात्स्युरेता दृष्टयः। यदा तु संसारनिर्व्वाणयोरविशेषः प्रतिपादितस्तदा शून्येषु सर्व्वधर्म्मेषु किं सान्तं किमनन्तं चेत्। किमनन्तं चेच्चानन्तं नान्तं नान्तं चेच्च किं। किं तदेव किमन्यत् किं शाश्वतं किमशाश्वतं। अशाश्वतं शाश्वतं च किं वा नोभयमप्येव॥ चतुर्द्दशाप्येतान्यव्याकृतवस्तुनि असति भावस्वरूपेणैव युज्यन्ते॥ यस्तु भावस्वरूपमध्यारोप्य तद्विगमाधिगत एवाद्दृष्टीरुत्पाद्याभिनिवेशते तस्यायमभिनिवेशो निर्व्वाणपुरगामिनं पन्थानं विरुणद्धि सांसारिकेषु दुःखेषु नियोजयतीति विज्ञेयम्॥

अत्राह॥ यद्येवं भवता निर्व्वाणमपि प्रतिषिद्धम्। ननु च य एष भगवता अनन्तचरितसत्त्वराश्यनुवर्त्तकेन विदिताविपरीतसकलजगताशयस्वभावेन महाकरुणापरतन्त्रेण प्रियैकपुत्रकप्रमानुगताशेषत्रिभुवनजनेन चरितप्रतिलचानुरूपा धर्म्मा देशिता लोकस्य निर्व्वाणाधिगमार्थं स एवं सति व्यर्थ एव जायते॥ उच्यते॥ यदि कश्चिद्धर्म्मो नाम स्वभावरूपता स्यात्॥ केचिच्च सत्त्वास्तस्य धर्म्मस्य श्रोतारः स्युः कश्चिद्वा दयितो बुद्धो भगवान्नाम भावस्वभावः स्यादेतदेवं यदातु।

(BLS) सर्व्वोपलम्भोपशमः प्रपञ्चोपशमः शिवः।
न क्वचित् कस्यचित् कश्चिद्धर्म्मो बुद्धेन देशितः॥

तदा कुतोऽस्माकं यथोक्तदोषप्रसङ्गः ॥ इह सर्व्वेषां प्रपञ्चानां निमित्तानां य उपशमो-ऽप्रवृत्तिस्तन्निर्व्वाणं स एव चोपशमः प्रकृत्यैवोपशान्तत्वाच्छिवः । वाचामप्रवृत्तेर्वा प्रपञ्चोप-शमश्चित्तस्याप्रवृत्तेः शिवः। क्लेशानामप्रवृत्त्या वा प्रपञ्चोपशमो जन्माप्रवृत्त्या वा शिवः । क्लेश-प्रहाणेन वा प्रपञ्चोपशमो निरवशेषवासनाप्रहाणेन वा शिवः । ज्ञेयानुपलब्ध्या वा प्रपञ्चोप-शमाज्ज्ञानानुपलब्ध्या शिवः ॥ यदा चैव बुद्धा भगवन्तः सर्व्वप्रपञ्चोपशान्तरूपनिर्व्वाणे शिवे-ऽस्थानयोगेन न भवसीह सरागः स्थितः ॥ स्वपुण्यज्ञानसंभारपक्षयोस्तवातवातश्च गगने गग-नस्याकिञ्चनत्वात्तदा सर्व्वनिमित्तानुपलम्भान्न क्वचिद्देवेषु वा मनुष्येषु वा न कस्यचिद्देवस्य वा मनुष्यस्य वा न कश्चिद्धर्म्मः सा क्लेशिका वा चेयं वेदानिका वा देशित इति विज्ञेयम् । यथोक्तमार्य्यतथागतगुह्यसूत्रे ॥ यां च रात्रिं शान्तमत तथागतानुत्तरायां सम्यक्सम्बोधि-मभिसंबुद्धायां रात्रिमुपादाय परिनिर्व्वास्यति ॥ अत्रान्तरे तथागतेन एकमप्यक्षरं नोदाहृतं न व्याहृतं नापि प्रव्याहरति नापि प्रव्याहरति ॥ अथ च यथाधिमुक्ताः सर्व्वसत्त्वा नाना-धात्वाशया स्तां तां विविधां तथागतवाचं निश्चरन्ति ते जानन्ति ॥ तेषामेवं पृथक् पृथग् भवति ॥ अयं भगवानस्मभ्यमिमं धर्म्मं देशयन्ति ॥ वयं च तथागतस्य धर्म्मदेशनां शृणुमः ॥ तत्र तथागतो न कल्पयति न विकल्पयति ॥ सर्व्वकल्पविकल्पजालवासनाप्रपञ्च-विगता हि शान्तमत तथागता इति विस्तरः ॥ तथा अवाच अनक्षराः सर्व्वशून्याः शान्तादि-निर्म्मलाः । य एवं जानन्ति धर्म्मान् कुमारो बुद्धः स उच्यत इति ॥ यदि तर्ह्येवं क्वचित् कस्यचिद्धर्म्मो बुद्धेन देशितस्तत्कथमिमं ते विचित्राः प्रवचनव्यवहाराः प्रज्ञायन्त उच्यन्ते ॥ अविद्यानिद्रानुगतानां देहिनां स्वप्नायमानानामित्येत्यविकल्पाभ्युदय एषः ॥ अयं भगवान् सकलत्रिभुवनसुरासुरनाथ इमं धर्म्ममस्मभ्यं देशयतीति ॥ यथोक्तं भगवता —

तथागतो हि प्रतिविम्बभूतः
कुशलस्य धर्म्मस्य अनास्रवस्य ।
नैवात्र तथता न तथागतोऽस्ति
विम्बे च संदृ(प)श्यति सर्व्वलोक इति ॥

एतच्च तथागतगुह्यपरिवर्त्तेविस्तरेण व्याख्यातम् ॥ ततश्च निर्व्वाणार्थं धर्म्मदेशनाया अभावात् कुतो धर्म्मदेशनानां सद्भावेन निर्व्वाणस्यास्तित्वं भविष्यति। तस्मान्निर्व्वाणमपि नास्तीति सिद्धम् ॥ उक्तञ्च भगवता—



अनिर्व्वाणं हि निर्व्वाणं लोकनाथेन देशितम् ।
आकाशेन स्थितो ग्रन्थिराकाशेनैव मोचित इति ॥

तथा न तेषां भगवन् बुद्धोत्पादाय कस्यचिद्धर्म्मस्य उत्पादं वा निरोधं चेच्छन्ति न तेषां भगवन् संसारसमतिक्रमाय निर्व्वाणं भावतः पर्य्येषन्ते ॥ तत्कस्य हेतो निर्व्वानमिति भगवन्

यः प्रशमः सर्व्वनिमित्तानामुपरितम् ॥ सर्व्वजित अनिर्जितानां तदिमं भगवानाह पुरुषाः स्वाख्यातधर्म्मविनयं प्रवक्ष्ये तीर्थिकदृष्टौ निपतेत तानि निर्व्वाणं भावतः पर्य्येषन्ते ॥ तद्यथा तिलेभ्यस्तैलं क्षीरात् सर्पिः । अत्यन्तपरिनिर्वृत्तेषु भगवन् सर्व्वधर्म्मेषु ये निर्व्वाणं मार्गन्ति तानिहमाभिमानिकान् तीर्थिकानिति वदामि । न भगवन् योगाचारः सम्यक् प्रतिपन्नः । कस्यचिद्धर्म्मस्योत्पादं वा निरोधं वा करोति ॥ नापि कस्यचिद्धर्म्मस्य प्राप्तिमिच्छति नाभि समयमिति विस्तरः ॥

## इत्याचार्य्यचन्द्रकीर्त्तिपादोपरचितायां मध्यमकवृत्तौ निर्व्वाण-परीक्षा नाम पञ्चविंशतितमं प्रकरणम् ॥

---

अत्राह ॥ यदुक्तम् ॥

यः प्रतीत्यसमुत्पादः शून्यतां तां प्रचक्ष्महे ।
सा प्रज्ञप्ति रुपादाय प्रतिपत्सैव मध्यमेति ॥
कः पुनरसौ प्रतीत्य समुत्पादो यः शून्यतेत्युच्यते ॥

अथवा यदेतदुयुक्तम् ॥

यः प्रतीत्य समुत्पादं पश्यतीदं स पश्यति ।
दुःखं समुदयञ्चैव निरोधं मार्गमेव चेति ॥

तत् कतमोऽसौ प्रतीत्यसमुत्पाद इत्यतस्तदसङ्गप्रभेदविवक्षयेदमुच्यते ॥

पुनर्भवाय संस्कारो न विद्या निर्वृतस्त्रिधा ।
अभिसंस्कुरुते यां तैर्गतिं गच्छति . . . ॥

तत्राविद्याऽज्ञानन्तमो यथा भूतार्थप्रच्छादकं स्तिमितता कुशला अविद्यानिर्वृतश्छादितः पुद्गलः पुनर्भवाय पुनर्भवार्थं पुनर्भवोत्पत्त्यर्थमभिसंस्करोति । उत्पादयति कुशलाकुशला-नेञ्ज्यादिचेतनाविशेषास्ते संस्काराः । ते च त्रिविधाः कुशला अनेञ्ज्याश्च ॥ यदि वा कायिका वाचिका मानसाश्चेति तां स्त्रिविधान् कर्म्मलक्षणान् संस्कारान् अविद्यानिवृत्तः पुद्गलः करोति ॥ तैश्चसंस्कारैरभिसंस्कृतैः कर्म्मभिः कर्म्मसंज्ञितैस्तद्धेतुकताङ्गतैर्गच्छति ॥ ततोऽस्य विज्ञानं सन्निविशते संस्कारेत्ययं गतौ कुतः परितः संस्कारस्यास्य पुद्गलस्य संस्कारानुरूपायां गतौ देवादिकायां संस्कारहेतुकं विज्ञानं सन्निविशते प्रविशत्युपपद्यते संस्कारानर्थवीजभूतम् ॥ तत उत्तरकालं सन्निविष्टेऽस्य विज्ञाने नाम रूपन्निषिच्यते ॥ तत्र कर्म्मक्लेशा-विधं तस्मिन् तस्मिन् उपपत्त्यायतनामयतीति नामसंज्ञावशेन वार्थेषु नामयतीति नाम ॥

चत्वारो ऽरूपिणः स्कन्धा नामेति व्यपदिश्यन्ते। रूप्यत इति रूपं बाध्यत इत्यर्थः। इदं च रूपं पूर्व्वकं च नाम उभयमेतदभिसंक्षिप्य नामरूपमिति व्यवस्थाप्यते॥ तत्र बिम्बप्रतिबिम्बन्यायेनस्वाध्यायदीपमुद्राप्रतिमुद्रादिन्यायेन वा मरणान्तिकेषु स्कन्धेषु निरुध्यमानेष्वेकस्मिन्नेव क्षणे तुलादण्डनामोन्नामन्यायेनैव पञ्चाशिका स्कन्धा यथा कर्म्म क्षपत उपजायन्ते॥ एवं च बिम्बप्रतिबिम्बमुद्रान्यायेन प्रतीत्य समुत्पादः सिध्यति। तुलादण्डनामोन्नामन्यायेन तु यद्विज्ञानं संनिविशत इत्युक्तम्। तद्बाललोकबोधानुरोधेन समानकाल एव भवप्रतिसन्धिरिति॥

तथा समानेन समानकालं
लोकस्य दुःखञ्च सुखोदयञ्च।
हेतुञ्च कर्त्तुञ्च सदास्तु शक्तिः
तमः प्रकाशं यथैव भानोरिति॥

न तु पुनः प्रतीत्यसमुत्पादस्वरूपविचक्षणानामेवं वक्तुं युज्यते साहचर्य्यादित्यमेकक्षणे तुलादण्डनामोन्नामदृष्टान्तेनेति॥

जन्मासुखं न सदिदं यदि जायमाने
नाशोन्मुखं सदपि नाम निरुध्यमाने।
दृष्टं तदा कथमिदं तुलया समानं
कर्त्रा विना जनिरियंच न युक्तरूपम्॥

इत्यादि वचनात् यथा बिम्बप्रतिबिम्बमुद्राप्रतिमुद्रादिन्यायेन क्षणिकत्वं नेष्यते भवद्भिस्तथान्यथापि भावस्योत्पादसमन्तरध्वंसिनः क्षणिकत्वेन युक्तम्॥ यतो जातिजरास्थित्यनित्यताख्यानि चत्वारि संस्कृतलक्षणानि उत्पद्यमानस्य भावस्य बाह्यस्याध्यात्मिकस्य वा एकस्मिन्नेव क्षणे भवन्तीत्येतदभिधर्म्मपालः॥ तत्र जातिजरयोः परस्परनिरोधात्॥ स्थित्यनित्यतयोश्चैकस्मिन् न च भावेन युगपत्सम्भव इष्यते सद्भिः।

क्षणिके सर्व्वथाऽभावात् कुतः काचित् पुराणता।
यथान्तोऽस्ति क्षणस्यैवमादि मध्यं च कल्प्यताम्॥

आत्मकत्वात् क्षणस्यैवं न लोकस्य क्षणस्थितिः।
आदिमध्यावसानानि चिन्त्यानि क्षणवत् पुनः॥
आदिमध्यावसानत्वं न स्वतः परतोऽपि वा॥

इति मध्यमकसिद्धान्तपादात् क्षणिकपदार्थासिद्धेरसिद्धेरेवाश्रयो न च जातिमरणयोः परस्परभिन्नलक्षणयोरेकस्मिन् क्षणे सम्भवो भवेत् ॥ संशयनिश्चयज्ञानयोरालोकान्धकारयोर्ज्ञानाज्ञानयोर्बीजाङ्कुरयोर्मरणभवोपपत्तिर्भवयोर्भिन्नलक्षणयोरित्यादिः ॥ परस्परयोर्निरपेक्षयोरेव स्वहेतुप्रत्ययसिद्धयोः सहभावो युज्यते साव्येतरगोविषाणयोर्युवतिस्तनयोर्नरकर्णयोरित्यादि ॥ न तु पुनः कदाचिदपि परस्परविरुद्धयोर्विनाशोत्पादयोः ॥ यथोक्तम् रागरक्तपरीक्षायाम् ॥

सहैव पुनरुद्भूतिर्न युक्ता रागरक्तयोः ।
भवेतां रागरक्तौ हि निरपेक्षौ परस्परम् ॥

नैकत्वे सहभावोऽस्ति न ते नैव हि तत् सह ।
पृथक् त्वे सहभावोऽथ कुत एव भविष्यति ॥

एवं रक्तेन रागस्य सिद्धिर्नसह नासह ।
रागवत् सर्व्वधर्म्माणां सिद्धिर्नसह नासह ॥

इति प्रतिषेधात् कुतः समानकालता भावानां मरणभवोपपत्तिभवयोरिति । अतः सहभावो विनेयजनबोधानुरोधप्रवृत्त एवेति लक्ष्यते ॥ ते नैकस्मिन्नेवक्षणे नामोन्नामौ तुलायाः सम्भवतः ॥ नामोन्नामयोः कालभेदात् बलवत् पुरुषेच्छतामात्रेण पञ्चषष्ठिक्षणा अतिक्रामन्तीति पादात् उत्पलपत्रशतसहस्रवेधवत् सूच्यग्रेणेति ॥ अत्राप्यत्र उत्पलपत्रशतसहस्रवेधः सूच्यग्रेण क्रमशोवेधोऽवशेषः क्षणोनामेति सूक्ष्मत्वात् ॥ एकक्षणेन श्लोकाक्षरपदादारणवत् ॥ किं च –

अनिरोधमनुत्पादमनुच्छेदमशाश्वतम् ।
अनेकार्थमनानार्थमनागममनिर्गमम् ।
यः प्रतीत्यसमुत्पादं प्रपञ्चोपशमं शिवमिति ॥

पादावुत्पादनिरोधयोरसम्भव एव प्रतिपादितः शास्त्रमध्यमक आगम सूत्रेषु ॥

नविप्रहाणतपर्शूधर्म्म वा उसंस
जगं सप्तधा उपदंशेऽपि ।
एसाक्षोश्राध्रुवक्तसातीस्त
अध्यासुसत्त्वाकं पक्षतीनोपलम्भती ॥

सत्त्वयास्तु च दंशेमि एषालोऽनुवर्त्तितेत्यादि ॥

तथा ॥

फलपिण्डोपमं रूपं वेदना बुद्बुदोपमा ।
मरीचिसदृशी संज्ञा संस्काराः कदलीनिभाः ॥
मायोपमञ्च विज्ञानमुक्तमादित्यबन्धुना ।
एवं धर्म्मान् वीक्षमाणो भिक्षुरारब्धवीर्य्यवान् ॥
दिवा वा यदि वा रात्रौ सम्प्रजानन् प्रतिस्मृतः ।
प्रतिविध्येत् पदं शान्तं संस्कारोपशमं शिवमिति ॥

एताश्च गाथाः सर्व्वनिकायशास्त्रसूत्रेषु पठ्यन्ते ॥ अतः फलपिण्डादीनां हेतुप्रत्ययसामग्रीं प्राप्य प्रतीत्यसमुत्पन्नानां सारवस्तुविगतानां कुतः क्षणिकाः क्षणिकचित्तेति ॥ महायान-सूत्रेषु च ॥

स्वप्नोपमा भवति सकलाः
न हि कश्चिज्जायति न च म्रियते ।
न च कर्म्म नश्यति कदाचित्
कृतं फलमुदेति कृतत्त्वशुभं संसरति ॥

न च शाश्वतं न च उच्छेदपुरः
न च कर्म्मसञ्चयो न चापि स्थितिः ।
न च सापि कृत्ये पुनरस्पृशती
न च अनुकृत्य पुनर्व्वेदयते ॥

यथा कुमारी सुपिनान्तरे
ऽस्मिन् सा पुत्रजातं च पश्यति ।
जातेति तुष्टामृतदौर्मनः स्थिता
तथोपमान् जानथ सर्वधर्म्मान् ॥

यथैवग्रामान्तरिलेखदर्शनात्
क्रियाः प्रवर्त्त(य)न्ति पृथक् पृथक् शुभाः ।

न लेखसंक्रान्तिगिरा च विद्यते
तथोपमान् जानथ सर्वधर्मान् ॥

मुद्रात् प्रतिमुद्रा दृश्यते
मुद्रासंक्रान्तिर्न चोपलभ्यते ।
न च अन्यूने चैवशाश्वता
एवमनुच्छेद अशाश्वतधर्मता ॥

यथामुंजप्रतीत्यवल्वजु
व्यायामबलेनवर्त्तिता ।
घटीयन्त्र स च कुर्वते
समेकैकसुनास्तिवर्त्तना ॥

तथसर्वभवाङ्गवर्त्तिनी
अन्यमन्यापचयननिःश्रिता ।
एकैकेषु च तेषु वर्त्तनी
पूर्वमपरान्ततुलोपलभ्यते ॥

अत एवोक्तमार्य्यनागार्जुनपादैः ।

स्वाध्यायदीपमुद्रा
दर्पणघोषार्ककान्तवीजाम्लैः ।
स्कन्धप्रतिसन्धिरसंक्रमश्च
विद्वद्भिरुपधायाविति ॥

अतश्चशास्त्राचार्य्यदेवपादैर्महाबोधिवर्य्यस्थिरप्रस्थानस्थितैः ॥

अलातचक्रनिर्माणस्वप्नमायाम्बुचन्द्रकैः ।
धूमिकान्तः प्रतिश्रुत्कामरीच्यभ्रैः समाभव इति ॥

तदेवं विम्बप्रतिविम्बादिन्यायेन मातुः कुक्षौ विज्ञानसमूर्च्छितविज्ञानप्रत्ययं नामरूपं निषिच्यते खरति प्रादुर्भवतीयर्थः। यदिह गतौ विज्ञानं न संमूर्च्छितं स्यात्तदा नामरूप-

प्रादुर्भावो न स्यात्। सचेदानन्दविज्ञानं मातुः कुक्षिं नाक्रामतः। न तत् कललं कललत्वाय संवर्त्तेत इति वचनात्॥ तदेवं निषिक्तनामरूपे तु षडायतनसंभवः॥ दुःखोत्पत्त्यायद्वात्वाय-द्वारभाविनदर्शनश्रवणघ्राणरसस्पर्शमननाख्यं षडायतनं नामरूपहेतुकमुपजायते स चक्षुषा रूपाणि दृष्ट्वा सौमनस्यनीयान्यभिनिविशते अभिनिविष्टः सन् रागजं द्वेषजं मोहजं कर्म्म करोत्यादिना दुःखोत्पत्तावायद्वारत्वं षसामायतनानां तदेवं सुभूते षडायतने उत्तरकालम् षडायतनमागम्यसंस्पर्शः संवर्त्तते कः पुनरयं स्पर्शः कथं वा संप्रवर्त्तत इति प्रतिपादयन्नाह।

चक्षुः प्रतीत्यरूपञ्च समन्वाहरमेव च।
नामरूपं प्रतीत्यैवं विज्ञानं संप्रवर्त्तते।
सन्निपातस्त्रयाणां या रूपविज्ञानचक्षुषाम्॥

स्पर्शश्चक्षुरिन्द्रियं प्रतीत्य रूपाणि समन्वाहरं च प्रतीत्यमनस्कारं विषयादिलक्षणं समनन्तरप्रत्ययं विज्ञानवीजभूतं चक्षुर्विज्ञानमुत्पद्यते॥ तत्र चक्षुश्चरूपायतनञ्च रूपं समन्वाहरन्तु स्कन्धलक्षणं नाम। तदेतत्त्रयं प्रतीत्योत्पद्यमानं चक्षुर्विज्ञानं नामरूपं प्रतीत्योत्पद्यते॥ तदेवमेषामिन्द्रियविषयविज्ञानानां त्रयाणां यः सन्निपातः सहोत्पादोऽन्योन्योपकारेणतुल्यं या प्रवृत्तिः संस्पृष्टीलक्षणः स्पर्शस्तत्र उत्तरकालं तस्मात् स्पर्शाच्च वेदना संप्रवर्त्तते॥ इष्टानिष्टोभयविपरीतविषयानुभूतिः विषयानुभवो वेदनं वित्तिर्वेदनेत्युच्यते॥ दुःखासुखा-ऽदुःखाऽसुखा च त्रिविधा॥ यथा चैषां रूपविज्ञानचक्षुषां त्रयाणां सन्निपातलक्षणं स्पर्श-मागम्यवेदनोक्ता॥ एवं शेषेन्द्रियविषयविज्ञानं त्रयसन्निपातलक्षणस्पर्शहेतुका वेदना व्याख्येया तत उत्तरकालं वेदनाप्रत्ययातृष्णासंप्रवर्त्तत इति वर्त्तते वेदनाप्रत्यया यस्यास्तृष्णायाः सा वेदनाप्रत्यया किं विषयाः पुनः सा तृष्णा वेदनाविषये च किं कारणम्॥ यस्मादसौ तृष्णालुः वेदनार्थं हि तृष्णोच्यते॥ वेदनामेव निमित्तमेवाभिलाषं करोतीत्यर्थः॥

कथं कृत्वा यदि तावत् सुखावेदनास्योपजायते। स तस्याः पुनः पुनः संयोगार्थं परिभा-ष्यते॥ अथ दुःखादयस्तस्याविसंयोगार्थं परिभाष्यते॥ अथादुःखाऽसुखा तस्या अपि नित्य-मपविस्रं सार्थं परिभाष्यते॥ स एवं भाष्यमाण उपादानमुपादत्तचतुर्विधं स एवं वेदना-स्वभिनिविष्टः शक्तस्तृष्णाप्रत्ययं कामदृष्टिशीलव्रतात्मवादोपादानाख्यं चतुर्विधं कर्म्मास्रय-कारणं परिगृह्णाति॥ तदेवास्य तृष्णाप्रत्ययमुपादानं भवति॥ तत उत्तरकारमुपादाने सति भवे उपादातुः प्रवर्त्तते॥

स्याद्धियद्यमुपादाने मुच्यते न भवोद्भवः।

पञ्चस्कन्धाः स च भवे चतुर्विधस्य यथोक्तस्योपादानस्योपादाता पृष्ठी उत्पादयिता॥ तस्यो-पादातुरुपादानप्रत्ययोभवे उपजायते॥ किं कारणं यस्मात्। योह्यनुत्पादितवेदनातृष्णाः प्रति-संख्यानबलेनतृष्णामस्वीकुर्वं श्चतुर्विधमुपादायाप्रतिष्ठायोपादाताऽमराद्दयज्ञानसम्मुखीभावात्

स्यादिन्द्रियत्वमुपागो मुच्यते स तदानीं तस्य न भवेद्भवः। कः पुनरयं भवः पञ्चस्कन्धाः स च भवः य उपादानात् प्रवर्त्तते स प्रपञ्चस्कन्धभावो वेदितव्यः॥

त्रिविधमपि कायिकं वाचिकं मानसिकं च कर्म्म भवत्यस्मादनागतं स्कन्धपञ्चकं भव इति व्यपदिश्यते। तत्र कायिकं वाचिकं कर्म्मरूपस्कन्धस्वभावकर्म्मविज्ञप्तित्वात्॥ मानसन्तु स्कन्धस्वभावमिति॥ एवं स भवे पञ्चस्कन्ध इति विज्ञेयम्। तस्माद्भवो जातिः प्रवर्त्तते॥ अनागतस्कन्धोत्पादो जातिः सा च भवात् प्रवर्त्तते तत उत्तरकालम्॥

जरामरणदुःखादिशोकाः सपरिदेविताः।
दौर्मनस्यमुपादाय जातेरेतत् प्रवर्त्तते॥

जातिहेतुका एते जरामरणादयः प्रवर्त्तन्ते। एषां च यथा सूत्रमेव व्याख्यानं वेदितव्यम्। तत्र स्कन्धपरिपाका जराजीर्णस्य स्कन्धभेदामरणं क्रियमाणस्य विगच्छतः संमुखस्य साभिष्वङ्गो हृदयसन्तापः॥

शोकः शोकसमुत्थितो वाक्प्रलापः परिदेवः पञ्चेन्द्रियासान्निपातो दुःखं। मनानिष्टनिपाताद्दौर्मनस्यदुःखदौर्मनस्यबहुत्वसम्भूतता उपायासा इति।

तदेवं यथोपवर्णितेन न्यायेन केवलस्यैवमेतस्य दुःखस्कन्धस्य संभवः केवलस्येत्यात्मात्मीयस्वभावविगतस्य वालपृथग्जनपरिकल्पितमात्रस्य दुःखात्मकस्य सुखव्यामिश्रस्यैवेत्यर्थः। एवमिति स तु प्रत्ययमात्रबलेनैवेत्यर्थः॥ दुःखस्कन्धस्येति दुःखसमुदयस्य दुःखसमूहस्य दुःखनाशेरित्यर्थः। यतश्चैव यथोपवर्णितादविद्यादिकाभेदे च वाङ्गानां प्रवृत्तिरतः।

संसारमूलं संस्कारः न विद्वान् संस्करोत्यज्ञः।
अविद्वान् कारकस्तस्मात् न विद्वांस्तत्त्वदर्शनात्॥

तत्र संसारस्य विज्ञानादिप्रवृत्तिलक्षणस्य मूलप्रधानं कारणं तस्मात्तस्य संस्कारमूलान्। अविद्वान् संस्करोति अविद्यानुगता ये पुद्गला भिक्षवः पुण्यान्यपि संस्कारो नाभिसंस्कारोत्य पुण्यान्यपि संस्कारो नाभिसंस्कारोत्यानन्त्योनापि संस्कारो नाभिसंस्कारोतीति भगवद्वचनात्॥ यतश्चैवमविद्वन् कारकस्तस्मादविद्वानेव पुद्गलः कारको भवति॥ संस्काराणां न विद्वांस्तत्त्वदर्शी प्रक्षीणाविद्यः किं कारणं तत्त्वदर्शनात् तत्त्वदर्शने हि सर्व्व पदार्थानामेवाभ्युपलम्भात्॥ नास्ति किञ्चित् यदालम्ब्यत्र कर्म्म कुर्य्यादिति यतश्चैवमविद्यायामेव सत्यां संस्काराः प्रवर्त्तन्ते ऽसत्यां न प्रवर्त्तन्ते ऽतः॥

अविद्यायां विरुद्धायां संस्कारो नाम सम्भवः।

हेतुवैयर्थ्यात् तस्याः पुनरविद्यायाः कुतो निरोध इत्याह॥

## अविद्याया निरोधस्तु ज्ञानस्य नैव भावनात्।

अस्यैव प्रतीत्यसमुत्पादस्य यथावदविपरीतभावनातोऽविद्या प्रहीयते। यो हि प्रतीत्यसमुत्पादं सम्यक् पश्यतीति स सूक्ष्मस्यापि भावस्य न स्वरूपमुपलभते॥ प्रतिविम्बस्वप्नालातचक्रधर्म्मादिवस्तु स्वभावशून्यतां सर्व्वेषां भावानामवतरति॥ स एवं स्वभावशून्यतां सर्व्वेषामेव तीर्थो न किञ्चद्वस्तूपलभते वाह्याध्यात्मिकं वा सोऽनुपलभमानो न क्वचिद्धर्म्ममुह्यति॥ असुर्हस्य कर्म्म न करोत्येवं प्रतीत्यसमुत्पादभावनया तत्त्वमेव तरति॥ तत्त्वदर्शिना योगिना नियतमेषाविद्या प्रहीयते, प्रहीणाविद्यस्य संस्कारो निरुध्यते॥ यथा चैवमविद्यानिरोधात् संस्कारो निरुध्यते एवं तस्य तस्य निरोधेन तत्तन्नाभिप्रवर्त्तन्ते॥ दुःखस्कन्धः केवलोऽयमेवं सम्यक् निरुध्यन्ते पूर्व्वस्य पूर्व्वस्याङ्गस्य निरोधेनोत्तरस्याङ्गस्य निरोधो भवतीति विज्ञेयम्॥

अनयोस्त्वानुपूर्व्व्याऽयं योगी आत्मा आत्मीयाद्यदर्शनायामनिरस्तः कारकवेदकविरहितं भावस्वभावशून्यं दुःखस्कन्धं दुःखराशिं पुनरनुत्पत्त्या सम्यक् निरोधयति॥ यथोक्तमार्य्यशालिस्तम्बसूत्रे। एवमाध्यात्मिकोऽपि प्रतीत्यसमुत्पादो द्वाभ्यामेव कारणाभ्यामुत्पद्यते कतमाभ्यां द्वाभ्यां हेतूपनिवन्धतः प्रत्ययोपनिवन्धतस्च तत्राध्यात्मिकस्य प्रतीत्यसमुत्पादस्य हेतूपनिवन्धः कतमो यदिदमविद्याप्रत्ययाः संस्काराः संस्कारप्रत्ययं विज्ञानं विज्ञानप्रत्ययं नामरूपं नामरूपप्रत्ययं षड़ायतनं षड़ायतनप्रत्ययः स्पर्शः स्पर्शप्रत्यया वेदना वेदनाप्रत्ययाः तृष्णाः तृष्णाप्रत्ययमुपादानमुपादानप्रत्ययो भवो भवप्रत्यया जातिः जातिप्रत्ययाः जरामरणशोकपरिदेवदुःखदौर्मनस्योपायासाः संभवन्ति। एवमस्य केवलस्य महतो दुःखस्कन्धस्य समुदयो भवति। अविद्या चेन्न भविष्यन्नैव संस्काराः प्रज्ञास्यन्त एवं यावज्जातिश्चनाभविष्यज्जरामरणं न प्रज्ञास्यते। अथवा सत्यामविद्यायां संस्काराणामभिनिर्वृत्तिर्भवति। एवं यावज्जात्यां जरामरणस्याभिनिर्वृत्तिर्भवति। अत्राविद्याया नेवं भवति। अहं संस्कारान्नाभिनिर्वर्त्तयामीति॥ संस्काराणामपि नैव भवति वयमविद्यया निर्वर्त्तिता इति। एवं यावज्जातेरपि नैवं भवति। अहं जरामरणमभिनिर्वर्त्तयामीति जरामरणस्यापि नैवं भवत्यहं जात्यानिवर्त्तितमिति॥ अथ वसन्त्यामविद्यायां संस्काराणामभिनिर्वृत्तिर्भवति प्रादुर्भावः। एवं यावज्जात्यां सत्यां जरामरणस्याभिनिर्वृत्तिर्भवति प्रादुर्भावः। एवमाध्यात्मिकस्य प्रतीत्यसमुत्पादस्याहेतूपनिवन्धो द्रष्टव्यः। कथमाध्यात्मिकस्य प्रतीत्यसमुत्पादस्य प्रत्ययोपनिवन्धो द्रष्टव्य इति षण्णां धातूनां समवायात् कतमेषां षण्णां धातूनां समवायात्। यदिदं पृथिव्यप्तेजोवाय्वाकाशविज्ञानधातूनां समवायात् आध्यात्मिकस्य प्रतीत्यसमुत्पादस्य प्रत्ययोपनिवन्धो द्रष्टव्यः। तत्राध्यात्मिकस्य प्रतीत्यसमुत्पादस्य पृथिवीधातुः कतमो यः कायस्य संश्लेषात्मकोऽपि न भावमभिनिवर्त्तयति॥ अयमुच्यते पृथिवीधातुः यः कायस्यानुपरिग्रहकृत्यं करोति। अयमुच्यते अब्धातुः यः कायस्याशितं पीतं भक्षितं परिपाचयत्ययमुच्यते तेजो धातुः। यः कायस्य आश्वासं प्रश्वासं करोत्ययमुच्यते वायु धातुः। यः कायस्यान्तः शौषीर्य्यमभिनिवर्त्तय-

त्ययमुच्यते आकाशधातुः। यो नाम रूपाङ्कु(रं)लं निवर्त्तयति न स्कलोपयोगेन पञ्चविज्ञान-कायसंयुक्तं साश्रवञ्च मनोविज्ञानमयमुच्यते भिक्षवो विज्ञानधातुः। तत्रासतामेषां प्रत्ययानां कायस्योपपत्तिर्न भवति॥ यदाल्वाध्यात्मिकपृथिवीधातुरविकलोभवति। एवमप्-तेजोवायुविज्ञानाकाशधातवश्चाविकला भवन्ति। ततः सर्व्वेषां समवायात् कायस्योत्पत्ति-र्भवति। तत्र पृथिवीधातवो नैवं भवत्यहं कायस्य कमपि न भावमभिनिवर्त्तयामीति। अब्धातोर्नैवं भवत्यहं कायस्यानुग्रहकृतं करोमीति॥

तेजोनैवं भवत्यहं कायस्याशितं पीतं खादितं परिपाचयामीति। वायुधातोर्नैवं भवत्यहं कायस्याश्वासप्रश्वासकृत्यं करोमीति। आकाशधातोर्नैव भवत्यहं कायस्यान्तः शौषीर्य्यमभि-निवर्त्तयामीति अतो नापि नैवं भवत्यहं कायस्य परिणामनाकृत्यं करोमीति। विज्ञानधातो-र्नैवं भवत्यहं कायमभिनिवर्त्तयामीति कायस्यापि नैवेत्यहमेभिः प्रत्ययैर्जनित इति। अथ न पुनः सतामेषां प्रत्ययानां समवायात् कायस्योपपत्तिर्भवति तत्र पृथिवीधातुर्नात्मा न सत्त्वो न जीवो न जन्तुर्न मनुजो न मानवो न स्त्री न पुमान् न नपुंसकं न चाहं न मम न वान्यस्य कस्यचित्। एवमब्धातुस्तेजोधातुर्वायुधातुराकाशधातुः पृथिवीधातुर्विज्ञानधातुरात्मा न सत्त्वो न जीवो न जन्तुर्नमनुजो न मानवो न स्त्री न पुमान् न नपुंसकं नचाहं न मम नवान्यस्य कस्यचित्। तत्राविद्या कर्म्म एषामेव षसां धातूनामेकसंज्ञापि सुसंज्ञा नित्यसंज्ञा-ध्रुवसंज्ञा शाश्वतसंज्ञा सुखसंज्ञा सत्त्वसंज्ञा जीवपुद्गलमनुजा नच संज्ञा अहङ्कारममकारसंज्ञा। एवमादिविविधसंज्ञानमियमुच्यतेऽविद्येति॥ एवमविद्यायां सत्यां विषयेषु रागद्वेषमोहाः प्रवर्त्तन्ते। तत्र ये रागद्वेषमोहा विषयेष्वमी संस्कारेत्युच्यते। वस्तुप्रतिविज्ञप्तिविज्ञानं विज्ञानसहेतवश्चत्वारः स्कन्धा अरूपिण उपादानाख्यास्तन्नामरूपं चत्वारि महाभूतानि-चोपादाय रूपं तच्च नाम। एकध्यमभिसंक्षिप्य तन्नामरूपं नामरूपसन्निःसृतानीन्द्रियानि षडायतनं त्रयाणां धर्म्माणां सन्निपातः स्पर्शः स्पर्शानुभवो वेदना वेदनाध्यवसानं तृष्णा तृष्णा-वैपुल्यमुपादानमुपादाननिर्जातं तत् पुनर्भवे जनककर्म्मभवे हेतुकः स्कन्धप्रादुर्भावो जातिः जातस्य स्कन्धपरिपाको जराजीर्णस्य स्कन्धस्य विनाशो मरणं म्रियमाणस्य संमूढस्य साभि-ष्वङ्गस्यान्तर्दाहः शोकाच्छमालोपमं परिदेवः पञ्चाभिसकायसंयुक्तमसातमनुभवनं दुःखं मनसा संयुक्तं मानसं युक्तं मानसं दुःखं दौर्मनस्यं ये चाप्यन्यत्र एवमादय उपक्लेशास्तेह्युपायासा इति॥ तत्र मोहान्धकारार्थेनाविद्याभिसंस्कारार्थेन स्पर्शः। अनुभवनार्थेन वेदना परितर्पणार्थेन तृष्णा उपादानार्थेनोपादानं पुनर्भवार्थेन भवः। जन्मनार्थेन जातिः। परिपाकार्थेन जराऽविनाशार्थेन मरणम्। शोचनार्थेन शोकः। परिदेवनार्थेन परिदेवः। कायपरिपीडनार्थेन दुःखम्। चित्तसंपीडनार्थेन दौर्मनस्यम्। उपक्लेशार्थेनोपायासाः॥

अथवा तत्त्वेऽप्रतिपत्तिर्मिथ्याप्रतिपत्तिरज्ञानमविद्या। एवमविद्यायां सत्यां त्रिविधाः संस्कारा अभिनिवर्त्तन्ते। पुण्योपगमा अपुण्योपगमा आनंज्योपगमास्तच पुण्योपगमानां संस्काराणां पुण्योपगमे च विज्ञानं भवति॥ अपुण्योपगमानां संस्काराणामपुण्योपगमे च विज्ञानं भवति॥ आनंज्योपगमानां संस्काराणामानज्योपगमे च विज्ञानं भवति॥ इदमुच्यते

विज्ञानप्रत्ययं नामरूपमिति ॥ वेदनादयोऽरूपिणश्चत्वारः संस्कारास्तत्र तत्र भवेनामयन्तीति नाम ॥ सहरूपस्कन्धेन च नामरूपं चेति नामरूपमुच्यते ॥ नामरूपविवृद्ध्या षड्भिरायतनद्वारैः कृत्यक्रियाः प्रवर्त्तन्ते प्रज्ञायन्ते। तं नामरूपप्रत्ययं षडायतनमित्युच्यते षड्भ्यश्चायतनेभ्यः संस्पर्शकायाः प्रवर्त्तन्ते। तत्र ते षडायतनप्रत्ययः स्पर्श इत्युच्यते। तज्जातीयः स्पर्शो भवति तज्जातीया वेदना प्रवर्त्तते। इत्युच्यते भिक्षवः स्पर्शप्रत्यया वेदनेति। यस्तां वेदनां विशेषेणास्वादयति अभिनन्दति अध्यवसति अध्यवसाये तिष्ठति। सा वेदना प्रत्यया तृष्णेत्युच्यते। आस्वादनाभिनन्दनाध्यवसानस्थानमात्मप्रियसातरूपैर्वियोगो माभून्नित्यमपरित्यागो भवेदिति। येवं प्रार्थना इदमुच्यते भिक्षवः तृष्णाप्रत्ययमुपादानम्। यत्र वस्तुनि सतृष्णस्तस्य वस्तुनोऽर्ज्जनाय वि(०)पनायोपादानमुपादत्तं यत्र प्रार्थयते स एवं प्रार्थयमानः पुनर्भवजनकं कर्म्म समुत्थापयति। कायेन वाचा मनसा च स उपादानप्रत्ययो भव इत्युच्यते। तत्र कर्म्मनिर्जातानां स्कन्धानामभिनिवृत्तिर्या सा भवप्रत्यया जातिरित्युच्यते। जात्याभिनिर्वृत्तानां स्कन्धानामुपनयनपरिपाकाद्विनाशो भवति। तदिदं जातिप्रत्ययं जरामरणमित्युच्यते। एवमयं द्वादशाङ्गः प्रतीत्यसमुत्पादोऽन्योन्यहेतुकोऽन्योन्यप्रत्ययतो नैवानित्यो न नित्यो न संस्कृतो न वेदयिता नावेदयिता न प्रतीत्यसमुत्पन्नानां प्रतीत्यसमुत्पन्नो न क्षयधर्म्मो नाक्षयधर्म्मो न विरागधर्म्मो न निरोधधर्म्मो नानिरोधधर्म्मोऽनादिकारप्रवृत्तोऽनुच्छिन्नोऽनुप्रवर्त्तते नदीस्रोतवत् ॥

यद्यप्ययं प्रतीत्यसमुत्पादोऽनुच्छिन्नोऽप्रवर्त्तते नदीस्रोतवत्। अथ च मान्यस्य द्वादशाङ्गस्य प्रतीत्यसमुत्पपादस्य चत्वारि अङ्गानि संघातक्रियायै हेतुत्वेन प्रवर्त्तन्ते। कतमानि चत्वारि यदुताविद्या तृष्णा कर्म्मविज्ञानं च। तत्र विज्ञानं वीजस्वभावत्वेन हेतुः। कर्म्मक्षेत्रस्वभावत्वेन हेतुः। अविद्या तृष्णा च क्लेशस्वभावत्वेन हेतुः। कर्म्मक्लेशाविज्ञानवीजं जनयति। तत्र कर्म्मविज्ञानवीजस्य क्षेत्रा कार्य्यङ्करोति। तृष्णा विज्ञानवीजं स्नेहयति। अविद्याविज्ञानवीजमेव किरति असतां येषां प्रत्ययानां वीजस्याभिनिवृत्तिर्न भवति। तत्र कर्म्मणो नैवं भवति + विज्ञानवीजस्य क्षेत्रकार्य्यङ्करोमीति ॥ तृष्णाया अपि नैवं भवत्यहम्॥ विज्ञानस्य स्नेहकार्य्यं करोमीति। अविद्याया अपि नैवं भवत्यहं विज्ञानवीजमवकिरामीति। विज्ञानवीजस्यापि नैवं भवत्यहमेभिः प्रत्ययैर्जनित इति। अथच विज्ञानवीजं कर्म्मरूपमालम्बनकृत्यं करोति। क्षेत्रप्रतिष्ठितं तृष्णा स्नेहाभिष्यन्दितमविद्यास्ववकीर्णं विभज्यमाणं तत्र तत्रोपपत्त्यायतनप्रतिसन्धौ मातुः कुक्षौ नामरूपाङ्कुरमभि निवर्त्तयति। स च नामरूपाङ्कुरो न स्वयंकृतो न परकृतो नोभयकृतो नेश्वरकृतो न कालपरिणामितो न प्रकृतिसम्भूतो नचैककारणाधीनो नाप्यहेतुसमुत्पन्नः। अथच मातापितृसंगादृतुसमवायात् ॥

अन्येषां प्रत्ययानां समवायादास्वादानुविद्धं विज्ञानवीजं मातुः कुक्षौ नामरूपाङ्कुरमभिनिवर्त्तयति। अस्वामिकेषु धर्म्मेषु परिग्रहेष्वसमेषु मायालक्षणस्वभावेषु हेतुप्रत्ययानामवैकल्यात्। तद्यथा पञ्चभिःकारणैश्चक्षुर्विज्ञानमुत्पद्यते। कतमैः पञ्चभिः यदुत चक्षुः प्रतीत्य-

रूपं वा लोकं चाकाशं तज्जमनसिकारं च प्रतीत्योत्पद्यते चक्षुर्विज्ञानम्। तत्र चक्षुर्विज्ञानस्य चक्षुराश्रयकृत्यं करोति रूपमालम्बनकृत्यं करोति। आलोकोऽवभासकृत्यं करोति। आकाशमनावरणकृत्यं करोति। तज्जमनसिकारः समन्वाहरणकृत्यं करोति। असतामेषां प्रत्ययानां चक्षुर्विज्ञानं नोत्पद्यते। यदा तु चक्षुराध्यात्मिकमायतनमविकलं भवति। एवं रूपालोकाकाशतज्जमनसिकारश्चाविकलो भवति। ततः सर्व्वेषां समवायाच्चक्षुर्विज्ञानमुत्पद्यते। तत्र चक्षुषा नैव भवत्यहं चक्षुर्विज्ञानस्याश्रयकृत्यं करोमीति॥ एवं रूपस्यापि नैवं भवत्यहं चक्षुर्विज्ञानस्यालम्बनं कृत्यं करोमीति। आलोकस्यापि नैवं भवत्यहं चक्षुर्विज्ञानस्यावभासकृत्यं करोमीति। आकाशस्यापि नैवं भवत्यहं चक्षुर्विज्ञानस्यानावरणकृत्यं करोमीति। तज्जमनसिकारस्यापि नैवं भवत्यहं चक्षुर्विज्ञानस्य समन्वाहरणकृत्यं करोमीति। चक्षुर्विज्ञानस्यापि नैवं भवत्यहमेभिः प्रत्ययैर्जनितमिति। अथच सतामेषां प्रत्ययानां समवायात् चक्षुर्विज्ञानस्योत्पत्तिर्भवति॥ एवं शेषाणामिन्द्रियाणां यथायोगं करणीयम्। तत्र न कश्चिद्धर्म्मोऽस्माल्लोकात् परलोकं संक्रामति। अस्ति च कर्म्मफलप्रतिविज्ञप्तिर्हेतुप्रत्ययानामवैकल्यात्॥

तद्यथा भिक्षवः सुपरिशुद्धआदर्शमण्डलेमुखप्रतिविम्बकं दृश्यते। न च तत्रादर्शमण्डलेमुखं संक्रामति। अस्ति च मुखप्रतिविज्ञप्तिर्हेतुप्रत्ययानामवैकल्यात्। एवमस्माल्लोकान्न कश्चिच्युतो नाप्यन्यत्रोपपन्नोऽस्ति च कर्म्मफलप्रज्ञप्तिर्हेतुप्रत्ययानामवैकल्यात्। तद्यथा भिक्षवश्चन्द्रमण्डलं चत्वारिंशद्योजनशतमूर्द्धं व्रजति। अथच पुनः परीत्तेप्युदकभाजनेचन्द्रस्य प्रतिविम्बं दृश्यते। न च तस्योत्स्थानादूर्द्धं न भासंश्चुतं परीत्तउदकस्य भाजने संक्रान्तं भवति। अस्ति च चन्द्रमण्डले प्रतिविज्ञप्तिर्हेतुप्रत्ययानामवैकल्यात्॥

तद्यथाग्निरुपादानप्रत्यये सति ज्वलति, उपादानवैकल्यात् न ज्वलति। एवमेव भिक्षवः कर्म्मक्लेशजनितं विज्ञानवीजं तत्र तत्रोपपत्त्यायतनप्रतिसन्धौ मातुः कुक्षौ नामरूपाङ्कुरमभिनिवर्त्तयति॥

अस्वामिकेषु धर्म्मेषु अपरिग्रहेषु मायालक्षणस्वभावेष्वसमेष्वकृत्रिमेषु हेतुप्रत्ययानामवैकल्यात्। आध्यात्मिकः प्रतीत्यसमुत्पादः पञ्चभिः कारणैर्द्रष्टव्यः। कतमैः पञ्चभिर्न शाश्वततो नोच्छेदतो न संक्रान्तितः। परीत्तहेतुविपुलफलाभिनिर्वृत्तितः। तत्सदृशानुप्रबन्धतश्चेति। कथं न शाश्वततो यस्मादन्ये मारणान्तिकाः स्कन्धा अन्ये चौपपत्त्यंशिकाः स्कन्धाः। न चैव ये मारणान्तिकाः स्कन्धास्तत्र चौपपत्त्यंशिकाः अपि तु मारणान्तिकाः स्कन्धा निरुध्यन्ते। तस्मिन्नेव च समये औपपत्त्यंशिकाः स्कन्धाः प्रादुर्भवन्ति। अतो न शाश्वततो न च पूर्व्वनिरुद्धेषु मारणान्तिकेषु स्कन्धेषु औपपत्त्यंशिकाः स्कन्धाः प्रादुर्भवन्ति नाप्यनिरुद्धेषु। अपि तु मारणान्तिकाः स्कन्धा निरुध्यन्ते। तस्मिन्नेव च समये औपपत्त्यंशिकाः स्कन्धाः प्रादुर्भवन्ति तुलादण्डोन्नामावनामवत् चन्द्रविम्बप्रतिविम्बवत्। अतो नोच्छेदतः कथं न संक्रान्तितो विसदृशाः सत्त्वनिकायाः सभागतायां सत्यां जातिमभिनिवर्त्तयति। अतो न संक्रान्तितः परीत्तं कर्म्म क्रियते विपुलफलविपाकोऽनुभूयते। अतः परीत्तहेतुविपुलफलाभिनिर्वृ-

स्तितः कथं तत्सदृशानुप्रबन्धतः। यथा वेदनीयं विपाकोऽनुभूयते अतस्तत्सदृशानुबन्धत-श्चेति विस्तरः॥ ७॥

इत्याचार्य्यचन्द्रकीर्त्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
द्वादशाङ्गपरीक्षा नाम षड्विंशतितमं प्रकरणम्॥

---

यश्चैतं प्रतीत्यसमुत्पादं यथाभूतं सम्यक् पश्यति स न पूर्व्वान्तं प्रति सरति। नापरान्तं प्रति सरतीत्यादि सूत्रे पठ्यते। तत्र कतमः पूर्व्वान्तः कतमोऽपरान्तः कथं न प्रति सरतीति तद्व्युत्पत्त्यर्थमिदमारभ्यते। तत्र वर्त्तमानमात्मभावमपेक्षातीता आत्मभावाः पूर्व्वान्त इत्युच्यते। पूर्व्वो हि जन्मपरम्परांशः पूर्व्वान्तस्तन्न प्रतिसरति दृष्टिप्रकारैर्नालम्बते प्रतीत्यसमुत्पादस्य यथावदवस्थिततत्त्वदर्शनात्॥

नान्यथावस्थितं वस्तु (ह्य)न्यथाभिनिविशते।

तत्राष्टौ दृष्टयः पूर्व्वान्तमाश्रित्यान्यथा प्रवृत्तास्तद्यथा किन्वहमभूवमतीतमध्वानं नाभूवमतीतमध्वानं। अभूवं च नाभूवं च नैवाभूवन्नाभूवमिति। एताश्चतस्रो दृष्टयः पूर्व्वान्तं समाश्रिताः। अपरान्ता अपि चतस्र इत्याह। यास्ताः शाश्वतलोकाद्याः पूर्व्वप्रसङ्गेनोपवर्णितास्ता अपि पूर्व्वान्तं समुपाश्रिताः। तत्र यद्यपि पूर्व्वान्ता दृष्टिचतुष्टये ऽन्तरं दृष्टिचतुष्टयं चातिभासते तथापि तावन्मात्रविशेषमाश्रित्य पृथगुपादीयते तच्चोत्तरे व्याख्यास्यामः। तत्र शाश्वतो लोक इत्येतदभूवमतीतमध्वानमित्येतस्मान्नाभिविद्यते॥ अथवायं विशेषो यच्छाश्वतोलोक इत्येषा दृष्टिः सामान्येन पूर्व्वान्तमाश्रिता। अभूवमतीतमध्वानमित्येषात्वात्मन एव पूर्व्वान्तपरामर्शेन प्रवृत्तो न सामान्येनेति॥ एवमन्यास्वपि दृष्टिषु विशेषो वक्तव्यः। इत्येवं तावदष्टावेता दृष्टयः पूर्व्वान्तं समुपाश्रिताः॥ उक्तः पूर्व्वान्तस्तदालम्बिकाभिर्दृष्टिभिः सार्द्धमिदानीमपरान्त उच्यते। तत्र वर्त्तमानमात्मभावमपेक्ष्यभाविन आत्मभावोऽपरान्त इत्युच्यते। अपरं हि जन्म परम्परांशोऽपरान्तस्तं न प्रतिसरति॥ दृष्टिप्रकारैर्नालम्बते नालोच्यते प्रतीत्यसमुत्पादस्य यथावदवस्थिततत्त्वदर्शनात्॥

नान्यथावस्थितं वस्तु (ह्य)न्यथाभिनिविशते॥

तत्राष्टौ दृष्टयोऽपरान्तमालम्ब्यान्यथा प्रवृत्तास्तद्यथा—

दृष्टयो न भविष्यामि (भविष्यन्ति) किमन्येनागतेऽध्वनि।
भविष्यामीति (भविष्यन्तीति) चान्ताद्या अपरान्तं समाश्रिताः॥

इहापि दृष्टिद्वयोपादानोपलम्भनार्थं चतस्रस्त्वेता दृष्टयस्तद्यथा। किं नु भविष्या-म्यनागतमध्वानं न भविष्यामि नैव भविष्यामि नैवं भविष्यामि न च भविष्यामि। अना-गतमध्वानमित्येतास्तस्रो दृष्टयो ऽपरान्तं समाश्रिताः। किमेता एव च तेषां दृष्टयो ऽपरान्तं समाश्रिता नेत्याह। किन्तर्हि अपरा अपि चतस्रो विद्यन्ते। अन्ताद्या अपरान्तं समाश्रितास्तत्रान्ताद्यास्तस्रो दृष्टयः सामान्येनापरान्तमाश्रित्य प्रवृत्ताः। किं नु भविष्या-म्यनागतमध्वानमित्येतास्त्वात्मन एवापरान्तमाश्रित्य प्रवृत्ताइत्येवं दृष्टिचतुष्टयस्य विशेष इति बोद्धव्यम्॥ तत्राद्यस्य तावत् पूर्व्वान्तालम्बकस्य दृष्टिचतुष्टयस्य यथा न सम्भवस्तथा प्रतिपादयन्नाह॥

अभूमतीतमध्वानमित्येतन्नोपपद्यते।
यो हि जन्मसु पूर्व्वेषु स एव न भवत्ययम्॥

तत्र यत्र वातीतेषु जन्मसु बभूव यदि स एवायमधुना स्यात्तदायुक्तमस्य ग्रहीतुमभूवमह-मतीतमध्वानमिति। नचैतदेवं सम्भवति नित्यत्वप्रसङ्गात् नित्यस्य च संसरणानुपपत्तेः। एकगतिस्थस्यापि नानागतिसंगृहीतत्वप्रसङ्गात्॥

इह हि पूर्व्वं यदि नरकादिगतिका भूत्वा इदानीं कर्म्मवैचित्र्यान्मनुष्येषूपपन्न एवं कल्प येदहमेवासौ नारक आसमिति। तदस्य न युक्तम्। कथं हि नाम मनुष्यः सन्नारकादिकः स्यात्। यत्तर्हीदन्तथागतसूत्रे॥

अहमेव स तेन कालेन तेन समयेन मान्धाता नाम राजा चक्रवर्त्ती अभूवमिति तत् कथं वेदितव्यमिति॥ अन्यत्वप्रतिषेधपरं तद्वचनं नैकत्वप्रतिपादकमिति विज्ञेयम्। अतएव हि नान्यः स तेन कालेन तेन समयेनेति पठ्यते। यदि पुनः स एवायमिति पूर्व्वकस्य वाधुनातनस्य चैकत्वं स्यात् को दोषः स्यात्। उक्तस्तावदत्र दोषोनित्यत्वं स्यादिति तथापि भूय उच्यते॥

स एवात्मेति तु भवेदुपादानं विशिष्यते।

यदि स एव पूर्व्वक आत्मा नेदानीं स्यात्तदा दोषोपादानस्य पञ्चस्कन्धस्य लक्षणस्य विशेषो न स्यात् उपादातुरविशेषात्। पूर्व्वावस्थायामिव न चैवमुपादानविशेषोऽस्यात्मनः किन्तर्हि विशिष्यते। एषोपादानमुपादातुः कर्म्मभेदात् कारकभेदाच्च। ततश्चोपादानविशेषात् स एवाय-मात्मेति न युज्यते। अथ मन्यसे विशिष्यतामुपादानमात्मात्वेकएवेति। अत आत्मनोविनि-श्चिष्टत्वादभूमतीतमध्वानमित्येतद्भविष्यत्तव उच्यते॥

उपादानविनिर्मुक्त आत्मा ते कतमः पुनः।

यदि ह्यन्यदुपादानमन्यश्चात्मा स्यात्तदोपादानविशेषेऽप्यात्मनोऽविशेषात् स्यादेतदेवं । न चैतद्भेदेन दर्शयितुं शक्यमयमसावात्मा इदमस्योपादानमिति । उपादानाप्रसङ्गात् मृतग्रहण-प्रसङ्गात् । अस्य चैवमुपादानविनिर्मुक्त आत्मा दर्शयितुम् न शक्यते तदोपादानविशेषेऽपि आत्मा विशेष इति न शक्यते कल्पयितुम् । अथापि कश्चित् परिकल्पयेत् सत्यमुपादान-विनिर्म्मुक्त इत्येवं न संभवति । किं उपादानमेवात्मत्वेन परिकल्प्येत इति । एतदपि न युक्तमिति प्रतिपादयन्नाह ॥

उपादानविनिर्म्मुक्तो नास्त्यात्मेति कृते सति ।
स्यादुपादानमेवात्मा नास्ति वात्मेति वा पुनः ॥

अथ तावदुपादानमेवात्मा न सम्भवति तथा प्रतिपादयन्नाह च ॥

कथं हि नामोपादानमुपादाता भविष्यति ।

तत्र यदेतत्पञ्चोपादानस्कन्धाख्यमुपादानं तत्प्रतिक्षणमुत्पद्यते च विनश्यति च न चैव-मात्मा प्रतिक्षणमुत्पद्यते च विनश्यति च आत्माभिन्नन्यस्तत्वान्यत्वादिना च नित्यानित्य-त्वेनाप्यशक्य एव वक्तुमनेकदोषप्रसङ्गात् । नित्यत्वेह्यात्मनः शाश्वतवादः स्यादनित्यत्वेवोच्छेद-वादप्रसङ्गः । तच्च तदुभयशाश्वतोच्छेदाख्यं महानर्थकरमिति एवात्मेति तन्न युज्यते ॥

अपि च

कथं हि नामोपादानमुपादाता भविष्यति ।

इहोपादीयत इत्युपादानकर्म्म तस्य चावश्यमुपादात्रोपार्जकेन भवितव्यम् । तस्यचोपा-दानस्य य आत्मत्वमिष्यते । तत्रोपादानमेवोपादानत्वेऽपि विद्यते । ततश्च कर्तृकर्म्मणोश्चैक्ये सति छेत्तृच्छेत्तव्यघटकुम्भकाराग्नीन्धनादीनामप्यैक्यं स्यात् न चैतद्दृष्टं युक्तं चेतिपादयन्नाह ॥

कथं नामोपादानादुपादाता भविष्यतीति ।

अपित्वत्यन्तासंभव एवास्य पक्षस्येत्यभिप्रायः ॥

अत्राह । सत्यमुपादानमात्रमात्मा न युज्यते किं तर्हि उपादानव्यतिरिक्त एवात्मा भवि-ष्यति । एतदपि न युक्तं किं कारणं यस्मात् ॥

अन्यः पुनरुपादातुरात्मा नैवोपपद्यते ।
गृह्यते ह्यनुपादानो यो ह्यन्यो न च गृह्यते ॥

यद्युपादानं आत्मा व्यतिरिक्तः स्यादृगृह्येत स उपादानव्यतिरिक्तो घटादिवत्पटः। न वै गृह्यते। तस्मादुपादानव्यतिरिक्तोऽपि नास्ति अनुपादान उपादानव्यतिरेकेणागृह्यमाणत्वात् खपुष्पवदित्यभिप्रायः। इदानीं यथोपपादितमर्थं निगमयन्नाह॥

एवं नान्य उपादानान्न चोपादानमेव सः।

आत्मानेत्यनुपादानः। अथ स्याद्यद्यात्मा उपादानस्वरूपो न भवत्यनुपादानोपादातुरे-कत्वप्रसङ्गादुदयव्ययप्रसङ्गाच्च। स ह्यन्योऽपि न भवत्युपादानपक्षाभेदेन प्रसङ्गात्। नचाप्यनु-पादानं उपादाननिरपेक्षस्य ग्रहणप्रसङ्गात्। एवं तर्हि नास्त्यात्मभ्यस्तु उच्यते नानापि नास्त्येष निश्चयः। योहि नाम स्कन्धानुपायः प्रज्ञप्यते स कथं नास्तीति स्यात्॥ न ह्यविद्य-मानो वन्ध्यातनयः स्कन्धानुपादाय प्रज्ञप्यते। कथं सत्युपादाने उपादाता नास्तीति युज्यते॥ तस्मान्नास्तित्वमपि अस्य न युज्यते, तस्मान्नास्त्यात्मेति निश्चयोऽप्येष नापपद्यते। अस्य त्वात्मनो व्यवस्थानं विस्तरेण मध्यमकावतारादवसेय इहापि च पूर्व्वमवस्थानस्थानेषु कुतो व्यवस्थेति न पुनरिह तदव्यवस्थाने यत्न आस्थीयते। एवं तावदभूवमतीतमध्वानमित्येषा कल्पना नोपपद्यते। इदानीं नाभूवमतीतमध्वानमित्येतदपि नो यथा नोपपद्यते तथा प्रति-पादयन्नाह॥

नाभूमतीतमध्वानमित्येतन्नोपपद्यते।

यदि पुनः पूर्व्वकादात्मनोऽस्या एषु नेति नास्यात्मनोऽन्यत्वं स्यात्तदानीं नाभूमतीतमध्वा-नमिति स्यात्। न चैतदेवं सम्भवति। तस्यात्माभूममतीतमध्वानमित्येतन्नोपपद्यते। यदि पुनः पूर्व्वकादात्मनोऽस्यान्यत्वं स्यात् को दोष इति उच्यते॥

यदि ह्ययं भवेदन्यः प्रत्याख्यायापि तद्भवेत्।

तथैव च संतिष्ठेत्तत्र जायते वा मृतः यदि ह्ययमधुनातन आत्मा पूर्व्वकादात्मनोऽन्यः स्यात्तदा तं पूर्व्वकमात्मानं प्रत्याख्याय परित्यज्य तन्निरपेक्ष्य तद्धेतुक एव स्यात् किं चान्यत्। तथैव संतिष्ठेत्। तत्र यदि पूर्व्वकादात्मनोऽस्यान्यत्वं स्यात्तदान्यत्वघटोत्पादे पटाविनाशवत्॥ पूर्व्वस्यात्मनोत्तरस्मिन्नप्यात्मनि समुत्पद्यमानेऽप्यनिरोधः स्यात् अनिरुद्धत्वाच्च यत्र पूर्व्वव-देवमनुष्यादिजन्मसूपपन्नाय न वर्णसंस्थानादिना पूर्व्वमुपालभ्यमानस्तेनैवप्रकारेण तथैव स तत्रावतिष्ठते। पूर्व्वत्र वा मृत एवेहोत्पद्यते। न चैष सम्भवोऽस्ति यदस्य मनुष्यभूतस्य पूर्व्वकादेवात्मा तथैवावतिष्ठेतेति। तस्मान्नाभूममतीतमध्वानमित्येतन्नोपपद्यते। अत्राह॥ तत्र यदुक्तम्॥

यदि ह्ययं भवेदन्यः प्रत्याख्याय भवेदिति।

यदि पुनः पूर्व्वकमात्मानं प्रत्याख्याय स्यात्तदा तस्य पूर्व्वकस्यात्मनस्तत्रनस्तत्वादिदवान्यस्यैव चोत्पादनात् पूर्व्वकस्यात्मन उच्छेदः स्यात्। तस्मिंश्चात्मन्युच्छिन्नकर्म्मणामदत्तफलानामेवाश्रयविच्छेदेन विच्छेदाद्धोक्तुश्चाभावान्नाश एव स्यात्। अथ पूर्व्वकेनात्मनाकृतस्य कर्म्मण उत्तरेणात्मना फलपरिभोगः परिकल्प्यते। तथाप्यनेन कृतस्य कर्म्मणः फलस्यान्येनोपभोगः स्यात्। ततश्चाकृताभ्यागमभयं स्यात् कर्म्माकृतेयं यदीत्येवमाद्यनिष्टमापद्यते। अपि च। यद्ययमात्मा पूर्व्वकादात्मनोऽन्य एवात्मात्रोपपन्नः स्यात्तदा पूर्व्वमभूत्वा पश्चादुत्पन्न इति स्यात्। न चैतद् युक्तमिति प्रतिपादयन्नाह।

नाप्यभूत्वा समुद्भूतो दोषो ह्यत्र प्रसज्यते।
कृतको वा भवेदात्मा सम्भूतो वाप्यहेतुक इति॥

यदि ह्यात्मा पूर्व्वमभूत्वा पश्चादुत्पन्नः स्यात्तदा कृतक एवात्मा स्यान्न च कृतक आत्मेष्यते अनित्यत्वप्रसङ्गात् व्यतिरिक्तस्य च तन्निष्पादकस्य कर्त्तुरभावात्। कुतः कृतकत्वादात्मने योज्यते। कृतकेवात्मनि परिकल्प्यमाने आदिमान् संसारः स्यादेव पूर्व्वसत्त्वस्य प्रादुर्भावश्च। न चैतदेवम्। तस्मान्नकृतक आत्मा अपि च सम्भूतोवाप्यहेतुकः अभूत्वाप्यात्मा समुत्पद्यमानो निर्हेतुक एवोपपद्यते। पूर्व्वा हि आत्मनोऽस्तीति। अकृतकोनिर्हेतुकः स्यात् वा शब्दो विकल्पे कृतको वा भवेदात्मा यदि वा नाभूतमतीतमध्वानमित्येतन्नाभ्युपेयम्। संभूतोवाप्यहेतुको यदि वा नाभूमतीतमध्वानमित्येतन्नोपपद्यत इत्युपगम्यताम्। इदानीं यथोपवर्णितमेवार्थन्निगमयन्नाह। एवं दृष्टिरतीते या नाभूमतीतमध्वानमिति च या दृष्टिरेषापि नैवोपपद्यते। एतद्द्वयस्याभावाद्योभयमपि नोपपद्यते किं कारणम्। यस्माद्द्वयं यत् तत्साम्यभूतादुभयमिति कल्प्यते। एकैकस्य च पृथग् पृथक् भावात्। कुतस्तत् समाहार इत्युभयमपि न संभवति उभयस्याभावात् कुतस्तत् प्रतिषेधेनोभयं भविष्यतीति। तस्मान्नैवभूवं ननाभूवमित्येतदपि नोपपद्यते। तदेवं पूर्व्वान्तंसमाश्रितस्य दृष्टिचतुष्टयस्यासम्भवमनुभाव्येदानीमपरान्तसमाश्रितस्य प्रतिषेधमाह॥

अध्वन्यनागते किन्नु भविष्यामीति दर्शनम्।

नभविष्यामि चेत्तत्तदतीतेनाध्वनासमं यथैव ह्यतीतेऽध्वनि दृष्टिचतुष्टयं निषिद्धं नैवमनागतेऽप्यध्वनि दृष्टिचतुष्टयं निषेधनीयमुक्तपा(०)पपरिवर्त्तकेन। तद् यथा—

अध्वन्यनागते किन्नु भविष्यामीत्यसङ्गतं।
एष्यज्जन्मनि यो भावी स एव न भवत्ययम्॥

इत्येवमादिना सर्व्वं समं योज्यं एकत्वप्रतिषेधएवमन्यत्वप्रतिषेधेऽपि समं योज्यम्। नास्यामनागतकाल इत्येतन्नोपपद्यते॥

एष्यज्जन्मनि यो भावी ततोऽन्योऽयं भवत्यहम् ।

इत्येवमादिना पूर्व्वश्लोकपादपरिवर्त्तकेन इदानीं पूर्व्वान्तं समाश्रितस्य शाश्वतादिदृष्टि-चतुष्टयस्य प्रतिषेधार्थमाह ॥

स देवः (स;) मनुष्यश्चेद् भवति शाश्वतं ।
अनुत्पन्नश्च देवः स्याज्जायते न हि शाश्वतम् ॥

इह कश्चिन्मनुष्यगतिस्थः कुशलं कर्म्म कृत्वा देवगतिं गच्छति । यत्र यदि स एव देवः स एव मनुष्य इति । एवमुभयोरैक्यं स्यात्तदा शाश्वतं स्यान्न चैतदेवं यद्धि एव मनुष्यो भवेदिति । अतोनास्ति किञ्चिच्छाश्वतं । अपि च शाश्वतवादे सत्यनुत्पन्नश्च देवः स्यात् किं कारणं यस्माज्जायते न हि शाश्वतम् । यद्धि वस्तु शाश्वतं तद्विद्यमानत्वान्नैवजायते । ततश्चानुत्पन्नादेव युज्यत इति । एवं तावच्छाश्वतं न युज्यते । इदमशाश्वतमपि यथा न सम्भवति तथा प्रतिपादयन्नाह ॥

देवादन्यो मनुष्यश्चेद् शाश्वतमतो भवेत् ।
देवादन्यो मनुष्यश्चेत् सन्ततिर्नोपपद्यते ॥

यदि ह्यन्यो देवोऽन्यश्च मनुष्यः स्यात्तदा पूर्व्वकस्य मनुष्यस्यात्मनस्तत्र नैष्ठत्वादिहवान्य-स्मैवोत्पादात् स पूर्व्वको मनुष्यात्मा तत्र विनष्ट इत्यशाश्वतं स्यात् तत् सन्तानानुवृत्त्या नाशा-श्वतमिति चेदुच्यते ।

देवादन्यो मनुष्यश्चेत् सन्ततिर्नोपपद्यते ।

यदि देवादन्यो मनुष्यो भवेत्तदा यथा निम्बस्य नाम्रतरुसन्तानो भवत्येव मनुष्यस्य देव एकसन्तानपतिः स्यात्ततश्च पूर्व्वकस्य विनाशादशाश्वतमेव भवेत् । अथ वा यदि देवादन्यो मनुष्यो भवेत्तदा सन्तानानुवृत्तिर्न स्यादस्ति चेयं सन्तानानुवृत्तिर्देवस्य मनुष्य एक सन्तान-पतित इति । तस्मात् सन्तानाभावप्रसङ्गात् । देवादन्योमनुष्यो न भवति । यतश्चैवमतत् शाश्वतमपि नास्ति । इदानीं शाश्वताशाश्वतप्रतिषेधार्थमाह ॥

दिव्यो यद्येकदेशः स्यादेकदेशश्च मानुषः ।
अशाश्वतं शाश्वतञ्च भवेत्तच्च न युज्यते ॥

यद्ययं मनुष्यांशेन न मनुष्यतां विजह्यादंशेन विहाय मनुष्यतां देवात्मभावमुपाददीत्तदा एकदेशस्य नाशाश्वतं स्यादेकदेशस्य वावस्थानाच्छाश्वतं स्यात् एतच्चायुक्तम् । यद्येकस्य दिव्य-देशगतिसंगृहीत एकदेशः स्यादेकदेशश्च मनुष्यः स्यात्तस्माच्छाश्वतं वा शाश्वतं च एतदुभयं नोपपद्यते । इदानीं न शाश्वतं नैवशाश्वतं दृष्टिप्रतिषेधार्थमाह ॥

अशाश्वतं शाश्वतं च प्रसिद्धमुभयं यदि ।
सिद्धेन शाश्वतं कामं नैवाशाश्वतमित्यपि ॥

यदि शाश्वतं किञ्चिद् वस्तु स्यात्तदा पश्चादशाश्वतदर्शनान्नैव शाश्वतं नाशाश्वतमिति स्यात् । एवं यदि किञ्चिदशाश्वतं स्यात्तदा तस्य पश्चाच्छाश्वतापत्तितानाशादशाश्वतमिति स्यात् । यदा तु शाश्वताशाश्वतमेवाप्रसिद्धं तदा कुतस्तत् प्रतिषेधेन चैवशाश्वतं नाशाश्वतं न स्यादिति । तस्मादेतदप्ययुक्तम् । अथ स्यादनादिजन्ममरणपरम्पराप्रवृत्तमविच्छिन्नक्रमं संसारप्रबन्धमुपरभ्यशाश्वतमात्मानं परिकल्पयामोऽस्त्यसौ शाश्वतः कश्चित्पदार्थो योहिनामैवमनादिमसंसारपरिभ्रमं नाद्याप्युपलभ्यत इति । उच्यते । एतदपि नोपपद्यते किं कारणं योहि नाम –

कुतश्चिदागतः कश्चित् किंचिद्गच्छेत् पुनः क्वचित् ।
यदि तस्मादनादिस्तु संसारः स्यान्न वास्ति सः ॥

यदि हि संस्काराणामात्मनो वा कुतश्चिद् गत्यन्तरमागमनं स्यात् ततश्च गत्यन्तरात् पुनः क्वचित् भ्रमणं स्यात् तदानीमनादिसंसारः स्यान्न च कुतश्चित् कस्यचिदागमनं सम्भवति । नित्यस्य वा नित्यस्य वा आगमनानुपपत्तेर्नैवावीजः पुनः कस्यचित् क्वचिद्गमनं संभवति नित्यस्य वा ऽनित्यस्य वा गमनानुपपत्तेः । यदा चैवं न संभवति तदा कुतो जन्ममरणपरम्परया इति दीर्घत्वेनाद्यनुपलम्भादनादिमान् संसारः स्यात् । संभवितुरभावात् कुतोऽनादिमत्त्वमादिमत्त्वेकसंसारस्य संभवेत् । यदा च न संभवति यदा यदुक्तमस्त्यसौ शाश्वतः कश्चित्पदार्थो योहि नामैवमनादिमति संसारे परिभ्रमन्नद्यापि उपलभ्यत इति तन्न युक्तम् । अतश्चैवं यथोदितन्यायेन ॥

नास्ति चेच्छाश्वतः कश्चित् को भविष्यत्यशाश्वतः ।
शाश्वताशाश्वतश्चापि द्वाभ्यामाभ्यां तिरस्कृतः ॥

यदा चैवं शाश्वत एव पदार्थो न संभवति तदा कस्यचिद्गमनाशाश्वतः स्यात् शाश्वताशाश्वतानुपलम्भाच्च कुतो नोभयमिति तस्मादेवं शाश्वतादिदृष्टिचतुष्टयं पूर्वान्तसंसारस्य न संभवति । इदानीमन्तोऽनन्तादिचतुष्टयमपरान्ते यथा न संभवति तथा प्रतिपादयन्नाह ॥

अन्तवान् यदि लोकः स्यात् परलोकः कथं भवेत् ।

यदि ह्यन्तवान् विनाशादूर्द्धं पूर्वलोको न स्यात् तदा परलोको न स्यात् अस्ति च परलोक इति नोपपद्यते । अथाप्यनन्तवाल्लोँकः स्यात्तदानीमपि परलोकः कथं भवेत् नैव परलोकः स्यादित्यभिप्रायः । न च परलोको नास्ति । अतः परलोकसद्भावादनन्तवानपि

लोको न भवति। इदानीमन्तवत्त्वमनन्तवत्त्वं वोभयमेतल्लोकस्य यथा न संभवति तथा प्रतिपादयन्नाह॥

स्कन्धानामेष सन्तानो यस्माद्दीपार्चिषामिव।

तस्मान्नानन्तवत्त्वं च युज्यते पूर्व्वोत्तरहेतुफलभावसंबन्धानैरन्तर्य्यविच्छिन्नक्रमवर्त्ती यस्मादयम्प्रदीपवत्। प्रतिक्षणविनाशी स्कन्धसन्तानः प्रवर्त्तते तस्माद्धेतुफलप्रवृत्तिदर्शनानामनन्तवत्त्वं च युज्यते कथं कृत्वा पूर्व्वे यदि च भज्येरन्नुत्पद्येरन् नचाप्यमी स्कन्धाः स्कन्धाप्रतीत्यमानेऽथ लोकोऽन्तभाग् भवेत्। यदि पूर्व्वमनुष्यस्कन्धा नश्येयुस्तांश्च प्रतीत्योत्तरदेवमत्युपपत्तिसंगृहीतानोपपद्येरंस्तदान्तवान् लोको भवेत् तैलवर्त्तिक्षयनिरुद्धप्रदीपवत्। उत्तरात्माभावोपादानान्तेनास्यन्तवत्त्वं। पूर्व्वे यदि न भज्येरन्नुत्पद्येरन् न चाप्यमी स्कन्धाः स्कन्धाप्रतीत्यमान् लोकोऽनन्तो भवेदथ। अथ यदि पूर्व्वकाः स्कन्धा न नश्येयुः। तान् प्रतीत्योत्तरफलभूताः स्कन्धा नोपपद्येरन् तदानन्तोऽविनाशी लोकः स्यात् स्वरूपादप्रच्युतत्वात्। यदा चतुर्थकाः स्कन्धा निरुध्यन्ते तद्धेतुकाश्चापरे स्कन्धा उत्तरकालं जायन्ते तदा पूर्व्वकानामवस्थानात् कुतोऽनन्तवत्त्वं संसारस्य स्यात्। इदानीं तृतीयमुभयपक्षभावं प्रतिपादयन्नाह॥

अन्तवादेकदेशश्चेदेकदेशत्वेनान्तवान् स्यादन्तवाननन्तश्च लोकस्तच्च युज्यते। यदि हि कस्यचिदेकदेशस्य विनाशः स्यात् एकदेशस्य च गत्यन्तरगमनं स्यात्। स्यात्तदानीमन्तवांश्च लोकोऽन्तवांश्च न चैतदेवं सम्भवति। यदैकदेशोनश्यत्येकदेशं न नपश्यतीति। अतोऽन्तवांश्चानन्तवांश्च लोक इति न युज्यते। कस्मात् पुनरेकदेशस्य विनाश एकदेशस्य वावस्थानं न युज्यत इति प्रतिपादयन्नाह॥

कथं तावदुपादातुरेकदेशो विनंक्ष्यते।
ननंक्ष्यते चैकदेश एवं चैनं न युज्यते॥

इहैकदेशस्य विनाशस्य वावस्थानं परिकल्प्यमानं यदि वा उपादानस्य तत्र यदि तावदुपादातुरेकदेशस्य विनाश एकदेशस्य वावस्थानं परिकल्प्यते तन्न युज्यते किं कारणं यस्मात् कथं तावदुपादातुरेकदेशोविनंक्ष्यते ननंक्ष्यते चैकदेशः नैव ह्यत्र काचिदुपपत्तिरस्ति यया एकदेशस्य विनाशमेकदेशस्य चाविनाशं परिकल्पयिष्यामः। अतएवोपपत्तिमपश्यन्नाचार्य्य आह। एवं चैतं न युज्यत इति। अथ वा उपादाता हि नामात्मा स च स्कन्धेषु पञ्चधा मृग्यमाणो न संभवति। यश्च न सम्भवति तस्य कथमेकदेशो विनंक्ष्यते एकदेशश्चनंक्ष्यते अतएवाह। एवं चैतं न युज्यत इति। अथ वा यद्युपादातुरेकदेशोनचेदेकदेशश्च न नश्येत्तदा एकस्य वोपादातुर्दैवत्वमंशेनान्येनमनुष्यत्वं स्यान्न चैतदिष्यत इत्याह। एवं चैतन्न युज्यत इति। एवं तावदुपादातुरनन्तवत्त्वं न युक्तमिति। इदानीमुपादानस्यापि न संभवति तथा प्रतिपादयन्नाह।

उपादानैकदेशश्च कथं नाम विनंक्ष्यते।
नंनंक्ष्यते नैकदेशो नैतदप्युपपद्यते॥

उपादातापि चेदेतदपि वाच्येयं तदेवमुभयदर्शनासम्भवं प्रतिपाद्येदानीं नोभयमपि न सम्भवति तथा प्रतिपादयन्नाह।

अन्तवच्चाप्यनन्तं च प्रसिद्धमुभयं यदि।
सिद्धं नैवान्तवत्कामं नैवानन्तवदित्यपि॥

प्रतिषेधस्य वस्तुनोऽसम्भवात् प्रतिषेधस्याप्यसम्भव इति। अतोऽन्तवत्त्वे चोभयस्मिन्नप्रतीकस्य प्रतिषेधेन नैवान्तवानानन्तवाल्लोँक इति दृष्टिसम्भवः स्यादिति एवं तावत् सावृतं प्रतिबिम्बाकारमुपादानं वाप्युपेत्यापि शाश्वतादिदृष्टिसम्भवं प्रतिपाद्येदानीं सर्व्वथाभावस्वभावानुपलम्भेन बन्ध्यापुत्रस्य श्यामगौरतादिवच्छाश्वतादिदृष्टिसम्भवं प्रतिपादयिषुराह।

कथं वा सर्व्वभावानां शून्यत्वाच्छाश्वतादयः।
क्व कस्य कतमाः कस्मात् संभविष्यन्ति दृष्टयः॥

इह सर्व्वभावानां प्रतीत्यसमुत्पन्नत्वाच्छून्यत्वं सकलेन शास्त्रेण प्रतिपादितव्यं ततश्च सर्व्वभावानां शून्यत्वात् कतमास्ताः सर्व्वभावबाह्याः शाश्वताद्या दृष्टयो भविष्यन्ति। याः कश्चिद् ग्रहीष्यन्ति ततस्तं निराकरणमारप्स्यामहे। यथा किञ्चालम्बनं यत् सर्व्वभावान्तर्गतं तन्न यत्रैता दृष्टय उत्पत्स्यन्ते। यत्रैवानिवारयिष्यामः। कतमश्चासौ भावः पुद्गलो वा सर्व्वभावबाह्यो यस्यैता दृष्टय उत्पत्स्यन्ते यं दृष्टिभ्यो निवारयिष्यामः। किं वा दृष्टीनामुत्पत्तिकारणमालम्बननिमित्तं सर्व्वभावबाह्यं यस्मान्निमित्तादुत्पद्यमानाः शाश्वतादिकाः दृष्टीर्वारयिष्यामः। सर्व्वेषामेव हि पदार्थानां सर्व्वान्तर्गतत्वाच्छून्यत्वं शून्यत्वाच्च सर्व्व एव हि ते पदार्था नोपलभ्यन्त इति।

क्व कस्य कतमाः कस्मात् सम्भविष्यन्ति दृष्टयः।

नैव काश्चिन्नैव क्वचिन्नैव कस्यचिन्नापि केनचिदनेन सम्भविष्यन्तीत्यभिप्रायः। असम्भवे च सत्यासां परिकल्पनैव नोत्पद्यत इत्ययुक्ता एतैता दृष्टयः। तदेवम्—

सर्व्वदृष्टिप्रहाणाय यः सद्धर्ममदेशयत्।
अनेकस्यामुपादाय तन्नमस्यामि गौतमम्॥

तत्र संसारनिर्व्वाणप्रहाणाधिगमोपलम्भप्रपातपतनं सन्धारणाद्धर्म्मसतामार्य्याणां कृतकार्य्याणां धर्म्मः सद्धर्म्मः यदि वा शोभनो धर्म्मः सद्धर्म्मः सकलसंसारदुःखक्षयकरत्वेन प्रशंसनीयत्वात् । तत् सद्धर्म्ममनिरोधमनुत्पादमनुच्छेदमशाश्वतमनेकार्थमनानार्थमनागममनिर्गमं प्रपञ्चोपशमं शिवं प्रतीत्यसमुत्पादसंज्ञया हि देशितवान् सर्व्वदृष्टिप्रहाणार्थं जगतामनुकम्पामुपादाय महाकरुणामेवाश्रित्य प्रियैकपुत्राधिकतरप्रेमपात्रसकलत्रिभुवनजनो न लाभसत्कारप्रत्युपकारादिलिप्सया अहं नमस्यामीतिस्तत्तरमद्वितीयं शास्तारं किं नामधेयं गौतमं परमर्षिगोत्रसम्भूतमित्यर्थः । यथोक्तमार्य्यशालिस्तम्भसूत्रे । आर्य्यमैत्रेयेण महाबोधिसत्त्वेन य इमं प्रतीत्यसमुत्पादमेवं यथाभूतं सम्यक् प्रज्ञया सततसमितमजीवं निर्जीवं यथावदविपरीतमभूतकृतमसंस्कृतप्रतिघमनावरणं शिवमभयमनोहार्य्यमव्ययमत्युपशमस्वभावं पश्यति । असंस्कृतस्तु व्यतिरिक्ततोऽसारतागन्ततः स्वल्पतोऽघताऽनित्यतो दुःखतः शून्यतानात्मतः न स पूर्व्वान्तं प्रतिसरति । किन्वहमभूवमतीतेऽध्वनि आहोस्विन्नाभूमतीतेऽध्वनि कोन्वहमभूवमतीतेऽध्वनि कथमन्वहमभूवमतीतेऽध्वनि । अपरान्तं वा पुनर्न प्रतिसरति किं चाहं भविष्याम्यनागतेऽध्वनि आहोस्विन्न भविष्याम्यनागतेऽध्वनि कोऽनुभविष्याम्यनागतेऽध्वनि कथं नुऽभविष्याम्यनागतेऽध्वनि प्रत्युत्पन्नं वा पुनर्न प्रतिसरति । किं स्विदं कथं स्विदं क्व सन्तः क्व भविष्यामः । अयं सत्त्वः कुत आगतः स इतश्च्युतः । कुत्र गमिष्यतीति । यानीकेषां श्रमणब्राह्मणानां पृथक् लोकदृष्टिगतानि भविष्यन्ति । तद्यथा आत्मवादप्रतिसंयुक्तानि जीववादप्रतिसंयुक्तानि कौतुकमङ्गलप्रतिसंयुक्तानि तान्यस्य तस्मिन् समयप्रहीणानि भवन्ति परिज्ञातानि समुच्छिन्नमूलानि तालमस्तकवदनाभासगता । आयत्यामनुत्पादनिरोधधर्म्माणि ॥ अथ खल्वायुस्मन् शा(रि)लिपुत्रमैत्रेयस्य बोधिसत्त्वस्य महासत्त्वस्य भाषितमभिनन्द्यान्माद्योत्थायासनात् प्रक्रान्तास्ते भिक्षव इति ॥

इत्याचार्य्यचन्द्रकीर्त्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
दृष्टिपरीक्षा नाम सप्तविंशतितमं प्रकरणं समाप्तम् ।

समाप्तं चेदं मध्यमकशास्त्रं सकललौकिकलोकोत्तरप्रवचननीतनेयार्थव्याख्यान-
नैपुण्यविशारदं श्रावकप्रत्येकबुद्धानुत्तरसम्यक्सम्बुद्ध-
बोधिमण्डासनदायकमिति ॥

शुभम् ॥

ये धर्म्मा हेतुप्रभवा हेतुस्तेषां तथागतः ।
ह्यवदत्तेषां यो निरोध एवम्वादी महाश्रमणः ॥



## सम्पादकोक्तिः ।



गत्वा तिव्वतसंज्ञकं जनपदं हिमैरगम्यं परैः
भाषां तिव्वतवासिनां हि गहनां ज्ञात्वा धिया सूक्ष्मया ।
कृत्वा बौद्धपुरोहितैश्च महतीं मैत्रीं परां कौशली
उद्धाराय ततः प्रयत्नमकरोद् बौद्धोक्तशास्त्रस्य यः ॥

आहृत्य बौद्धजलधेर्विविधानि रत्नान्य-
भ्येत्य यः कृती सुतः खलु जन्मभूमेः ।
तेषां प्रभा-वितरणाय धरित्री-मध्ये
सर्व्वात्मना सततमातनुते प्रयासम् ॥

वङ्गानां पूर्व्वभागेष्वचलचयवृते चट्टगङ्गप्रदेशे
ग्रामेऽप्यालमपुरनाम्नि बहुभिः शिष्टैः समालङ्कृते ।
जातः सद्वैद्यवंशे बहुजनविदिते श्रीशरच्चन्द्रदासः
यो बौद्धग्रन्थराजिप्रकटनविधये संसदं सोऽन्वतिष्ठत् ॥

अस्यां सभायां बहवः सदस्याः
या शोभते भारतराजधान्याम्* ।
शिक्षा-नियन्ता† ननु वङ्गभूमेः
प्रसादमत्रातनुते यथेष्टम् ॥

गुणानुरागी सहि वङ्गशास्ता‡
शास्त्रप्रचाराय सदस्यमुख्याम् ।
आदिश्य वित्तं खलु राजकोषात्
गृह्णाति नित्यं बहुसाधुवादम् ॥

---

* Calcutta. † Director of Public Instruction, Bengal.
‡ Lieutenant Governor of Bengal.

आङ्गन्ध्याः पश्चिमे तीरे नवद्वीपेतिविश्रुते ।
स्थाने कृतनिवासोऽहं यदविमलकुलोद्भवः ॥

श्रीशरच्चन्द्रशर्म्माऽस्मि शाम्भवे विहितश्रमः ।
अध्यापकः समभवं पूर्व्वं विद्यालयेऽत्र वै ॥

नगरे, बौद्धशास्त्राणां प्रकाशसमितौ ततः ।
ग्रन्थसम्पादनार्थन्तु विनियुक्तोऽस्मि साम्प्रतम् ॥

आर्य्यनागार्ज्जुनेनेह यानि सूत्राणि चक्रिरे ।
शून्यवादं समालम्ब्य तेषां विवृतये पुरा ॥

वृत्तिर्माध्यमिका नाम आचार्य्यचन्द्रकीर्त्तिना ।
विहिता या, यथाशक्ति मया सम्पाद्यते तु सा ॥

अस्यां यत् स्खलनं सन्तः शोधयन्तु कृपालवः ।
क्षमस्विति, मया तेभ्यः साम्प्रतं क्रियतेऽञ्जलिः ॥

खृष्टाब्देऽस्य शैलनन्दे वसुचन्द्रमिते तथा ।
जुनाख्ये मासि ग्रन्थस्य मुद्रा सम्पूर्णतां गता ॥

इति शास्त्री-इत्युपनामकेन श्रीशरच्चन्द्रशर्म्मणा सम्पादिता
मध्यमकवृत्तौ सम्पादकोक्तिः
समाप्ता ॥